# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




२९ वर्षे
१ अङ्कः




ज्येष्ठपूर्णिमा, वै० सं० २०३१
जून, १९७४ ई०

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य त्रैमासिकी अनुसन्धानपत्रिका

आर्यमिश्रा

सूर्योदये सरोजमिव भवत्सु निवेदने हृदयं विकचीभवति यदस्माकं विश्वविद्यालयतो द्वाचत्वारिंशदुत्तरैकोनविंशतिशततमख्रैस्ताब्दतोऽद्यावधि निष्प्रत्यूहं प्रकाशमाना त्रैमासिकी विविधविधगवेषणाऽनुक्रमणिका-समीक्षा-काव्यभाषण-चरितशास्त्रसिद्धान्ताद्यनेकलेखभूषिता निरवच्छिन्नसारस्वतरसायननिदानं निखिलवाङ्मयपीयूषप्रस्थानं प्रत्यब्दं यथाकालं पल्लविता पुष्पिता च 'सारस्वतीसुषमा' शोधपत्रिका पारेसमुद्रमभिचाकशीति ।

देशे विदेशे च प्रतिविश्वविद्यालयं प्रतिविद्यापीठं प्रतिमहाविद्यालयं प्रतिविद्यालयं प्रतिपाठशालं प्रतिग्रन्थालयं प्रतिप्रकाशनं प्रतिसंस्थानं प्रतिसभं चास्याः सारस्वत्याः सुषमायाः सङ्ग्रहो नूनं ननु सख्यावतां पारेसङ्ख्यं प्रमोदोदयाय सर्वथा सर्वदा सर्वत्र सर्वतः पर्याप्तं प्रकामं प्रभूतमलमिति सप्रश्रयं यथायथं च निवेदयितुं शक्यत इति श्रीमत्सु प्रार्थनमभ्यर्थनं च ।

१९४२ तमख्रैस्ताब्दतः १९७६ तमख्रैस्ताब्दपर्यन्तं चतुस्त्रिंशद्वर्षाणि यावत् प्रकाशिताः सर्वे खण्डाःस्निग्धवैदग्ध्यलेखगर्भा अद्यावधि प्राप्या आतश्च सङ्ग्राह्या एव ।

प्रतिवर्षमेषा पत्रिका ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुन-पूर्णिमासु प्रकाश्यते ।

अस्यां पत्रिकायां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयानां विश्वविद्यालयान्तरीयाणामन्येषां च विश्वविश्रुतविदुषां शोधच्छात्राणां विदुषीणां च शोधभूयिष्ठनिबन्धा लघुग्रन्था अनुक्रमणिका. समीक्षादयः प्रकाशिताः प्रकाश्यन्ते च, प्रकाशितनिबन्धानां पञ्चविंशतिरनुमुद्रणानि ( रिप्रिण्ट्स ) स खण्डश्च निबन्धलेखकेभ्यो ससम्मानं दीयन्ते ।

संस्कृत-हिन्दी-आङ्ग्लभाषाग्रन्थानां समीक्षाऽप्यत्र प्रकाश्यते, तदर्थं च समीक्ष्यग्रन्थस्य प्रतिद्वयमपेक्षितम् ।

एषा पत्रिका च वक्ष्यमाणोपायैः प्राप्तुं शक्या—

१—मूल्यप्रेषणेन । २—प्रकाशनार्थं शोधनिबन्धादिप्रेषणेन ।

३—ग्रन्थसमीक्षाद्वारा समीक्षकेन । ४—संस्थानान्तरतः प्रकाशितशोधपत्रिकाया विनिमयेन ।

तदेवं यथानियमं प्रकाशमानापीयं विद्वत्प्रिया सर्वशास्त्रमयी भगवती सरस्वतीव 'सारस्वती सुषमा', हन्त साम्प्रतं संकुचितप्रसरा इति स्मरणेनापि अस्माकं चेतश्चेखिद्यते । अत्र हेतुस्तु अस्माकमौदासीन्यमेव तदेवं सापराधा अपि वयं सादरं भवतो विज्ञापयामो यत् पत्रिकावल्लरीमिमां स्नेहालवालायमानाः श्रीमन्तः कृपया समुज्जीवयन्तु, तत्र श्रीमता करुणा वक्ष्यमाणोपायैः पत्रिकया प्राप्तुं शक्यन्ते—

१—यथाशीघ्रं वार्षिकमूल्यप्रेषणेन । २—अवशिष्टमूल्यप्रेषणेन ।

३—प्रौढलेखनिबन्धग्रन्थसमीक्षणप्रेषणेन । ४—शोधपत्रिकाप्रेषणपरिवर्तनेन । इति

अन्ते च सुदृढोऽस्माकीनः प्रत्ययो यत्कृपालवः संस्कृतमानसा विद्वांसो ग्रन्थाध्यक्षा अन्ये चाधिकारिणोऽस्या निर्देक्ष्यमाणं मूल्यं यथाशीघ्रं सम्प्रेष्य ग्राहकीभूयास्मान् कृतार्थयिष्यन्तीति, येन श्रीमता सविधे चतुस्त्रिंशद्वर्षीयां प्रौढां पत्रिकामिमां सम्प्रेष्य वयं कृतकृत्या भवाम इति यथाप्रश्रयं निवेदयति—

**'सारस्वती सुषमा' सम्पादकः, शोधसंस्थानम् सम्पूर्णानन्दसंस्कृतविश्वविद्यालय,**
**वाराणसी—२२१००२ ( उ० प्र० )**

**मूल्यम्**
वार्षिकम्—१०·००
एकखण्डस्य—०३·००

मूल्यं तु—कुलसचिवमहोदयस्य, लेख-निबन्ध-समीक्षादि च
**निदेशकमहोदयस्य उपर्युक्तसंकेते प्रेष्यम्**

निवेदकः—सम्पादकः

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

**श्रीविश्वम्भरनाथत्रिपाठी**

सह-सम्पादकः

**डॉ० हरिश्चन्द्रमणित्रिपाठी**




२९ वर्ष
१ अङ्कः

वार्षिकमूल्यम् १० रूप्यकाणि
प्रत्यङ्कमूल्यम ३ रूप्यकाणि

# प्रास्ताविकम्

सपूर्णानन्दसस्कृतविश्वविद्यालयस्यानुसन्धानप्रधाना त्रैमासिकी पत्रिकेयम् एकोनत्रिंशद्दायनं पदमर्पयतीति पाठकानामग्रतो निवेदयतामस्माकमामोदते स्वान्तम्। गोर्वाणवाणीपत्रिकाणां संख्याऽङ्गुलिगण्या, तथापि साऽनुदिन ह्रसतीति चिन्ताविषय। सर्वेषा विश्वविद्यालयानाम् अनुसन्धानप्रधाना पत्रिका नियतकाल प्रकाशमायन्ति किन्तु प्राधान्यतस्तत्र निबन्धा आङ्गल-भाषया निबद्धा भवन्ति। क्वचिद् हिन्दीभाषया संस्कृतभाषया क्षेत्रीयभाषयापि निबन्धा-प्रकाश्यन्ते। विरलास्वेव विश्वविद्यालयीयपत्रिकासु सुरगिरा निबन्धा प्रकाशिता भवन्ति, यद्यपि प्राय सर्वेष्वेव विश्वविद्यालयेषु सस्कृतविभागोऽपि स्वातन्त्र्येण प्रतिष्ठापितो वर्तते। हेतुस्त-त्रास्ति–आङ्गलभाषामुखेन भावाविष्करणस्वीकारणम्। अनुसन्धानसस्थानान्यपि कानिचन राजन्ते भारते वर्षे। तत्रानुसन्धानप्रधानपत्रिकास्वाङ्गलभाषामुखेनैव भावाविष्करणमीति। द्वित्रा सन्ति पत्रिका गवेषणाप्रधाननिबन्धप्रकाशनाग्रहविरहा याः खलु केवल सुरगिरा सर्वविधनिबन्धाना प्रकाशनमूरीकुर्वन्ति। इत्थ भारते वर्षे सस्कृतपत्रिकाणा सख्याऽल्पीयस्येव। तत्राप्यनुसन्धान-प्रधानाऽप्रतिमा सस्कृतपत्रिका सारस्वती सुषमैव शोभते।

सस्कृतक्षेत्रेऽनुसधानकेतन नोच्चकैर्दृश्यते समुद्धूयमानम् अनुसधानप्रधानेय सस्कृतपत्रिका सारस्वती सुषमाऽनुसन्धानकेतनोद्धननाय पवनरूपतामाकलय्य विराजते। प्राच्यविद्यानदीष्णान गवेषणापूर्णा निबन्धा सन्ततमिह स्थानमासादयन्ति। इतो गृहीतप्रेरणा बहवो गवेषका गवेषणा नैपुणीमध्यगमन् इति तेषामपि निबन्धा इह प्रतिष्ठा लभन्ते। सारस्वती सुषमा तेषामुच्चश्रेणीका रचना प्रकाश्य तानन्नारत प्रोदसाहयत्, सम्प्रतमपि प्रोत्साहयति यथापूर्वम्। सस्कृतानुसन्धान-प्रधानत्वान्नास्यास्तथा ग्राहकतावृद्धिर्यथा सामान्यपत्रिकाणाम् अनुसन्धानरसिकाना सस्कृताना वैरल्याद् नेह चित्रं मनागपि।

इह गवेषकाणा हितकाम्यया नूतनसामग्र्या सनिवेशो विधीयते तद्विषयविशेषज्ञाना निबन्धादिप्रकाशनेन। भूतपूर्वोपकुलपते डा० मङ्गलदेवशास्त्रिणो देवविषयको निबन्धो बहो. कालात् प्रागस्या पत्रिकाया प्रकाशितोऽपूर्ण। तस्यावशिष्टोऽश श्रीशास्त्रिवर्यादुपलभ्यास्मिन्ने-वाङ्के प्रकाशित.।

कोटिशो ग्रन्था अद्यापि वेष्टनवेष्टिता पुस्तकालयेष्वप्रकाशितज्ञानराशयो जिज्ञासूना कल्याणाय न कल्पन्ते। नातिविस्तीर्णाना लघुलघूना तेषामिह प्रकाशन प्रारम्भत एव समुप-क्रान्तम्। अस्मिन्नङ्के तादृश एवैको लघुग्रन्थ. संनिवेशितो नूतनज्ञानवर्धनाय ध्रुव प्रभविष्यति।

**विश्वभरनाथ त्रिपाठी**
**निदेशकः,**
**अनुसन्धानसंस्थानस्य,**
**सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,**
**वाराणसी–२२१००२, (उ. प्र.)**

# विषयानुक्रमणी

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयपत्रिका

| २९ वर्षः | ज्येष्ठपूर्णिमा, सं० २०३१ | १ अङ्कः |
|---|---|---|

# श्रुतिविमर्शः

## शतपथब्राह्मण आचारविचाराः
### अथवा
## शतपथब्राह्मणपर्यालोचनम्

डॉ० मङ्गलदेवशास्त्री, वैदकप्रतिष्ठानम्, देहली।

### अथ तृतीयकाण्डम्

देवान् वा एष उपोत्क्रामति यो दीक्षते। (श०ब्रा० ३।१।१।१)

उपोत्क्रामति। उत्क्रान्त प्राप्तो भवति।

प्राची हि देवानां दिक्। (श०ब्रा० ३।१।१।२)

उदीची हि मनुष्याणा दिक्। (श०ब्रा० ३।१।१।२)

एषा वै दिक् पितॄणाम्। (श०ब्रा० ३।१।१।२)

एषा दिक्। दक्षिणा दिक्।

तदु होवाच याज्ञवल्क्यो वार्ष्णाय—देवयजन जोपयितुमैम। तत्सात्ययज्ञोऽब्रवीत्—सर्वा वा इय पृथिवी देवी देवयजनम्, यत्र वा अस्यै क्व च यजुषैव परिगृह्य याजयेदिति। (श०ब्रा० ३।१।१।४)

वार्ष्णाय। वृष्णस्यापत्यं वार्ष्ण, तस्मै। सर्वस्या एव पृथिव्या देवीरूपत्वेन देवयजन-स्थानयोग्यतात्र प्रतिपाद्यते सत्ययज्ञमतेन।

ऋत्विजो हैव देवयजनम् । ये ब्राह्मणाः शुश्रुवांसोऽनूचाना विद्वांसो याजयन्ति । सैवाह्वलैतन्नेदिष्ठतमामिव मन्यामह इति ।

(श०ब्रा० ३।१।१।५)

शुश्रुवासः श्रुतशास्त्रा. । अनूचाना साङ्गप्रवचनाध्येतारः । अह्वल दोषरहिताः । देवयजनकृते विदुषामृत्विजा नितरामावश्यकतेति भावः ।

प्राची हि देवानां दिक् । पुरस्ताद्वै देवा· प्रत्यञ्चो मनुष्यानुपावृताः । तस्मात् तेभ्यः प्राङ् तिष्ठन् जुहोति । (श०ब्रा० ३।१।१।६)

तस्मादु ह न प्रतीचीनशिराः शयीत । नेछेवानभिप्रसार्य शया इति । या दक्षिणा दिक् सा पितॄणाम्, या प्रतीची सा सर्पाणाम् ।

(श०ब्रा० ३।१।१।७)

अभिप्रसार्य । पादाविति शेष· ।

योदीची दिक् सा मनुष्याणाम् । तस्मान्मानुष उदीचीनवंशामेव शालां वा विमित वा मिन्वन्ति । उदीची हि मनुष्याणा दिक् ।

(श०ब्रा० ३।१।१।७)

विमितं सर्वतः समपरिमाणम् । मानेषु मनुष्यार्हे कर्मणि ।

देवान् वा एष उपावर्त्तते यो दीक्षते स देवतानामेको भवति ।

(श०ब्रा० ३।१।१।८)

तिर इव वै देवा मनुष्येभ्य. । (श०ब्रा० ३।१।१।८)

ब्राह्मणो वैव राजन्यो वा वैश्यो वा ते हि यज्ञियाः ।

(श०ब्रा० ३।१।१।९)

न वै देवा. सर्वेणेव संवदन्ते । ब्राह्मणेन वैव राजन्येन वा वैश्येन वा, ते हि यज्ञियाः । तस्माद् यद्येनं शूद्रेण सवादो विन्देत्, एतेषामेवैकं ब्रूयात्—इममिति विचक्ष्व, इममिति विचक्ष्वेति । (श०ब्रा० ३।१।१।१०)

एनं दीक्षितम् । एतेषा त्रैवर्णिकाना मध्ये । इमं शूद्रम् । विचक्ष्व ब्रूहि ।

भूमा वै रायस्पोषः । श्रीर्वै भूमा । (श०ब्रा० ३।१।१।१२)

इषं मदतीति वै तमाहुर्यः श्रियमश्नुते, यः परमतां गच्छति ।

(श०ब्रा० ३।१।१।१२)

आहुः । लोके जना इति शेषः ।

अस्ति वै पुरुषस्यामेध्यं यत्रास्यापो नोपतिष्ठन्ते । केशश्मश्रौ च वा अस्य नखेषु चापो नोपतिष्ठन्ते । (श०ब्रा० ३।१।२।२)

स वै नखान्येवाग्रे निकृन्तते । दक्षिणस्येवाग्रे । सव्यस्य वा अग्रे मानुषे । अथैव देवत्रा ।४।

स दक्षिणमेवाग्रे गोदानं वितारयति । सव्यं वा अग्रे मानुषे ।५।

(श० ब्रा० ३।१।२।४-५)

देवत्रा । देवेषु देवसंबन्धिकर्मणीत्यर्थः । देवकर्मसु दक्षिणभागस्य, मानुषे कर्मणि तु सव्यभागस्य प्रमुखतेति भावः । वितारयति विभजति । गोदानं नाम कर्णस्योपरि प्रदेशः ।

वज्रो वा आपः । वज्रो हि वा आपः । तस्माद् येनैता यन्ति निम्नं कुर्वन्ति, यत्रोपतिष्ठन्ते निर्दहन्ति । (श०ब्रा० ३।१।२।६)

अमेध्यो वै पुरुषो यदनृतं वदति । तेन पूतिरन्तरतः ।

(श०ब्रा० ३।१।२।१०)

मेध्या वा आपः । (श०ब्रा० ३।१।२।१०)

पवित्रं वा आपः । (श०ब्रा० ३।१।२।१०)

या ह वा इयं गोस्त्वक्, पुरुषे हैषाग्र आस ।१३।

ते देवा अब्रुवन्—गौर्वा इदं सर्वं बिभर्त्ति । हन्त येयं पुरुषे त्वक्—गव्येतां दधाम । तयैषा वर्षन्तं तया हिमम्, तया घृणिं तितिक्षिष्यत इति ।१४।

तेऽवच्छाय पुरुषं गव्येतां त्वचमदधुः, तयैषा वर्षन्तं तया हिमं तया घृणिं तितिक्षते ।१५। (श०ब्रा० ३।१।२।१३-१५)

घृणिं घर्मम् । अवच्छाय । त्वग्रहितं कृत्वा ।

तस्मादु सुवासा एव बुभूषेत् । (श०ब्रा० ३।१।२।१६)

(तस्माद्) अप्यश्लीलं सुवाससं दिदृक्षन्ते । (श०ब्रा० ३।१।२।१६)

अश्लीलं निन्दितम् ।

तस्य वा एतस्य वाससः । अग्नेः पर्यासो भवति, वायोरनुच्छादः, नीविः पितॄणाम्, सर्पाणां प्रघातः, विश्वेषां देवानां तन्तवः, आरोका नक्षत्राणाम् । एवं हि वा एतत्सर्वे देवा अन्वायत्ताः । (श०ब्रा० ३।१।२।१८)

तस्य वाससो दीक्षितेन परिहितस्य वाससः । पर्यासः = तिर्यक्तन्तुसंदर्भः । अनुच्छादः = अनुलोममाच्छाद्यत इति । नीविः = आद्यन्तप्रदेशः । प्रघातः = सर्वहननस्थानम्, निविडीभूतप्रदेशः । आरोकाः = मध्यच्छिद्राणि ।

स धेन्वै चानडुहश्च नाश्नीयात् ।
धेन्वनडुहौ वा इदं सर्वं बिभृतः ॥

ते देवा अब्रुवन्-धेन्वनडुहौ वा इदं सर्वं बिभृतः। हन्त यदन्येषां वयसां वीर्यं तद्धेन्वनडुहयोर्दधामेति। स यदन्येषा वयसा वीर्यमासीत् तद्धेन्वनडुहयोरदधु। तस्माद्धेनुश्चैवानड्वाश्च भूयिष्ठ भुङ्क्त.। तद्धैतत्सर्वाश्यमिव यो धेन्वनडुहयोरश्नीयादन्तगतिरिव। त हाद्भुतमभिजनितोर्जायायै गर्भं निरवधीदिति पापमकदिति (?)। पापी कीर्त्ति। तस्माद्धेन्वनडुहयोर्नाश्नीयात्। तदु हो वाच याज्ञवल्क्योऽश्नाम्येवाहमसलं चेद् भवतीति।
(श०ब्रा० ३।१।२।२१)

वयसाम् = प्राणिजातीनाम्।

अग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति।
(श०ब्रा० २।१।३।१)

अग्निर्वै यज्ञस्यावरार्ध्यो विष्णु परार्ध्य.। (श०ब्रा० ३।१।३।१)

अवरार्ध्यः = आदिमः। परार्ध्य. = उत्तमः। यष्टव्यदेवतानामाद्यन्तत्वाभिधानादुक्तस्नगत्वं तयोः।

तस्मादाहुर्न हस्तिन प्रतिगृह्णीयात् पुरुषाजानो हि हस्तीति।
(श०ब्रा० ३।१।३।४)

पुरुषाजानः पुरुषप्रकृतिक।

घृत वै देवानम्, फाण्ट मनुष्याणाम्। (श०ब्रा० ३।१।३।८)

फाण्टम् = नवनीतभावात् प्रागवस्थापन्नं द्रव्यम्।

अरुर्वै पुरुपस्याक्षि। (श०ब्रा० ३।१।३।१०)

अरुः = व्रण इव संस्पर्शासहिष्णु।

अश्मा ह्याञ्जनम्। त्रैककुदं भवति। (श०ब्रा० ३।१।३।११)
(श०ब्रा० ३।१।३।१२)

यदि त्रैककुदं न विन्देदप्यत्रैककुदमेव स्यात्। (श०ब्रा० ३।१।३।१२)

त्रैककुदम् = त्रिककुत्पर्वतः। तत्संबन्धि त्रैककुदमञ्जनम्। त्रैककुदं सौवीरमिति केचित्। दीक्षितस्य अक्ष्णोरञ्जनविषय एतदुच्यते।

वज्रो वै शरः। (श०ब्रा० ३।१।३।१३)

अमूलां वा इदमुभयतः परिच्छिन्न रक्षोऽन्तरिक्षमनुचरति यथायं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति। (श०ब्रा० ३।१।३।१३)

उभयतः। मूले अग्रे च। दिवि पृथिव्या चेत्यर्थः।

सव्यं वा अग्रे मानुषेऽथैवं देवत्रा ।　　(श०ब्रा० ३।१।३।१४)

देवत्रा देवेषु दक्षिणप्राथम्यमित्यर्थ. ।

सवत्सर समितो वै यज्ञ. ।　　(श०ब्रा० ३।१।३।१७)

मेध्या वै दर्भाः ।　　(श०ब्रा० ३।१।३।१२)

पवित्रं वै दर्भा. ।　　(श०ब्रा० ३।१।३।१८)

एको ह्येवायं पवते । सोऽय पुरुषेऽन्तःप्रविष्टस्त्रेधा विहित. प्राण उदानो व्यान इति ।　　(श०ब्रा० ३।१।३।२०)

अयं वायुः ।

सप्त वा इमे शीर्षन्प्राणा ।　　(श०ब्रा० ३।१।३।२१)

शीर्षन्प्राणाः = मुखच्छिद्रगता. ।

प्रजापतिर्वै चित्पतिः ।　　(श०ब्रा० ३।१।३।२२)

प्रजापतिर्वै वाक्पतिः ।　　(श०ब्रा० ३।१।३।२२)

तद्वै सुपूतं यं देवः सविता पुनात् ।　　(श०ब्रा० ३।१।३।२२)

यो वा अय पवत एषोऽच्छिद्रं पवित्रम् ।　　(श०ब्रा० ३।१।३।२२)

अयं वायुः ।

एते वै पवितारो यत्सूर्यस्य रश्मय. ।　　(श०ब्रा० ३।१।३।२२)

न वै यज्ञः प्रत्यक्षमिवारभे । यथाय दण्डो वा वासो वा । परोक्षं वै देवाः, परोक्षं यज्ञः ।　　(श०ब्रा० ३।१।३।२४)

वातो वै यज्ञः ।　　(श०ब्रा० ३।१।३।२६)

वातो वै यज्ञ । वातेन प्राणेन व्याप्रियमाणत्वात् ।

यज्ञो वै स्वाहाकारः ।　　(श०ब्रा० ३।१।३।२७)

हविस्त्याग एव यज्ञ. । स्वाहाकारेण च हवि प्रदानम् । अतः स्वाहाकारस्य यज्ञात्मकता ।

वाग्वै यज्ञ' ।　　(श०ब्रा० ३।१।३।२७)

वाग्व्यवहारमन्त्ररूपेण वै यज्ञो निष्पाद्यते ।

अग्निर्वै योनिर्यज्ञस्य ।　　(श०ब्रा० ३।१।३।२८)

उद्गृभ्णीते वा एषोऽस्माल्लोकाद् देवलोकमभि यो दीक्षते ।
(श०ब्रा० ३।१।४।१ )

उद्गृभ्णीते । 'हृग्रहोर्भः' इति भत्वम् । उद्गृह्णीते ।

आहुतिर्हि यज्ञ । (श० ब्रा० ३।१।४।१ )

यज्ञेन वै देवा इमा जितिं जिग्युर्यैषामियं जितिः । (श०ब्रा० ३।१।४।३ )

यथा मधु मधुकृतो निर्धयेयु.। (श०ब्रा० ३।१।४।३ )

वाग्वै सरस्वती वाग्यज्ञः । (श०ब्रा० ३।१।४।६ )

पशवो वै पूषा । पुष्टिर्वै पूषा । पुष्टि· पशव । पशवो हि यज्ञ ।
(श०ब्रा० ३।१।४।९ )

पशुगतक्षीरादिसाध्यत्वात् पशवो यज्ञ (सायण ) ।

ब्रह्म वै बृहस्पतिर्ब्रह्म यज्ञः । (श०ब्रा० ३।१।४।१५)

दश पाण्या अङ्गुलयो, दश पाद्या , दश प्राणा आत्मैकत्रिंशो यस्मिन्नेते प्राणा. प्रतिष्ठिताः । एतावान् वै पुरुष· । (श०ब्रा० ३।१।४।२३)

शीर्षगतसप्तच्छिद्रस्थाः सप्त प्राणा·, अवाञ्चौ द्वौ, इत्यसाधारणा नव, मुख्यप्राणस्त्वेक इति प्राणाना दशत्वम् (सायणः) ।

पुरुषो यज्ञः । पुरुषसंमितो यज्ञः । (श०ब्रा० ३।१।४।२३)

यद् वै प्रतिरूप तच्छिल्पम् । (श०ब्रा० ३।२।१।५ )

प्रतिरूपं प्रतिकृति· । लौकिका हि हरितुरगादिप्रतिरूपं शिल्पमित्याहु ।

गर्भो वा एष भवति यो दीक्षते । (श०ब्रा० ३।२।१।६ )

न्यक्नाङ्गुलय इव हि गर्भा. । (श०ब्रा० ३।२।१।६ )

न्यक्नाङ्गुलि. = मुष्टीकरणेन संकुचिताङ्गुलिः ।

चर्म वा एतत्कृष्णस्य । तदस्य तन्मानुषम् । शर्म देवत्रा ।
(श०ब्रा० ३।२।१।८ )

मनुष्येषु यत् 'चर्म' इति प्रसिद्धम्, एतद् 'देवत्रा' देवेषु सुखहेतुत्वात् 'शर्म'शब्दाभिधेयम् (सायण.) ।

त्रिवृद्धयन्नम् । पशवो ह्यन्नम् । (श०ब्रा० ३।२।१।१२)

त्रिवृत् त्रिगुणम् । अजाव्यादिरूपमन्नं पितृमातृपुत्रात्मना त्रिवृद् भवति (सायणः) ।

उभयं वा एषोऽत्र भवति यो दीक्षते विष्णुश्च यजमानश्च यदह दीक्षते तद्विष्णुर्भवति। यद्यजते तद्यजमानः। (श० ब्रा० ३।२।१।१७)

दीक्षणीयेष्टौ आग्नावैष्णवे हविषि विष्णुर्देवतेति तत्संस्कारसंस्कृतो यजमानोऽपि विष्णुरित्यभिप्राय. (सायणः)।

तस्मादु स्त्री पुंसोपमाश्रिता, आरकादिवैवाग्रेऽसूयति।
(श० ब्रा० ३।२।१।१९)

आरमेव आरकम्। आरकादिव। तेन च आरकाग्रेण बलीवर्दादिरिव व्यथिता सती असूयति।

तस्मादु स्त्री पुंसोपमाश्रिता निपलाशमिवैव वदति।
(श० ब्रा० ३।२।१।२०)

निपलाशमिव। निपतितपर्णं वृक्षादिकमिव। तद्यथा केवलं कम्पते। एवं शिरश्चालनमात्रेण वदति। अथवा पलाशनिपतनमिव ओष्ठचालनेनेत्यर्थ।

तस्मादु स्त्री पुमांस ह्वयत एवोत्तमम्। (श० ब्रा० ३।२।१।२१)
तस्मादु स्त्री पुमांसं संस्कृते तिष्ठन्तमभ्यैति। (श० ब्रा० ३।२।१।२२)
संस्कृते प्रदेशे।

तेऽसुरा आत्तवचसो हेऽलवो हेऽलव इति वदन्त पराबभूवुः।२३। तत्रैतामपि वाचमूदुरुपजिज्ञास्याम्। सम्लेच्छा । तस्मान्न ब्राह्मणो म्लेच्छेत्। असुर्या हैषा वाक्।[1] (श० ब्रा० ३।२।१।२३-२४)

हेलवो हेलवः = हे अरय, हे अरय —इत्युच्चारयितुमशक्ताः। ऊदु. = ऊचु। उपजिज्ञास्याम्। ज्ञातव्या संदिग्धाम्। सम्लेच्छ। संदिग्धार्थस्य वचसो भाषणं भत्तन् म्लेछमित्यर्थः। अथवा य ईदृशी वाचं वदति स म्लेच्छः। न म्लेच्छेत्। अपार्थिका भाषा न ब्रूयात्। असुर्या। असुरेष्वाहिता।

उत्तानेव वै योनिर्गर्भं बिभर्ति। (श० ब्रा० ३।२।१।२९)
यदा वै सुषमं भवत्यथालं यज्ञाय भवति। यदो दुःषमं भवति न तर्ह्यात्मने च नालं भवति। (श० ब्रा० ३।२।१।३०)

सुषमं भवति। कृष्यादिसंपत्त्या सुखप्रदः संवत्सरो भवतीत्यर्थ। दुःषमं दुःखहेतुः संवत्सरो भवति। आत्मने = स्वशरीररक्षणाय।

---

१. तु० महाभाष्यं पस्पशाह्निकम्।

वज्रो वै दण्डः। (श० ब्रा० ३।२।१।३२)

प्रहारसाधनत्वेन दण्डस्य वज्रत्वम्।

अन्नं वा ऊर्गुदुम्बरः। (श० ब्रा० ३।२।१।३२)

ऊर्क् = बलकररसरूपम्।

यथा पराञ्चं धावन्तमनुलिप्सेत, तं नानुलभेतैवम्।
(श० ब्रा० ३।२।१।३६)

इदं ह्याहू रक्षासि योषितमनुसचन्ते। तदुत रक्षांस्येव रेत आदधतीति।
(श० ब्रा० ३।२।१।४०)

अनुसचन्ते। अनुसंश्रयन्ति गर्भाधानसमये।

अथात्राद्धा जायते—यो ब्रह्मणो यो यज्ञाज्जायते। तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयात्। ब्रह्मणो हि जायते यो यज्ञाज्जायते।
(श० ब्रा० ३।२।१।४०)

यज्ञशब्दाभिधेयाय ब्रह्मणो जातत्वाद् 'ब्राह्मण'शब्दव्यवहारः। अत एव राजन्यवैश्ययोरपि दीक्षितयो "दीक्षितोऽयं ब्राह्मणः" (का० श्रौ० सू० ७।१०५) इत्येवं ब्रूयात् (सायण)।

तस्मादाहुर्न सवनकृत हन्यादेनस्वी हैव सवनकृतेति।
(श० ब्रा० ३।२।१।४०)

सवनकृतम्। अभिषवकर्तारं यष्टारम्, सवनकृता। सवनकृता निमित्तेन, तद्वधेनेत्यर्थः।

संवत्सरो वै प्रजापति। प्रजापतिर्यज्ञः। अहोरात्रे वै संवत्सरः। एते ह्येन परिप्लवमाने कुरुतः। (श० ब्रा० ३।२।२।४)

परिप्लवमाने। पुन पुनरावर्तमाने। एवं संवत्सरम्। कुरुतः। निष्पादयत.।

वनस्पतयो हि यज्ञिया.। नहि मनुष्या यजेरन् यद्वनस्पतयो न स्युः।
(श० ब्रा० ३।२।२।९)

देवान् वा एष उपावर्त्तते यो दीक्षते। स देवतानामेको भवति।
(श० ब्रा० ३।२।२।१०)

श्रृत वै देवाना हविः। नाश्रृतम्। (श० ब्रा० ३।२।२।१०)

श्रृतं पक्वम्।

ते यज्ञ समभरन् । यथायं यज्ञः सभृतः । एष वा अत्र यज्ञो भवति यो दीक्षते । एष ह्येत तनुते । एष एनं जनयति । तद् यदेवात्र यज्ञस्य निर्धीतम् । यद्विदुग्धम्—तदेवैनत् पुनराप्याययति, यदेप एव व्रतयति । नाग्नौ जुहोति । न ह्याप्याययेद्, यदग्नौ जुहुयात् । (श०ब्रा० ३।२।२।१२)

आत्मन्येवात्र होमं प्रशसति । ते पुरातन ऋषयः । निर्धीतम् = निष्पीतम् । अनुष्ठानेन विदुग्धम् । विपरीतानुष्ठानेन विपरीतफलमङ्गम् । विफलम् ।

इमे वै प्राणा मनोजाता मनोयुजो दक्षक्रतव । वागेवाग्नि । प्राणोदानौ मित्रावरुणौ । चक्षुरादित्य. । श्रोत्र विश्वेदेवा । एतासु हैवास्यैतद्देवतासु हुतं भवति । (श०ब्रा० ३।२।२।१३)

प्राणा वागादयः । दक्षक्रतवः । दक्षाः प्रवृद्धा. क्रतवः कर्माणि येषां ते तथोक्ताः ।

व्यृद्धं वै तद्यज्ञस्य यन्मानुषम् । (श०ब्रा० ३।२।२।१५)

मानुषाय वा एष पुराशनायावनेनिक्ते । (श०ब्रा० ३।२।२।१७)

अवनेनिक्ते । हस्तप्रक्षालनं करोति ।

न वै देवाः स्वपन्ति । (श०ब्रा० ३।२।२।२२)

अथ यद्दीक्षितोऽन्नृत्य वा व्याहरति, क्रुध्यति वा, तन्मिथ्या करोति । व्रतं प्रमीणाति । (श०ब्रा० ३।२।२।२४)

प्रमीणाति = हिनस्ति ।

अक्रोधो ह्येव दीक्षितस्य । (श०ब्रा० ३।२।२।२४)

अग्निर्वै देवाना व्रतपतिः । (श०ब्रा० ३।२।२।२४)

अथ परिह्वाल वाच वदति, न मानुषी प्रसृताम । (श०ब्रा० ३।२।२।२७)

दीक्षितो दैवीमेव वाचं वदेन्न मानुषीमित्येवात्र उक्तं भवति । परिह्वालम् = परिणीतां संस्कृतामित्यर्थः (सायणः) ।

प्रसृताम् = सर्वत्र व्याप्ताम् । सर्वमनुष्यसाधारणीम् (तु० निरुक्तम् १३।९) ।

वाग्वै यज्ञः । तद्यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत् पुनराप्याययति यत्परिह्वालं वाचं वदति न मानुषी प्रसृताम् । (श०ब्रा० ३।२।२।२९)

इय ह्येवादितिः । (श०ब्रा० ३।२।३।६)

इयं पृथिवी ।

वाग्वै पथ्या स्वस्तिः । (श०ब्रा० ३।२।३।८)

पथ्या । पथोऽनपेता । स्वस्ति. । शोभनरूपा । यज्ञात्मिकाया वाचो विषय एतदुच्यते । अत्र हि 'पथ्या स्वस्ति.' इत्येव मन्त्ररूपा वागेव वर्णित इति बोध्यम् । सा हि पथोऽनपेता शोभनरूपा च ।

यद्वै शुष्कं यज्ञस्य तदाग्नेयम् ।　　(श०ब्रा० ३।२।३।६)

शुष्कम् । नीरसं समिदादि द्रव्यम् ।

यद्वा आर्द्रं यज्ञस्य तत्सौम्यम् ।　　(श०ब्रा० ३।२।३।१०)

आर्द्रम् । रसयुक्त सोमादि द्रव्यम् ।

पशवो वै सविता । पशवो यज्ञः ।　　(श०ब्रा० ३।२।३।११)

पशूनां हि सवितृप्रेर्यत्वात् सवित्रा तेषामभेद । पशवो वै यज्ञसंपादनसाधनभूताः, अतस्ते यज्ञात्मका. ।

अत्रोत्तरा हि वाग् वदति कुरुपञ्चालत्रा ।　　(श०ब्रा० ३।२।३।१४)

अत्र लोके कुरुपञ्चालाख्येषु जनपदेषु 'उत्तरा' उत्कृष्टतरा वाक् वदति व्यवह्रियत इति भावः ।

उदीची ह्येतस्यै दिक् ।　　(श०ब्रा० ३।२।३।१५)

एतस्यै एतस्या पथ्यायाः स्वस्तेः वाचः (संस्कृतभाषाया मन्त्रभाषाया वा इति यावत्) उदीची हि दिक् स्वभूता ।

प्राची ह्येतस्य दिक् ।　　(श०ब्रा० ३।२।३।१६)

एतस्याग्ने. ।

तस्मादाहुः पितृदेवत्य. सोमः ।　　(श०ब्रा० ३।२।३।१७)

दक्षिणा ह्येतस्य दिक् ।　　(श०ब्रा० ३।२।३।१७)

एतस्य सोमस्य ।

प्रतीची ह्येतस्य दिक् ।　　(श०ब्रा० ३।२।३।१८)

एतस्य सवितुः ।

शिरो वै यज्ञस्यातिथ्यम् ।　　(श०ब्रा० ३।२।३।२०)

योषित्कामा वै गन्धर्वाः ।　　(श०ब्रा० ३।२।४।३)

तस्मादप्येतर्हि मोघसहिता एव योषा । तस्माद् य एव नृत्यति यो गायति तस्मिन्नेवैता निमिश्लतमा इव ।　　(श०ब्रा० ३।२।४।६)

निमिश्लतमाः । विशेषेणैकीभूताः, अत्यन्तमनुरक्ता. । भवन्तीति शेष. ।

समानजन्म वै पयश्च हिरण्य च । उभय ह्यग्निरेतसम् ।
(श० ब्रा० ३।२।४।८)

वर्चो वा एतद्यद्धिरण्यम् ।　　(श० ब्रा० ३।२।४।९)

सोमो वै भ्राट् ।　　(श० ब्रा० ३।२।४।९)

भ्राजमानत्वाद् 'भ्राट्' सोम· ।

मनसा वा इयं वाग्धृता । मनो वा इदं पुरस्ताद्वाच ।
(श० ब्रा० ३।२।४।११)

इत्थ वद मैतद्वादीरित्यलग्लमिव ह वै वाग् वदेद् यन्मनो न स्यात् ।
(श० ब्रा० ३।२।४।१०)

अलग्लमिव = अलग्नमिव । वक्तव्यपदार्थेन सहासंसृष्टमिव ।

चित्त वा इदं मनो वागनुवदति ।　　(श० ब्रा० ३।२।४।१६)

धिया धिया ह्येतया मनुष्या जुज्यूषन्ति । अनूक्तेनेव, प्रकामोद्येनेव, गाथाभिरिव ।　　(श० ब्रा० ३।२।४।१६)

जुज्यूषन्ति । जीवितुमिच्छान्ति । धिया धिया । विभिन्नैर्विचारै कर्मभिर्वा अनूक्तेन । अनुवचनेन, वेदाध्ययनेनेत्यर्थ । प्रकामोद्यम् = इच्छया लौकिकभाषणम् । गाथा । गद्यपद्यगीत्याद्यात्मिका ।

क्षत्रिया ह्येषा यज्ञिया ह्येषा ।　　(श० ब्रा० ३।२।४।१६)

एषा वाक् । क्षत्रिया । क्षत्रं बलं तदर्हतीति । यज्ञिया । यजनीया ।

अदितिरस्युभयत· शीर्ष्णीति । स यदेकया समानं सद्विपर्यासं वदति । यदपरं तत्पूर्वं करोति । यत्पूर्वं तदपरम् । तेनोभयत शीर्ष्णी ।
(श० ब्रा० ३।२।४।१६)

'गच्छ देवदत्त' अथवा 'देवदत्त गच्छ' इत्येवमुभयतो वक्तुं शक्यत्वादुभयत· शीर्ष्णी वागित्यर्थः ।

इय वै पृथिवी पूषा । यस्य वा इयमध्वन्गोप्त्री भवति तस्य न काचन ह्वला भवति ।　　(श० ब्रा० ३।२।४।१९)

अध्वन् । अध्वनि । ह्वला प्रच्युतिर्विनाश· ।

इन्द्रो वै यज्ञस्य देवता ।　　(श० ब्रा० ३।२।४।२०)

यज्ञस्य । यज्ञसाधनस्य सोमस्येति सायणः ।

रुद्रं हि नाति पशव· (श० ब्रा० ३।२।४।२०)

नाति । नातिवर्तन्त इति भावः ।

उदीची हि मनुष्याणा दिक् । (श० ब्रा० ३।२।४।२२)

प्रायेणोदीच्या दिशि मनुष्यवृद्धिदर्शनान्मनुष्यसंबन्धव्यपदेश ।

न वा अनग्नावाहुतिर्हूयते । (श० ब्रा० ३।३।१।३)

अग्निरेतस वै हिरण्यम् । (श० ब्रा० ३।३।१।३)

पशवो वै राय. । (श० ब्रा० ३।३।१।८)

गहा वा पत्न्यै प्रतिष्ठा । (श० ब्रा० ३।३।१।१०)

पुत्रो वै वीरः । (श० ब्रा० ३।३।१।१२)

तस्माद्योप्येतर्हि त्रेधा सहस्र व्याकुर्यादेकैवातिरिच्येत ।
(श० ब्रा० ३।३।१।१३)

अयातयाम्नी वा इयं वाक् । (श० ब्रा० ३।३।१।१६)

अयातयाम्नी । अगतरसा । बहुभिरसकृदुच्चार्यमाणाया अपि वाचोऽगतरसत्वं प्रसिद्धम् ।

द्वय वा इद न तृतीयमस्ति । सत्यं चैवानृत च । सत्यमेव देवा अनृत मनुष्या । (श० ब्रा० ३।३।२।२)

क्षत्र वै सोमो विडन्या ओषधयः । (श० ब्रा० ३।३।२।८)

अन्न वै क्षत्रियस्य विट् । (श० ब्रा० ३।३।२।८)

एषा वै सर्वाणि च्छन्दांसि यदतिच्छन्दाः । (श० ब्रा० ३।३।२।११)

तस्मिन् छन्दसि चतुर्णां चतुर्णामक्षराणा परित्यागेनाधस्तनाना छन्दसामुत्पत्तेः सर्वच्छन्दस्त्वम् (सायणः) ।

संवत्सरसंमितो वै यज्ञः । पञ्च वा ऋतवः संवत्सरस्य ।
(श० ब्रा० ३।३।३।५)

तपसो ह वा एषा प्रजापतेः सम्भूता यदजा । (श० ब्रा० ३।३।३।८)

सा यत्त्रिः संवत्सरस्य विजायते । तेन प्रजापतेर्वर्ण्णः ।
(श० ब्रा० ३।३।३।८)

सा । अजा ।

सा यत्रि संवत्सरस्य विजायते । तेन परम पशुः ।
(श० ब्रा० ३।३।३।८)

सा । अजा ।

भूमा वै सहस्रम् ।　　(श० ब्रा० ३।३।३।८)

गर्भो वा एष भवति यो दीक्षते ।　　(श० ब्रा० ३।३।३।१२)

प्रावृता वै गर्भा उल्बेनेव जरायुणेव ।　　(श० ब्रा० ३।३।३।१२)

उल्बं गर्भस्यान्तरमावरणम् । जरायुबाह्यमावरणम् । उभयत्र 'इव'शब्दो वाक्यालङ्कारे ।

(तस्मात्) शीर्ष्णाबीजं हरन्त्यनसोदावहन्ति ।　　(श० ब्रा० ३।३।३।१७)

अद्यत्वेऽपि आवापसमये कृष्टक्षेत्रं प्रति बीज शीर्ष्णा हरन्ति । पश्चात् फलितानामानयन-समये अनसा शकटेन उपानयन्ति ।

तिर इव वै देवा मनुष्येभ्य. ।　　(श० ब्रा० ३।३।४।६)

अन्तर्हिता वर्तन्त इत्यर्थः ।

गिरिषु हि सोम. ।　　(श० ब्रा० ३।३।४।७)

एतद्वै वयसामोजिष्ठ बलिष्ठ यच्छ्येनः ।　　(श० ब्रा० ३।३।४।१५)

यथा येभ्यः पक्ष्यन्स्यात्तान्ब्रूयादित्यहे वः पक्ताऽस्मीत्येवमेवैतत् ।
(श० ब्रा० ३।३।४।१७)

तान् भोक्तॄन् । इत्यहे । विशिष्टपाकदिवस इत्यर्थः ।

ब्रह्म हि देवान् प्रच्यावयति ।　　(श० ब्रा० ३।३।४।१७)

मन्त्रशक्त्या देवा विवशा इव यजमानस्याभिमतं कार्यं कारयन्ति इति भावः ।

इन्द्रो वै यज्ञस्य देवता ।　　(श० ब्रा० ३।३।४।१८)

अग्नीषोमौ वा एतमन्तर्जम्भ आदधाते यो दीक्षते ।
(श० ब्रा० ३।३।४।२१)

अन्तर्जम्भे । अन्नखादनस्थानं जम्भः । दन्तपङ्क्त्योरन्तराल इत्यर्थः ।

यथा राज्ञ आगतायोदकमाहरेदेवम् ।　　(श० ब्रा० ३।१।४।३१)

व्यृद्ध वै तद्यज्ञस्य यन्मानुषम् ।　　(श० ब्रा० ३।३।४।३१)

शिरो वै यज्ञस्यातिथ्यम् । बाहू प्रायणीयोदयनीयौ ।
(श० ब्रा० ३।४।१।१)

यथा राज्ञे वा ब्राह्मणाय वा महोक्षं वा महाजं वा पचेत् तदह मानुषम् ।
(श० ब्रा० ३।४।१।२)

मानुषम् । आतिथ्यमिति शेष ।

यत्र वा अर्हन्तमागत नापचायन्ति, क्रुध्यति वै स तत्र । तथा ह्यापचितो भवति । (श० ब्रा० ३।४।१।३)

नापचायन्ति (चायतेर्लेटि । अडभावश्छान्दस ) = पूजा न कुर्यु । तत्र तस्मिन्नपचिति-विषये ।

यथा वै देवाना चरण तद्वा अनु मनुष्याणाम् । (श० ब्रा० ३।४।१।५)

मानुषे यावन्न विमुञ्चते नैवाऽस्मै तावदुदक हरन्ति नाऽपचिति कुर्वन्त्य-नागतो हि स तावद्भवत्यथ यदैव विमुञ्चतेऽथाऽस्या उदक हरन्त्यथाऽप-चितिं कुर्वन्ति तर्हि स आगतो भवति । (श० ब्रा० ३।४।१।५)

यावन् न विमुञ्चते । प्रयाणसाधन यानादिक न परित्यजति ।

यत्र वा अर्हन्नागच्छति सर्वगृह्या इव वे तत्र चेष्टन्ति तथा ह्याऽपचितो भवति । (श० ब्रा० ३।४।१।६)

सर्वगृह्या इव । गृहे स्थिता. सर्वे पदार्थो अत्यर्थमनिर्ग्राह्याः । ते सर्वग्रह्या. ।

यथा राज्ञोऽराजानो राजकृत सूतग्रामण्य एवम् । (श० ब्रा० ३।४।१।७)

राजकृतः । राजत्वसंपादका' पट्टाभिषेकस्य कर्तारः । सूतग्रामण्य । सूतश्रेष्ठाः ।

यत्र वा अर्हते पचन्ति तदभित साचयोऽन्वाभक्ता भवन्त्यराजानो राजकृतः सूतग्रामण्य । (श० ब्रा० ३।४।१।८)

यथा प्रधानस्य आमन्त्रणे सति अप्रधाना अप्यनाहूता एव तमनुगच्छति इति भाव ।

यथा श्रेष्ठस्योद्धार एवम् । (श० ब्रा० ३।४।१।११)

उद्धारः । उद्ध्रियते असाधारण्येन विभज्यत इत्युद्धारः । प्रतिनियतभागः ।

सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत्तेन सा श्येनः सोमभृत् ।
(श० ब्रा० ३।४।१।१२)

सवत्सरसमितौ वै यज्ञः । (श० ब्रा० ३।४।१।१४)

देवा ह वा एत वनस्पतिषु राक्षोघ्नं ददृशुर्यत्कार्ष्मर्यम् ।
(श० ब्रा० ३।४।१।१६)

**कार्ष्मर्यः । भद्रपर्णी ।**

शीर्षतो वा अग्रे जायमानो जायते ।　　(श० ब्रा० ३।४।१।१९)

अग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति ।
(श० ब्रा० ३।४।१।१९)

उर्वशी वा अप्सराः पुरूरवा. पतिरथ यत्तस्मान्मिथुनादजायत तदायुः ।
(श० ब्रा० ३।४।१।२२)

आयुर्नामपुत्रः ।

छन्दास्येवैतद्यज्ञमन्वापातयति यथाऽमुमादित्य रश्मयः ।
(श० ब्रा० ३।४।१।२३)

रश्मय । अन्वायत्ता इति शेषः ।

यथा शीर्षतः पर्याहृत्य पादौ प्रतिदद्ध्यादेवम् ।　(श० ब्रा० ३।४।१।२६)

शीर्षत. । शीर्ष्णि ।

इन्द्रः सर्वा देवता इन्द्रश्रेष्ठा देवा इति ।　　(श० ब्रा० ३।४।२।२ )

स यो हैव विद्वान्नर्त्तीयतेऽप्रियं द्विषता करोति न द्विषद्भ्यो रद्ध्यति ।
(श० ब्रा० ३।४।२।३ )

न ऋतीयेत । वैमत्येन विश्लेषं न कुर्यात् । "ऋतेरीयङ्" (पाणिनिसूत्रम् ३।१।२८)। रध्यति । वश प्राप्नोति । परस्परमैकमत्यस्य माहात्म्यवर्णनमेतत् ।

तस्मादाहुः । मनो देवा मनुष्यस्याऽऽजानन्तीति । मनसा सङ्कल्पयति तत्प्राणमपि पद्यते । प्राणो वातम् । वातो देवेभ्य आचष्टे, यथा पुरुषस्य मन । तस्मादेतदृषिणाऽभ्यनूक्तम् । मनसा सङ्कल्पयति । तद्वातमपि गच्छति । वातो देवेभ्य आचष्टे । यथा पुरुष ते मन इति ।
(श० ब्रा० ३।४।२।६-७ )

एक ह् वै देवा व्रतं चरन्ति सत्यमेव । तस्मादेषा जितमनपजय्यं तस्माद्यशः ।
(श० ब्रा० ३।४।२।८)

अनपजय्यम् । जेतुमशक्यम् ।

तस्मादु ह् न सर्वेणेव समभ्यवेयात् । नेन्मे जुष्टास्तन्वः प्रियाणि धामानि सार्द्ध समभ्यवायानिति । येनो ह समभ्यवेयान्नास्मै द्रुह्येत् । इदेदं ह्याहुर्न सतान् नप्त्रिणे द्रोग्धव्यमिति ।　　(श० ब्रा० ३।४।२।९)

न समभ्यवेयात् । शपथपूर्वकं समयं न कुर्यात् । जुष्टा. । अत्यन्त प्रियभूताः । नेत् समभ्यवायात् । नैव संगता भवेयुः । अध्वर्युप्रभृतिषोडशर्त्विजो यजमानश्च मिथो द्रोहशून्या

भवन्त एकमत्या यज्ञकार्यं कर्तुमाज्यस्पर्शपूर्वकं यत्शपथ कुर्वन्ति, तदेव कर्म तान् नप्त्रमित्युच्यते। (मूलशतपथब्राह्मणटिप्पणी)।

अनाधृष्टा हि देवा आसन्ननाधृष्याः। सह सन्तः समान वदन्तः समान दधाणाः। (श० ब्रा० ३।४।२।१४)

सर्वा हि देवा अभिशस्ति तीर्णा.। (श० ब्रा० ३।४।२।१४)

अभिशस्तिः। निन्दा।

एष वा इन्द्रो य एष तपति। (श० ब्रा० ३।४।२।१५)

अग्निर्हि देवाना व्रतपति.। (श० ब्रा० ३।४।३।९ )

यथा मधु मधुकृत आप्याययेयुरेवम्। (श० ब्रा० ३।४।३।१४)

यथा मधु मधुकृतो निर्द्धयेयुः। (श० ब्रा० ३।४।३।१५)

निर्द्धयेयुः = निष्पीत्वा विफलयेयुः।

एका वा एतेषामाशीर्भवत्यृत्विजां च यजमानस्य च यज्ञस्योद्धृचं गच्छेमेति। (श० ब्रा० ३।४।३।१८)

उदृचं गच्छेम। समाप्तिं गच्छेम। उपरिभाविना ऋक् उदृक्।

उत्तरत उपचारो वै यज्ञः। (श० ब्रा० ३।४।३।१९)

"उत्तरत उपचारो यज्ञ·" (का० श्रौ० सू० १।८।२६ द्रष्टव्यम्)।

तस्मादाहुरुपसदा पुर जयन्तीति यदह्योपासते तेनेमां मानुषी पुरं जयन्ति। (श० ब्रा० ३।४।४।४ )

उपसदा। उपसदनदुर्गवेष्टनेन। उपासते। उपेत्यावृण्वन्ति।

अग्नीषोमौ वै देवानां सयुजौ। (श० ब्रा० ३।४।४।९ )

त्रयो वा ऋतव सवत्सरस्य। (श० ब्रा० ३।४।४।१७)

षड् वा ऋतवः सवत्सरस्य। (श० ब्रा० ३।४।४।१८)

पश्चाद्वरीयसी पृथुश्रोणिरिति वै योषां प्रशंसन्ति। यद्वेव पश्चाद्वरीयसी भवति पश्चादेवैतद्वरीय प्रजनन करोति। तस्मात् पश्चाद्वरीयसः प्रजननादिमाः प्रजाः प्रजायन्ते। (श० ब्रा० ३।५।१।११)

तस्मादु हानिन्द्यस्य वृतो नापक्रामेत्। (श० ब्रा० ३।५।१।१७)

युगेन यत्र हरन्ति शम्यया यतो हरन्ति युगशम्येन वै योग्यं युञ्जन्ति। (श० ब्रा० ३।५।१।२४)

योग्यम् । योजनार्हमश्वम् ।

तस्मान्निवृत्तदक्षिणा न प्रतिग्रह्णीयात् । सिंही हैन भूत्वा क्षिणोति । नो ह् अमा कुर्वीत । सिंही हैवैन भूत्वा क्षिणोति नो हान्यस्मै दद्याद् यत्र तदन्यत्रात्मनः कुर्वीत । तस्माद् योऽस्यापि पाप इव समानबन्धु स्यात् तस्मा एना दद्यात् । स यद्ददाति तदेन सिंही भूत्वा न क्षिणोति यदु समानबान्धवे ददाति तदु नान्यत्रात्मन कुरुते । एषो निवृत्तदक्षिणायै प्रतिष्ठा ।
(श० ब्रा० ३।५।१।२५)

सिंही भूत्वा । क्रूरा सती । अन्येन परित्यक्ता दक्षिणेति भावः । अमा । स्वात्मना सह । नो ह । नैव । क्षिणोति । हिनस्ति । समानबन्धुः । एकविधिनिबन्धन. । एकविषय इत्यर्थ. । एषो प्रतिष्ठा । निवृत्तदक्षिणाया एषा गतिरित्यर्थः ।

अग्नेर्वा एतद्वैश्वानरस्य भस्म यत्सिकता ।　　(श० ब्रा० ३।५।१।३६)

बह्वी वै यजुःष्वाशीः ।　　(श० ब्रा० ३।५।२।११)

पुरुषो वै यज्ञः । पुरुषस्तेन यज्ञो यदेन पुरुषस्तनुते । एष वै तायमानो यावानेव पुरुषस्तावान् विधीयते। तस्मात् पुरुषो यज्ञः।
(श० ब्रा० ३।५।३।१)

हविर्वै देवाना सोमः ।　　(श० ब्रा० ३।५।३।२ )

मनसा च वै वाचा च यज्ञं तन्वते ।　　(श० ब्रा० ३।५।३।११)

ये वै ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते विप्राः ।　　(श० ब्रा० ३।५।३।१२)

यदा वै स्त्रियै च पुंसश्च सन्तप्यतेऽथ रेतः सिच्यते तत्ततः प्रजायते ।
(श० ब्रा० ३।५।३।१६)

पराग्घ्येव रेतः सिच्यते ।　　(श० ब्रा० ३।५।३।१६)

इमे प्राणाः परः सविद्रे ।　　(श० ब्रा० ३।५।४।१७)

इमे प्राणाः । मनुष्यशिरःस्था. प्राणाः । संविद्रे । संविद्रते । संगता भवन्ति । "लोपस्त आत्मनेपदेषु" (पा० सू० ७।१।४१) इति 'त'लोपः । "वेत्तेर्विभाषा" (पा० सू० ७।१।७) इति रुट् ।

यथा दद्भिः प्सायादेवं तत् ।　　(श० ब्रा० ३।५।४।२४)

प्सायात् । भक्षयेत् । भक्षयति । प्साभक्षणे इति धातुः ।

आपो ह वा ओषधीना रसः, तस्मादोषधय. केवल्य. खादिता न धिन्वन्ति। ओषधय उ हापा रस., तस्मादाप. पीता केवल्यो न धिन्वन्ति। यदैवोभय्य: ससृष्टा भवन्त्यथैव धिन्वन्ति । तर्हि हि सरसा भवन्ति।
(श० ब्रा० ३।६।१।७)

न धिन्वन्ति । न प्रीणयन्ति ।

स यः सर्वासामोषधीना रस आसीत् त यवेष्वदधु', तस्माद् यत्रान्या ओषधयो म्लायन्ति तदेते मोदमाना वर्द्धन्त एव ह्येषु रसमदधुः ।
(श० ब्रा० ३।६।१।१०)

अयुवत । अमिश्रयन् ।

पितृदेवत्यो वै कूपः खातः । (श० ब्रा० ३।६।१।१३)

पितृदेवत्य. । पित्र्यकार्येषु प्रायेण गर्तस्य दर्शनादिति भाव. ।

पितृदेवत्यं वा अस्या एतद् भवति यन्निखातम्। सा यथा निखातौषधिषु मिता स्यादेवमेतास्वोषधीषु मिता भवति । (श० ब्रा० ३।६।१।१४)

अस्याः । शाखाया ।

प्राणोदानौ वै मित्रावरुणौ । (श० ब्रा० ३।६।१।१६)

मित्रावरुणशब्दयोरर्थमाह—प्राणोदानौ वै मित्रावरुणाविति । एतदधिदैवतम् । अहोरात्राभिमानिनौ देवाविति (ऐ० ब्रा० ४।२।४) अध्यात्मन् ।

त्रिवृद्वै यज्ञः । (श० ब्रा० ३।६।१।२२)

त्रिवृत्स्तोमसाध्यत्वाद् यज्ञस्य त्रिवृत्त्वम् ।

नव वै त्रिवृत् । (श० ब्रा० ३।६।१।२२)

त्रिवृत्स्तोमो 'नव वै' नवस्तोत्रियात्मकः खलु ।

तदिद क्षत्रमुभयतो विशा परिबृढम् । (श० ब्रा० ३।६।१।२४)

क्षत्रियस्योभयतस्तत्क्षेमार्थं प्रजास्तिष्ठन्तीति भावः ।

यो वै ज्ञातोऽनूचानः स समृद्ध' । (श० ब्रा० ३।६।१।२६)

ज्ञातः । अयं सदाचारीति विदितः । अनूचान । साङ्गप्रवचनाध्यायी । समृद्ध. । श्रेष्ठः ।

यस्य ह गोपनायामपहरन्ति हीयते ह । (श० ब्रा० ३।६।२।१४)

तस्माद् ब्रह्मचारिण आचार्य्यं गोपायन्ति ।
गृहान्पशून्नेन्नोऽपहरानिति । (श० ब्रा० ३।६।२।१५)

अपहरान् । अपहरेयु. ।

तस्मादाहु. पुण्यलोक ईजान इति । (श० ब्रा० ३।६।२।१५)

ऋणं ह वै पुरुषो जायमान एव मृत्यो रात्मना जायते। स यद्यजते····
एतन्मृत्योरात्मानं निष्क्रीणीते ।
(श० ब्रा० ३।६।२।१६)

जायमान एव मृत्यो । ऋणभावे जननमेवोपाधिरित्यर्थ. । इदमृणं प्रातिभाव्यवदन्यत आयातं न भवति, किन्तु स्वत एवायातमित्येवमर्थमाह—'आत्मना' इति ।

मृत्युभयपरिहाराय सोमयागस्यावश्यकर्तव्यतात्र प्रतिपाद्यते ।

तस्माद् ब्राह्मणोऽनृद्ध्यमाने द्वितीयं नाम कुर्वीत ।
राघ्नोति हैव स एव विद्वान् द्वितीय नाम कुरुते ।।(श० ब्रा० ३।६।२।२४)

या वै प्रजा यज्ञेऽनन्वाभक्ता पराभूता वै ताः। एवमेवैतद्या इमाः प्रजा अपराभूतास्ता यज्ञ आभजति। मनुष्याननु पशवो देवाननु वयांस्योषधयो वनस्पतयो यदिद किञ्च। एवमु तत्सर्व यज्ञ आभक्तम् ।
(श० ब्रा० ३।६।२।२६)

या वै प्रजाः । देवपितृमनुष्यव्यतिरिक्ता असुररक्षःप्रभृतिकाः ।

सर्वं वा एषोऽभिदीक्षते। यो दीक्षते यज्ञं ह्यभिदीक्षते। यज्ञं ह्येवेदं सर्वमनु। त यज्ञं सम्भृत्य यमिममभिदीक्षते सर्वमिदं विसृजते ।
(श० ब्रा० ३।६।३।१ )

सर्वं यज्ञमनु । सर्वं यज्ञमनुसृत्य उत्पन्नम् । अभि = अभिलक्ष्य । सर्वं विसृजते । कृष्णाजिनमेखलादिकं सर्व विसृजते ।

अग्नीषोमौ वा एतमन्तर्जम्भ आदधाते यो दीक्षते। (श० ब्रा० ३।६।३।१९)
अग्निर्हि देवानां व्रतपतिः । (श० ब्रा० ३।६।३।२१)
तस्माद् दीक्षितस्य नाश्नीयात् । (श० ब्रा० ३।६।३।२१)

तद्यथा बहूनां मध्यात् साधवे कर्मणे जुषेत स रातमनास्तस्मै कर्मणे स्यादेवम् । (श० ब्रा० ३।६।४।७ )

जुषेत । सेवेत । रातमना. । दत्तचित्तः ।

त्रिवृद्वै यज्ञो नव वै त्रिवृत् । (श० ब्रा० ३।६।४।२१)

त्रिवृदादिस्तोमसाध्यत्वात् सवनभेदेन त्रिवृत्त्वाद्वा, यज्ञस्त्रिवृत् । स च त्रिवृत्स्तोमः 'नव वै' स्तोत्रियनवकरूपत्वात् (सायणः) ।

संवत्सरो वज्रः । (श० ब्रा० ३।६।४।२३)

संवत्सरस्य, वृत्रप्रहरणकाले पुनः पुनरावर्तनसाम्याद् वा, सवत्सरनिर्वर्त्तकस्यादित्यस्यासुरघातकत्वाद् वा सारभूतत्वाद् वा वज्रत्वम् (सायणः) ।

पञ्चदशो वै वज्रः । (शा॰ ब्रा० ३।६।४।२५)

"उरसो बाहुभ्यां पञ्चदशं निरमिमीत, तमिन्द्रो देवतान्वसृज्यत" (तै० सं० ७।१।१।४) इति श्रुतेः पञ्चदशस्येन्द्रसबन्धाद् द्रष्टव्यम् (सायण) ।

तेजो ह वा एतद्वनस्पतीना यद्बाह्याशकलस्तस्माद् यदा बाह्याशकलमपतक्षणुवन्त्यथ शुष्यन्ति तेजो ह्येषामेतत् । (श० ब्रा० ३।७।१।८ )

सर्वं वा इद मधु यदिद किञ्च । (श० ब्रा० ३।७।१।११)

"इयं पृथिवी सर्वेषा भूतानां मधु" (श० ब्रा० १४।५।५।१) इत्याद्युक्तप्रकारेण सर्वमिद मधु" (सायण) ।

त्रिवृद्धयन्न पशवो ह्यन्न पिता माता यज्जायते तत्तृतीयम् ।
(श० ब्रा० ३।७।१।२०)

यथेषुरस्ता तया वं स्तृणुते वा न वा स्तृणुते । (श० ब्रा० ३।७।२।२ )

स्तृणुते । विध्यति ।

यथा दण्ड प्रहृतस्तेन वै स्तृणुते वा न वा स्तृणुते ।(श०ब्रा० ३।७।२।२ )

यथेषुरायतानस्ता यथोद्यतमप्रहृतमेवम् । (श० ब्रा० ३।७।२।२ )

यथा धर्म तिरश्चथा चिकीर्षेदेवं तत् । (श० ब्रा० ३।७।३।७ )

द्वितीयवान्हि वीर्यवान् । (श० ब्रा० ३।७।३।८ )

उप हि द्वितीयोऽवति । (श० ब्रा० ३।७।३।८ )

लोक एकः कर्म कर्तुमशक्तः, द्वितीयस्तत्साहाय्यकरणेन तमवतीति प्रसिद्धम् ।

दैव्यो वा एता विशो यत्पशव. । (श० ब्रा० ३।७।३।६ )

विद्वासो हि देवाः । (श० ब्रा० ३।७।३।१०)

त्वष्टा वै पशूनामीष्टे ।	(श० ब्रा० ३।७।३।११)

पशवो वसु ।	(श० ब्रा० ३।७।३।११)

रेवन्तो हि पशवः ।	(श० ब्रा० ३।७।३।१३)

वरुण्या वा एषा यद्रज्जुः ।	(श० ब्रा० ३।७।४।१ )

इदं हि यदा वर्षति, अथौषधयो ओषधीर्जग्ध्वाऽपः पीत्वा तत एतत एष रसः सम्भवति । रसाद्रेतो रेतसः पशवः ।	(श० ब्रा० ३।७।४।४ )

अग्निर्हं दैवीनां विशा पुर एता ।	(श० ब्रा० ३।७।४।१०)

अग्निर्हि देवाताना मुखम् ।	(श० ब्रा० ३।७।४।१०)

अथा प्रीभिश्चरन्ति । तद्यदा प्रीभिश्चरन्ति सर्वेणेव वा एष मनसा सर्वेणेवात्मना यज्ञ संभरति सञ्च जिहीर्षति यो दीक्षते तस्य रिरिचान इवाऽत्मा भवति तमेताभिराप्रीभिराप्याययन्ति । तद्यदाप्याययन्ति तस्मादाप्रियो नाम ।	(श० ब्रा० ३।८।१।२ )

समित्तनूनपादित्याद्येकादश प्रयाजा आप्रियः! रिरिचान इव । रिक्तः शून्य इव (निरुक्ते८।२।१-७) ।

ते वा एत एकादश प्रयाजा भवन्ति । दश वा इमे पुरुषे प्राणा आत्मैकादशो यस्मिन्नेते प्राणाः प्रतिष्ठितः एतावान् वै पुरुष. । तदस्य सर्वमात्मानमाप्याययन्ति । तस्मादेकादश प्रयाजा भवन्ति ।	(श० ब्रा० ३।८।१।३ )

अग्निर्हि रक्षसामपहन्ता ।	(श० ब्रा० ३।८।१।६ )

वाग्वै रेवती सा यद्वाग्बहु वदति तेन वाग्रेवती ।	(श० ब्रा० ३।८।१।१२)

अन्तरिक्ष वा अनु रक्षश्चरत्यमूलमुभयतः परिच्छिन्नम् ।
(श० ब्रा० ३।८।१।१२)

परिच्छिन्नम् । उपरि अधस्ताच्च संश्लेषरहितम् ।

जीवं वै देवानां हविरमृतममृतानाम् ।	(श० ब्रा० ३।८।२।४ )

रक्षसां ह्येष भागो यदसृक् ।	(श० ब्रा० ३।८।२।१४)

अमूल वा इदमुभयतः परिच्छिन्न रक्षोऽन्तरिक्षमनुचरति, यथाऽयं पुरुषोऽमूल उभयत परिच्छिन्नोऽन्तरिक्षमनुचरति ।	(श० ब्रा० ३।८।२।१५)

इतः प्रदाना वै वृष्टिरितो ह्यग्निर्वृष्टिं वनुते । स एतै स्तोकैरेतान् स्तोकान् वनुते । त एते स्तोका वर्षन्ति ।	(श० ब्रा० ३।८।२।२२)

इतः प्रदाना वै वृष्टिः। अस्माद् भूलोकात् प्रजाता। स्तोकैः। घृतस्तोकैः। एतान्। वृष्ट्यवयवभूतान्।

सर्वेषां वा एष पशूनां मेधो यद्व्रीहियवौ। (श० ब्रा० ३।८।३।१)

सर्वा ह वै देवता पशुमालभ्यमानमुप सङ्गच्छन्ते-मम नाम ग्रहीष्यति, मम नाम ग्रहीष्यतीति। सर्वासां हि देवतानां हविः पशुः। तासां सर्वासां देवतानां पशौ मनांस्योतानि भवन्ति। (श० ब्रा० ३।८।३।१४)

ओतानि। संबद्धानि।

दश पाण्या अङ्गुलयो दश पाद्या दश प्राणाः प्राण उदानो व्यान इत्येतावान् वै पुरुषः। य परार्ध्यः पशूनाम्। य सर्वेऽनु पशवः। (श० ब्रा० ३।८।४।१)

प्राण उदानो व्यान इति त्रयो मुख्यप्राणाः।

द्वन्द्वं वै मिथुनं प्रजननम्। (श० ब्रा० ३।८।४।७)

पश्चाद्धि योषायै प्रजाः प्रजायन्ते। (श० ब्रा० ३।८।४।१०)

प्रजापतिर्वै प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां पर्यगृह्णात् ता इमा द्यावापृथिवीभ्यां परिगृहीताः। (श० ब्रा० ३।८।४।१७)

इयं वै पृथिव्यग्निर्वैश्वानरः। (श० ब्रा० ३।८।५।४)

अग्निर्वै देवतानां मुखम्। प्रजनयिता स प्रजापतिः। स उ एव यजमानः। (श० ब्रा० ३।९।१।६)

यो वाचा प्रसाम्यन्नादो हैव भवति। (श० ब्रा० ३।९।१।९)

प्रसामि। अत्यल्पं।

ब्राह्मणः पशूनभिधृष्णुतमः। पुराहिता ह्यस्य भवन्ति मुख आहिताः। तस्मादु तत्सर्वं दत्वाऽजिनवासी चरति। (श० ब्रा० ३।९।१।१२)

अभिधृष्णुतमः। अत्यन्तधर्षकः। पुराहिताः। पुरोहिताः।

अस्य सर्वस्य ब्राह्मणो मुखम्। (श० ब्रा० ३।९।१।१४)

क्षत्रं वा इन्द्रो विशो विश्वेदेवाः। (श० ब्रा० ३।९।१।१६)

विशो वै मरुतः। (श० ब्रा० ३।९।१।१७)

विशैवैतत्क्षत्रं परिबृंहति। (श० ब्रा० ३।९।१।१८)

तदिदं क्षत्रमुभयतो विशा परिवृढम्। (श० ब्रा० ३।९।१।१८)

रश्मयो ह्यस्य विश्वेदेवाः। (श० ब्रा० ३।९।२।६)

अस्य । आदित्यस्य ।

यथा श्रेयस्यागमिष्यत्यावसथेनोपक्लृप्तेनोपासीतैव तत् ।
(श० ब्रा० ३।९।२।७)

श्रेयस्य । गुर्वादिः पूज्यस्य । आवसथेन । आवासस्थानेन । उपक्लृप्तेन । संपन्नेन ।

इन्द्राग्नी हि विश्वेदेवा. ।    (श० ब्रा ३।९।२।१४)

इन्द्राग्न्योरत्यन्तं प्राधान्यादेव तौ हि विश्वेदेवा इत्युक्तिः ।

इय वै प्रतिष्ठा जनूरासा प्रजानाम् ।    (श० ब्रा० ३।९।३।२)

इयं खलु भूमि । जनूः । जन्मभूमिः ।

तस्मादु क्षत्रियमायन्तमिमा. प्रजा विशः प्रत्यवरोहन्ति तमधस्तादुपासते ।
(श० ब्रा० ३।९।३।७)

यातयामानि वै देवैश्छन्दासि । छन्दोभिर्हि देवाः स्वर्गं लोक समाश्नुवत ।
(श० ब्रा० ३।९।३।१०)

स्वर्गार्थमुपयुक्तत्वात् तेषा छन्दसा यातयामत्वम् ( = गतसारत्वम्) ।

योषित्कामा वै गन्धर्वा ।    (श० ब्रा० ३।९।३।२०)

योषित्कामा । योषित्प्रियाः ।

सत्य वै शुक्रम् ।    (श० ब्रा० ३।९।३।२५)

शुक्रं दीप्तं रसाख्य वस्तु, तत्सत्यम् ।

यथा वा अङ्गारोऽग्निनाप्सातः स्यादेवम् ।    (श० ब्रा० ३।९।३।२६)

प्सात. । भक्षित । अग्निना भक्षितोऽङ्गारो यथा करीषभावेन त्याज्यो भवति, एवम् ।

द्वय वा इद न तृतीयमस्ति । सत्यं चैवाऽनृत च । सत्यमेव देवा अनृतं मनुष्याः ।    (श० ब्रा० ३।९।४।१)

देवो वै सोमो दिवि हि सोम. ।    (श० ब्रा० ३।९।४।२)

वृत्रो वै सोम आसीत् तस्यैतच्छरीर यद्गिरयो यदश्मानः ।
(श० ब्रा० ३।९।४।२)

तस्य वृत्रीभूतस्य सोमस्य ।

आश्विनावद्धवर्यू ।    (श० ब्रा० ३।९।४।३)

पूषा भागदुघ. ।    (श० ब्रा० ३।९।४।३)

सवत्सरसंमितो वै यज्ञः । (श० ब्रा० ३।९।४।११)

य द्विष्यात् त मनसा ध्यायेत् । अमुष्मा अह् प्रहरामि न तुभ्यमिति । यो वेवेम मानुष ब्राह्मणं हन्ति त न्वेव परिचक्षते । (श० ब्रा० ३।९।४।१७)

परिचक्षते । दूष्यत्वेन वर्जयन्ति ।

यद्यु न द्विष्यादपि तृणमेव मनसा ध्यायेत् तथो अनेनस्यं भवति ।
(श० ब्रा० ३।९।४।१७)

अनेनस्यम् । न विद्यते एन पापं यस्य सः अनेनाः । तस्य भावः अनेनस्यम् ।

**इति शतपथब्राह्मणपर्यालोचने**

**तृतीयं काण्डं समाप्तम् ॥**

# षत्वमीमांसा

**डॉ० रामकिशोरशुक्लः, व्याकरणाचार्य., प्राध्यापक,**
**व्याकरणविभागे, सं० सं० विश्वविद्यालयः, वाराणसी**

अथ "शब्दानुशासनम्" इति महाभाष्यीयप्रथमवाक्यघटकीभूतशब्दशब्देन साधुशब्दग्रहस्यैव युक्तत्वात्, तत्रोद्देश्यतावच्छेदकव्यापकत्वस्य विधेयभूतेऽनुशासनेऽबाधादपरित्यागाद् व्याकरण-शास्त्रस्य साधुशब्दज्ञान प्रयोजनमित्यास्थीयते। अतोऽत्र तदन्तर्भूतस्य षत्वस्य साधुत्वप्रक्रिया-प्रदर्शनार्थं प्रयत्यते। तत्र अष्टाध्याय्याम् अष्टषष्टिसंख्याकानि प्रकृतविषयकाणि सूत्राणि सन्ति। तेषु अष्टपञ्चाशत् षत्वविधायकानि दश सूत्राणि च तन्निषेधविधायकानि। अष्टाध्यायीपाठे येन क्रमेण इमानि सूत्राणि पठितानि, तेनैव क्रमेण मयाप्यत्र व्याख्यातानि। "सूत्रेष्वदृष्टं पदं सूत्रान्त-रादनुवर्त्तनीयम्" इति नियममनुसृत्य यस्मात् सूत्राद् यस्य पदस्य यस्मिन् सूत्रेऽनुवृत्तिरपकर्षो वा अपेक्षितस्तत्सर्वोऽपि सम्यक् प्रदर्शित·। यत्र सूत्रार्थे प्राचीननव्ययोर्मतभेद, तत्प्रयुक्तफलभेदो वा शास्त्रे प्रतिपादित., तत्र युक्तायुक्तत्वविचारेण य. साधुपक्ष स एव मया गृहीत.। सिद्धान्तकौमुद्या यद् वार्त्तिकं यस्य सूत्रस्य व्याख्यावसरे व्यवहृतम्, तस्यैव सूत्रस्याध्यायपादसङ्केतस्तस्मिन् वार्त्तिके मया कृत.। यद्येकसूत्रघटकीभूतस्य पदस्योत्तरत्रानेकेषु सूत्रेष्वनुवृत्तिः क्रियते, तदा पूर्वत्रैवा-ध्यायपादसकेतो विहित, न तु सर्वत्र, गौरवात्।

यद्यप्येषा सूत्राणा व्याख्यावसरे भाष्यादिषु बहवो विचारा महता समारोहेण पूर्वपक्ष-रूपेणोत्तरपक्षरूपेण चोत्थापिता समाहिताश्च, तथापीह मघवापदस्य बिडौजापर्य्यायवद् ज्ञान-गौरवभयाल्लेखगौरवभयाच्च मयोपेक्षिताः।

कृतेऽपि श्रमे निबन्धेऽस्मिन् यास्त्रुटय प्रमादादज्ञानाद् वा सन्ति तासा कृते क्षन्तव्योऽ-यमल्पज्ञ सुधीभि।

**क्र० सं० १** "**इण. ष**" (८।३।३९) अत्र सूत्रे "विसर्जनीयस्य स." (८।३।३४) इत्यतः 'विसर्जनीयस्य' इति, "कुप्वोः ᳲक ᳲपौ च" (८।३।३७) इत्यत 'कुप्वो.' इति, "सोऽप-दादौ" (८।३।३८) इत्यत 'अपदादौ' इति चानुवर्तते। "अनव्ययस्य" (८।३।३८) "काम्ये रोरेव" (८।३।३८) इति वार्त्तिकद्वयञ्च सम्बध्यते। "पाशकल्पककाम्येष्विति वाच्यम्" इति वृत्तिग्रन्थः सम्भवाभिप्रायेणेहाप्युल्लिखित, एतेनेद वार्त्तिकमिति न भ्रमितव्यम्। अत इण परस्यानव्ययस्य विसर्गस्य षकार स्यादपदाद्यो कुप्वोः परयो.। स च जायमान. 'पाशकल्पकेषु' सामान्यस्य विसर्गस्य स्थाने, काम्ये तु रोरेव विसर्गस्य स्थाने। सर्पिष्पाशम्, सर्पिष्कल्पम्, सर्पिष्कम्, सर्पिष्काम्यति। अपदाद्योः कुप्वोरित्युक्त्या 'अग्नि. करोति' इत्यादौ, अनव्ययस्येति विशेषणेन 'दो. पाशम्, उच्चै. कल्पम्' इत्यादौ, "काम्ये रोरेव" इत्युक्त्वा च 'गीः काम्यति' इत्यादौ च न षत्वप्रवृत्तिः।

सूत्रमिदम् **"सोऽपदादौ"** (८।३।३८) इत्यस्यापवादभूतम् । अत· "उत्सर्गापवादयोः समानविषयकत्वनियमाद्" यथा प्रकृतसूत्रे वार्त्तिकद्वयस्य सम्बन्धादुक्तेषूदाहरणेषु षत्वाभाव , तथैव "सोऽपदादौ" इत्युत्सर्गशास्त्रेऽपि सम्बन्धात् सत्वमपि नेति विभावनीयम् । तेन सति सम्भवे इण उत्तरस्य विसर्गस्य षत्वम्, अन्यस्य विसर्गस्य 'यशस्पाशम्' इत्यादौ च सत्वमिति विवेक· ।

**क्र० सं० २ "इदुदुपधस्य चाप्रत्ययस्य"** (८।३।४१) इहापि 'विसर्जनीयस्य' इति "कुप्वोः" इति चानुवर्तते । 'इदुदुपधस्य' इति 'अप्रत्ययस्य' इति च 'विसर्जनीयस्य' इत्यस्य विशेषणम् । अत इकारोकारोपधस्याप्रत्ययस्य विसर्जनीयस्य ष· स्यात् कुप्वो परयो । अत्र सूत्रार्थे प्राचीननव्ययोर्मतभेद । यथा मनोरमाकृन्मते उपधापदसन्निधानेन समुदायस्याक्षेपात् पूर्वत्र वैयधिकरण्येनान्वय·, उत्तरत्र तु सामानाधिकरण्येनैवान्वय·, तेन 'इदुदुपधसमुदायस्यावयवोऽप्रत्ययो यो विसर्गस्तस्य षत्वम्' इत्यर्थ. सम्पद्यते । निष्कृतम्, दुष्कृतम् । विसर्गेऽप्रत्ययविशेषणेन 'अग्निः करोति' 'वायु. करोति' इत्यादौ षत्वाभाव । कस्कादिगणे भ्रातुष्पुत्रशब्दस्य पाठसामर्थ्याद् "एकादेशशास्त्रनिमित्तकस्याप्रत्ययस्यापि विसर्गस्य षत्वाभावो ज्ञाप्यते । तेन 'मातु. कृपा' इत्यादौ षत्वाप्रवृत्ति. सिद्धचति । **"षत्वतुकोरसिद्धः"** (६।१।८६) इत्यनेनैकादेशशास्त्रस्यासिद्धत्वज्ञापनेन षत्ववारण तु न युक्तम्, तेन पदान्तपदाद्योरेव स्थाने प्रवृत्तस्यैकादेशशास्त्रस्यासिद्धत्वज्ञपनात् । अत एव ' शकहूषु" षत्वम्, "कोऽसिचत्" इत्यत्र षत्वाभावश्च सिध्यति ।

शब्दरत्नकृतोऽयमभिप्राय —"इदुदुपधस्य समुदायस्यावयव" इत्येवविधवैयधिकरण्येनान्वयस्वीकारे 'अय कुण्डलसोमसुत्' इत्यादावपि षत्वापत्ति स्यात् । अपि च "इदुदुपधस्य" इत्यत्रान्यपदार्थत्वेनोपस्थितस्य विसर्गस्य परित्यागे, उपधापदसन्निधानेनान्यपदार्थत्वेन समुदायस्याक्षेपे च गौरव सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यम्, लाघवमूलकन्यायानादरश्चेति विविधदोषदूषितत्वादयं पक्षो न सम्यक् प्रतिभाति । अत 'इदुदुपधस्य विसर्गान्तस्य पदस्य' इति सामानाधिकरण्यमेव समीचीनम् ।

वस्तुतस्तु—'इदुदुपधस्य समुदायस्यावयव.' इति वैयधिकरण्यमेवोचितम् । 'अयः कुण्डलसोमसुत्' इत्यत्र षत्वापत्तिवारणं तु प्रत्यासत्तिन्यायेन । तथाहि—'निष्कृतम्' 'दुष्कृतम्' इत्यादाविकारोकारोपधसन्निहितविसर्गस्य षत्वविधानेन सूत्रस्य चारितार्थ्यादसन्निहितविसर्गेऽप्रवृत्ते । किञ्च सामानाधिकरण्येनान्वयपक्षे उपधापदसन्निधानेनान्यपदार्थत्वेन समुदायस्यैव शीघ्रोपस्थितिकत्वम्, न तु विसर्गान्तस्य पदस्य । अपि च पदाधिकारस्य विशेषणत्वमित्यर्थप्रतिपादकभाष्यविरोधश्चापतति ।

"अप्रत्ययस्य" इत्यत्र 'अप्रत्ययो यो विसर्ग' इति सामानाधिकरण्येनैवान्वयं स्वीकुर्वन्ति मनोरमाकारा । शब्दरत्नकारमते तु सामानाधिकरण्येनान्वयस्वीकारे 'कविभि कृतम्'

---

**विशेष** .—यद्यपि सिद्धान्तकौमुद्या साम्प्रतम् अध्ययनाध्यापनादिषु सर्वत्राधिक प्रचारो विद्यत इति कि सूत्र तत्र कस्मिन् प्रकरणे कस्या क्रमसंख्यायामुपनिबद्धमित्यपि देयमासीत्, तथापि सूत्रार्थकरणेऽनुवृत्त्यधिकारादिकार्येऽष्टाध्यायीपाठस्यैव महानुपयोग इत्यध्यायपादसंख्याक्रमेणैव सूत्राणा संख्या मयाऽत्र निर्दिष्टा ।

इत्यत्रापि विसर्गस्य प्रत्ययभिन्नत्वात् षत्वप्राप्ति, अपि च प्रत्ययरूपस्य विसर्गस्याप्रसिद्धचा 'अप्रत्ययस्य' इत्यव्यावर्त्तकं स्यात्। 'अग्नि करोति' इत्यादौ स्थानिवद्भावेन प्रत्ययत्वं तु न सुलभम्, अतिदेशशास्त्रदृष्टचा त्रिपाद्या असिद्धत्वात्। अत प्रत्ययपदस्य प्रत्ययावयवे लक्षणामङ्गीकृत्य 'प्रत्ययावयवभिन्नस्य विसर्गस्य' इति वैयधिकरण्येनैवान्वय साधु।

वस्तुतस्तु—मनोरमाकारमतमेव समीचीनम्—'अग्नि करोति' इत्यत्र स्थानिवद्भावेन विसर्गस्य प्रत्ययत्वप्रसिद्धचा षत्वव्यावृत्ति। "अप्रत्ययस्य" इति निषेधेनैवातिदेशशास्त्रदृष्टचा त्रिपाद्या सिद्धत्वज्ञापनात्। अत एव 'अग्नि' इत्यादौ रेफे सुप्त्वात् समुदायस्य पदत्वसिद्धचा विसर्ग सिद्धचति। "पूर्वत्रासिद्धे न स्थानिवद्" इत्युक्तिस्तु "अच परस्मिन् पूर्वविधौ" (१।१।५७) इत्येतत्सूत्रविषयिका। 'कविभि कृतम्' इत्यत्र षत्वाभावस्तु प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारेण निर्वाह्य। तादृशव्यवहारे मान च "प्रत्ययलोपे प्रत्ययलक्षणम्" (१।१।६२) इत्यत्र प्रथमप्रत्ययग्रहणमेव।

क्र० सं० ३ "द्विस्त्रिश्चतुरिति कृत्वोऽर्थे" (८।३।४३)। इह "विसर्जनीयस्य" इति "कुप्वो." इति "इण· ष" (८।३।३८) इत्यत. 'ष' इति, "तिरसोऽन्यतरस्याम्" (८।३।४२) इत्यतोऽन्यतरस्यामिति चानुवर्तते। अत कृत्वोऽर्थे विद्यमानानामेषा विसर्गस्य षकारो वा स्यात् कुप्वो परयो। 'द्विष्करोति, द्वि करोति, त्रिष्करोति, त्रि करोति, चतुष्करोति, चतु करोति' अत्र 'कृत्वोऽर्थे' इति विशेषणेन 'चतुष्कपालम्' इत्यत्र चतु शब्दस्य कृत्वोऽर्थेऽविद्यमानत्वान्न विकल्पेन षत्वम्, किन्तु "इदुदुपधस्य चाप्रत्ययस्य" इत्यनेन नित्यमेव, 'चतुष्पादभ्यो ढञ्' इति निर्देशेन चतु शब्देऽव्युत्पत्तिपक्षस्यैवाङ्गीकारात्। व्युत्पत्तिपक्षेऽपि ज्ञापकसिद्धं न सर्वत्रेति न्यायेन प्रत्ययावयवे प्रत्ययत्वव्यवहाराभावाद् "इदुदुपधस्य" इत्यनेन नित्यषत्वप्रवृत्तिर्बोध्या।

क्र० सं० ४ "इसुसो सामर्थ्ये" (८।३।४४) 'ष' इति 'कुप्वो.' इति 'विसर्जनीयस्य' इति 'अन्यतरस्याम्' इति चानुवर्तते। इसुसोर्विसर्गस्य षो वा स्यात् कुप्वो परयो सामर्थ्ये गम्यमाने। 'सर्पिष्करोति, सर्पि करोति धनुष्करोति, धनु करोति'। 'सामर्थ्य' इत्युच्यमाने 'तिष्ठतु सर्पि, पिबत्वमुदकम्' इत्यादौ विसर्गस्य न षत्वम्, 'सर्पि' इत्यस्य 'पिब' इत्यनेन सामर्थ्याभावात्। अत्र सूत्रे सामर्थ्यं व्यपेक्षारूपम्। तच्च स्वार्थपर्यवसायिना पदानामाकाङ्क्षादिवशात् परस्परान्वयरूपम्। इह इसुसोरन्योन्यसाहचर्येण प्रातिपदिकावयवयोरेव ग्रहणम्, उत्तरसूत्रेऽनयोरेवानुवृत्ते समासे तयोरेव सम्भवात्। प्रकृते साहचर्यञ्चेत्थम्—तिङ्भिन्नेसुसाहचर्यादुस् तिङ्भिन्न एव गृह्यते, तिङ्भिन्नश्चोस् औपदेशिकविभक्त्यनवयवत्वविशिष्ट एव मिलतीति तत्साहचर्यादिस अपि विभक्त्यनवयव एव गृह्यते। तेन 'पेचु काष्ठै, सख्यु काम., कविभि: कृतम्' इत्यादौ प्रकृतसूत्राप्रवृत्ति, इसुसोर्विभक्त्यवयवत्वात्।

क्र० सं० ५ 'नित्य समासेऽनुत्तरपदस्थस्य' (८।३।४५) इहापि "विसर्जनीयस्य" इति, "ष." इति, "कुप्वो." इति, पूर्वसूत्राद् 'इसुसो:' इति चानुवर्तते। अनुत्तरपदस्थस्येसुसोर्विसर्गस्य समासे नित्यं ष: स्यात् कुप्वो परयो। सर्पिष्कुण्डिका, धनुष्कपालम्। अनुत्तरपदस्थस्येति विशेषणेन 'परमसर्पि कुण्डिका' इत्यादौ न षत्वप्रवृत्ति। नन्वत्र सर्पिरित्यस्य मध्यमपदत्वाक्रान्तत्वात् कथमुत्तरपदस्थत्वमिति चेन्न, परमञ्च तत्सर्पिरिति विग्रहे सम्पद्यमानाया कर्मधारयवृत्तौ तस्योत्तरपदत्वसम्भवात्।

अत्रेदं विचार्य्यते— सर्पिष्कुण्डिका' इत्यत्र प्रकृतसूत्रेणैव षत्वसिद्धौ तदर्थं कष्कादिगणे पाठो व्यर्थ इति चेत्, उच्यते—असमासे, व्यपेक्षारूपसामर्थ्याभावे च द्वयो. सूत्रयोरप्राप्तौ 'तिष्ठतु सर्पिष्कुण्डिकामानय' इत्यादौ षत्वार्थम्, व्यपेक्षायाम् 'इद सर्पिष्कुण्डिकाया·' इत्यत्र नित्य-षत्वार्थञ्च कष्कादिगणे पाठ इत्यस्य स्वीकार्यत्वात् ।

नन्वेवं व्यपेक्षाया पूर्वसूत्रेण विकल्पे कष्कादिपाठेन नित्ये च प्राप्ते कस्य प्रवृत्ति स्यादिति चेदुच्यते, प्रतिपदविधित्वेन कष्कादिपाठेन नित्यषत्वप्रवृत्तेरेवोचिततत्वात् ।

क्र० सं० ६ "अपदान्तस्य" मूर्धन्य ( ८।३।५५ ) अधिकारसूत्रमिदम् । अत सूत्रादुत्तर-त्रापादपरिसमाप्ते ' 'अपादान्तस्य' इति, 'मूर्धन्य ' इति चाधिक्रियते । तेनेत आरभ्य पादसमाप्ति यावत् केषुचित् सूत्रेष्वेतत् पदद्वय केपुचिच्चानयोरन्यतरदेव पद सम्बध्यते । यथा "आदेश-प्रत्यययो." इत्यत्र पदद्वयम्, "उपसर्गात्सुनोति" इत्यादौ च "मूर्धन्य " इत्येवाधिक्रियते, न त्व-पदान्तस्येति, उपसर्गस्थान्निमित्तादव्यवहितपरस्य पदान्तसकारस्यासम्भवेन व्यावर्त्यालाभात् ।

अत्रेद तत्त्वम्-अपदान्तस्येत्यंशो मण्डूकप्लुतिन्यायेन "आदेशप्रत्यययो." इत्यादिषु केषुचिदेव सम्बध्यते, न तु सर्वेषु, फलाभावात् । अत एव काशिकासिद्धान्तकौमुद्यादिग्रन्थेषु 'अपदान्तस्य' इत्यंशस्य "आदेशप्रत्यययो " इति सूत्र एव हरिस्तत्रेत्यत्र षत्वाभावरूपं फल प्रदर्शितम् । यद्यपि मूर्धन्याधिकारस्य स्थाने "आदेशप्रत्यययो " इति सूत्रे 'प ' इति कारणेनापि कार्यसिद्धिर्लाघवञ्च, तथापि णत्वप्रकरणे "अपदान्तस्य मूर्धन्य " इत्यधिकारस्य सञ्चारेण "रषाभ्या नो ण. समानपदे" इत्यत्र णग्रहणम् "पदान्तस्य" इति सूत्रञ्च न कर्त्तव्यमिति तदपेक्षया महल्लाघवम् ।

क्र० सं० ७ "सहे. साड. स " (८।३।५६) इह सूत्रे "अपदान्तस्य मूर्धन्य " (८।३।५५) इत्यत 'मूर्धन्य.' इति सम्बध्यते । सूत्रे पदत्रयमपि षष्ठ्यन्तम्, अत. साड्रूपस्य सहे सस्य मूर्धन्यादेशो भवति । तुर त्वतिरं साहयतीति विग्रहे कर्मवाचकतुररूपप्रातिपदिकप्रकृतिकसुबन्त-रूपे पदे उपपदे सति ण्यन्तात् सहधातोः क्विपि सर्वापहारे विभक्तिकार्ये ढत्वे जश्त्वे वैकल्पिके चर्त्वे 'अन्येषामपि दृश्यते' इत्यनेन दीर्घे 'तुराषाड्, तुराषाट्' इत्युभयत्र षत्वसिद्धि· । अत्र 'सहेः' इति कथनेन सह डेन वर्तते सडस्तस्यापत्यम् 'साडि ' इत्यत्र साड्ग्रहणेन 'तुरासाहौ' इत्यादौ च षत्वाभाव सिध्यति । अस्मादेव सूत्रात् 'स.' इति षष्ठ्यन्त पदं सर्वत्र षत्वविधायकेषूत्तरसूत्रेषु सम्बध्यते ।

क्र० सं० ८ "इण्कोः" (८।३।५७) अधिकारसूत्रमिदम् । इण् च कुश्चेति समाहारद्वन्द्वे एकवचनं सौत्र पुंस्त्वम् । 'इण्को " इति पञ्चम्येकवचनम् । इत आरभ्य पादसमाप्ति यावदु-त्तरत्रसूत्रेषु कुत्रचिद् द्वयो पदयो , कुत्रचिदन्यतरस्यैव पदस्य सम्बन्ध , कस्मिंश्चित् सूत्रे उभयोरपि सम्बन्धाभावोऽसम्भवात् । यथा–"आदेशप्रत्यययो " इत्यादौ द्वयो , "उपसर्गात् सुनोति" इत्यादा-विण एव सम्बन्ध । तेन "आदेशप्रत्यययो " इत्यनेनेणकुभ्यामुत्तरस्यैव सकारस्य षत्वम् 'अग्निषु, वाक्षु' इत्यादौ, न तु 'दास्यति' इत्यादौ । "उपसर्गात् सुनोति" इत्यादिना च 'अभिषुणोति' इत्यादावेव षत्वम्, न तु 'प्रसुनोति' इत्यादौ । "अवाच्चालम्बनाविदूर्ययोः" इत्यादावुभयोरपि सम्बन्धाभावोऽन्वयासम्भवात् ।

क्र० सं० ९ 'नुम्विसर्जनीयशर्व्यवायेऽपि'' ( ८।३।५८ ) प्रकृतसूत्रेऽपि ''अपदान्तस्य मूर्धन्य'' इति ''इण्को'' इति चाधिक्रियते । 'ष' इत्यनुवर्तते । व्यवायशब्द. प्रत्येक सम्बध्यते, अतो नुम्विसर्जनीयशर्भि. प्रत्येक व्यवायेऽपीण्कुभ्यामुत्तरस्यापदान्तस्य सकारस्य मूर्धन्यादेश स्यात् । नुम्व्यवाये—सर्पींषि, विसर्जनीयव्यवाये सर्पि षु, शर्व्यवाये यजुष्षु, अत्र प्रत्येकमित्युक्त्या समुदितव्यवधाने 'निस्से' इत्यादौ षत्वाभाव । 'सर्पि.षु' इत्यत्र ''वा शरि'' इत्यनेन विसर्गपक्षे तेन व्यवधाने ''आदेशप्रत्यययो.'' इत्यनेन षत्वाप्राप्तौ विसर्जनीय-ग्रहणम् । एवमेव नुम्शर्व्यवायेऽपि ज्ञेयम् ।

अत्र सूत्रे नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणम्, न तु सामान्यानुस्वारोपलक्षणम् । अतो नुम्स्थानिकानुस्वारव्यवाय एव षत्वप्रवृत्ति , नतु 'सुहिंसु' इत्यादौ । सामान्यतोऽनुस्वारग्रहणे तु शर्ग्रहणेनैव गतार्थत्वात् पृथक् तद्ग्रहण व्यर्थमेव स्यात् ।

क्र० सं० १० ''आदेशप्रत्यययो'' (८।३।५८) अत्रापि 'अपदान्तस्य मूर्धन्य' इति ''इण्को:'' इति चाधिक्रियते । 'स' इत्यनुवर्तते । आदेशप्रत्यययोरित्यत्र षष्ठी भेदेन सम्बध्यते । तेनादेशपदे समानाधिकरणषष्ठी, प्रत्ययपदे चावयवषष्ठी । अत इण्कुभ्यामुत्तरस्यापदान्त-स्यादेशरूपस्य प्रत्ययावयवस्य च सकारस्य मूर्धन्यादेश. स्यात् । इण. परस्यादेशस्योदाहरणम्—सिषेव । प्रत्ययस्य—अग्निषु, वायुषु । कवर्गपरस्य—वाक्षु । व्यपदेशिवद्भावेन प्रत्ययरूप-सकारेऽपि प्रत्ययावयवत्वव्यवहारात् 'यक्षत्' इत्यत्रापि षत्वसिद्धि. । अत्र यज्धातोर्लेट्लकारे प्रथमपुरुषैकवचने तिप्यनुबन्धलोपे मध्ये सिब्बहुलमित्यादिना सिप्यनुबन्धलोपे लेटोऽडाटावित्या-दिनाडागमे षत्वे कुत्वे पुनः षत्वे रूपं बोध्यम् ।

''इण्को.'' इत्युक्त्या 'रामस्य' इत्यत्र, आदेशप्रत्यययोरित्युक्त्या 'सुपी.' इत्यादौ न च षत्वप्रवृत्ति । अपदान्तस्येति किम् ? हरिस्तत्र ।

क्र० सं० ११ ''शासिवसिघसीनाञ्च'' (८।३।६०) इह ''अपदान्तस्य मूर्धन्य'' इति सूत्रघटकम् 'मूर्धन्य.' इति पदम् ''इण्को'' इति चाधिक्रियते । 'सः' इत्यनुवर्तते । अत इण्-कुभ्या परस्यैषा सकारस्य षो भवति । शासे.—शिष्ट. । वसे.—उषित । घसे —जक्षतुः । पूर्वे द्वे उदाहरणे इण परस्य, तृतीयं कवर्गपरस्य । इण्कोरिति किम् ? 'शास्ति, वसति, जघास' इत्यादौ षत्वाभाव. । यद्यपि ''जक्षतु'' इत्यत्र घसिरादेशरूप , तथापि सकारस्यादेशरूपत्वाभावात् सूत्रे घसेर्ग्रहणं सफलम् । 'अपदान्तस्य'' इति नाधिक्रियत इण. परस्य शास्प्रभृतीना पदान्त-सकारस्य क्वाप्युपलम्भाभावादव्यावर्तकत्वात् ।

क्र० सं० १२ ''स्तौतिण्योरेव षण्यभ्यासात्'' (८।३।६१) अत्रापि 'इण.' इति 'मूर्ध-न्यः' इति चाधिक्रियते । ''स'' इत्यनुवर्तते । ''अपदान्तस्य'' इति ''को'' इति च न सम्बध्येते, षणि पदान्तसकारस्य क्वाप्युपलम्भाभावाद् व्यावर्त्यालाभात् कवर्गात् परत्वाभावाच्च । ''स्तौति-ण्यो.'' इति षष्ठ्यन्तम् । एवकार इष्टावधारणार्थकोऽनिष्टनिवृत्त्यर्थकश्च । 'षणीति' षत्वविशिष्टे सनीत्यर्थकम् । अभ्यासादिति पञ्चम्यन्तम् इणो विशेषणम् । अतोऽभ्यासेण. परस्य स्तौतिण्यन्तयो-रेव सस्य मूर्धन्य. षभूते सनि नान्यस्य । स्तौते.—तुष्टूषति, ण्यन्तस्य—सुष्वापयिषति । ''स्तौतिण्योरेव'' इत्युक्त्या 'सिसिक्षति' इत्यादौ न षत्वम् । एवकारघटितत्वान्नियमार्थमिदं

सूत्रम् । नियमाकारश्चेत्थम्—अभ्यासेण परस्य सस्य षत्व तर्हि स्तौतिण्योरेव । न च "आदेश-प्रत्यययो." इत्यनेनैव पत्वसिद्धावारभ्यमाण सूत्रमेव नियमार्थमिति किमेवकारेणेति वाच्यम्, षण्येवेति विपरीतनियमापत्तौ 'तुष्टाव' इत्यादौ षत्वानापत्ते । मध्ये पाठादिद सूत्रम् "मध्येऽपवादा· पूर्वान् विधीन् बाधन्ते नोत्तरान्" इति न्यायेन "आदेशप्रत्यययो " इति सूत्रमेव बाधते, न तूत्तरान् 'उपसर्गात् सुनोति" इत्यादीन् । तेन 'परिपिषिक्षति' इत्यादौ "स्थादिष्वभ्यासेन" इदिना षत्व भवत्येव ।

**क्र० सं १३** "स स्विदिस्वदिसहीनाञ्च" (८।३।६२) इहापि 'मूर्धन्य' इति 'इण' इति चाधिक्रियते । स्तौतिरहित पूर्वसूत्रं कृत्स्नम् "स" इति चानुवर्तते । प्रकृतसूत्रे "स" इति प्रथमान्तम् । अभ्यामेण परस्य ण्यन्तानामेषा सस्य स एव, न तु प षगि परे । स्विदे —सिस्वेद-यिषति । स्वदे·—सिस्वादयिपति । सहे —सिसाहयिषति । अत्र त्रयाणा ग्रहणेनान्येषा ण्यन्ताना षत्व भवत्येव—सिषाधयिषति । एषु प्रयोगेषु सकारस्य स्वत सिद्धत्वात् पुन सकारविधान पूर्वसूत्रेण प्राप्तषत्वनिषेधार्थम् ।

**क्र० सं० १४** "प्राक्सितादड्व्यवायेऽपि" (८।३।६३) प्रकृतसूत्रेऽपि मूर्धन्य' इति 'इण' इति चाधिक्रियते । "उपसर्गात्" इत्यपकृष्यते । सूत्रे प्राक्सितादिति कथनेन कस्मादार-भ्येति विवक्षायाम् उपसर्गात्सुनोतीत्यादिसूत्रघटकसुनोतेरिति गृह्यते । अत सुनोतीत्यत आरभ्य "परिनिविभ्य" इत्यादिसूत्रघटकसितशब्दात् प्राग् ये धातवस्तेषामड्व्यवायेऽप्युपसर्गस्थादिण परस्य सकारस्य षत्व भवति । अभ्यषुणोत्, पर्यषुणोत्, पर्यषुवत्, पर्यष्यत्, अभ्यष्टौत्, अभ्यष्टोभतेत्या-दय । अत्र प्राक्सितादिति निर्धारणेन 'पर्यसहत' इत्यादौ षत्वाभाव । अत्रापिशब्देनाड्व्यवाया-भावेऽपि उपसर्गात्सुनोतीत्यादिना षत्वं वक्ष्यति ।

**क्र० सं० १५** "स्थादिष्वभ्यासेन चाभ्यासस्य" (८।३।६४) अत्रापि 'मूर्धन्य.' इति 'इण·' इति चाधिक्रियते । 'स' इति पूर्वसूत्रात् प्राक्सितादिति चानुवर्तते । उपसर्गादिति सूत्र-घटकस्थाधातोरारभ्य "परिनिविभ्य" इति सूत्रघटकसितशब्दात् प्राग्धातुघटकसकारस्योपसर्गस्था-न्निमित्तादिण परस्याभ्यासेन व्यवायेऽपि षत्व स्यात् । एषामेवाभ्यासस्य, न तु सुनोतीत्यादीना-मिति नियमार्थमभ्यासस्येति पदम् । 'अभितष्ठौ, परितष्ठौ' अत्रानिणन्तादभ्यासादप्राप्तौ विधानार्थं स्थाग्रहणम् । अभिषिषेणयिषतीति सेनशब्दात् क्यजन्तात् सनि रूपम् । अत्राभ्यासेन व्यवायेऽषा-पदेशे चाप्राप्तौ विधीयते । अभिषिषिक्षति, परिषिषिक्षति । अत्र स्तौतिण्योरेवेति नियमादण्यन्तत्वेन षण्यप्राप्तौ वचनम् । एषामेवाभ्यासस्येत्युक्त्या 'अभिसुसूपति' इत्यादावभ्यासस्य न षत्वम् । द्वितीयस्य तु स्तौतिण्योरेवेति नियमान्न भवति ।

अत्रेद तत्त्वम्—'निषिषेध' इत्यादावभ्याससकारस्योपसर्गादित्यादिनैव षत्वसिद्धावभ्या-सस्येत्यशो नियमार्थ एषामेवाभ्यासस्येति ।

**क्र० सं० १६** "उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्" (८।३।६५) 'मूर्धन्य·' इति 'इण:' इति चाधिक्रियते । "स." इत्यनुवर्तते । उपसर्ग-पदमुपसर्गस्थे लाक्षणिकम् । अत उपसर्गस्थादिण: परेषा सुनोत्यादीनां सस्य मूर्धन्य: स्यात् । अभिषुणोति, परिषुवति, अभिष्यति, परिष्टौति, अभिष्टोभते, अभिष्ठास्यति, परिषेणयति,

परिषेधयति, परिषिञ्चति, परिषजति, अभिष्वजते । उपसर्गादित्युक्त्या दधि सिञ्चतीत्यादौ षत्वाभाव.। निर्गता सेचका अस्माद् देशाद् नि सेचको देश इत्यत्र न षत्वम्, क्रियायोगाभावेनोपसर्गाभावात् । अभिसावकीयतीत्यादावपि न षत्वम् । सुनोति प्रत्युपर्गाभावात् । सूत्रे सुनोतीत्यादीना श्तिपानिर्देशाद् यङ्लुकि अभिसोषवीति, अभिसोपोतीत्यादौ षत्वाभाव इति प्राञ्च.। नव्यास्तु—"स्थादिष्वभ्यासेन चाभ्यासस्य" इति सूत्रे "एषामेवाभ्यासस्य" इति नियमात् सुनोत्यादीना व्यावृत्त्या श्तिपानिर्देशो व्यर्थ एव । सेनय इति णिजन्ता नामधातु । सेधतीति शयानिर्देशात् सिध्यतीत्यादौ षत्वाभाव ।

अत्र तत्त्वबोधिनीकारा—ननु नि षुणोति, नि षेधतीत्यादौ विसर्गेण व्यवधाने प्रकृतसूत्रेण कथ षत्वमिति चेन्न, षत्वविधौ "नुम्विसर्जनीयशर्व्यवायेऽपि" इत्यस्याधिकारात् । इणन्तादुपसर्गादिति व्याख्याने तु स्यादेवात्राव्याप्तिः । वस्तुतस्तु हयवरट्-सूत्रभाष्येऽट्शर्प्रत्याहारेषु विसर्गपाठस्योक्तत्वेन विसर्गान्तस्यापीणन्तत्वादय ग्रन्थोऽसङ्गत एव । अत एव "नुम्विसर्जनीयशर्व्यवायेऽपि" इति सूत्रे विसर्जनीयग्रहण नैव कर्त्तव्यम् । दु सुनोतीत्यादौ षत्ववारण तु "दुर षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्य" इति वार्त्तिकेनोपसर्गत्वस्य प्रतिषेधात् । इह सेनयेति ण्यन्तनामधातौ सकारस्यादेशरूपाभावात् केनाप्यप्राप्तौ विधानार्थं ग्रहणम् । अन्येषाम् "आदेशप्रत्यययो." इत्यनेन प्राप्तौ "सात्पदाद्यो." इत्यनेन निषेधे प्रतिप्रसवार्थं ग्रहणम् ।

क्र० सं० १७ "सदिरप्रते" (८।३।६६) इहापि "मूर्धन्य." इति "इण" इति चाधिक्रियते । "स" इति "उपसर्गात्" इति चानुवर्तते । सूत्रे "सदि" इति षष्ठ्यर्थे प्रथमा । अत प्रतिभिन्नोपसर्गस्थादिण परस्य सदेः सस्य मूर्धन्य स्यात् । परिषीदति, निषीदति । 'अप्रते' इत्युक्त्या 'प्रतिसीदति' इत्यादौ न षत्वम् ।

क्र० स० १८ "स्तम्भे" (८।३।६७) अत्रापि "मूर्धन्य" इति, "इण" इति, चाधिक्रियते । "स" इति "उपसर्गाद्" इति चानुवर्तते । उपर्गस्थादिण परस्य सौत्रस्य स्तन्भे सस्य षो भवति । प्रतिष्टभ्नाति, परिष्टभ्नाति । सौत्रस्येत्युक्त्या गणपठितस्य ष्टभि प्रतिबन्ध इत्यस्य न ग्रहणम्, तेन 'विस्तम्भते' इत्यादौ षत्वाप्रवृत्ति ।

ननु सूत्रे स्तन्भेरिति सामान्येनोच्चारणे कथ "जृस्तन्भु" इत्यादिसूत्रघटकस्यैव ग्रहणम्, न तु गणपठितस्येति चेन्न, लक्षणप्रतिपदोक्तन्यायेन सूत्रस्थस्य प्रतिपदोक्तस्यैव ग्रहणात्, "इदितो नुम् धातो" इति लक्षणनिष्पन्नस्याग्रहणात् । स्यादत्र "सदिस्तन्भ्योरप्रते." इत्येकयोगेऽपीष्टसिद्धि, तथापि "अवाच्चालम्बनाविदूर्ययो" इत्युत्तरसूत्रे द्वितीयसूत्रस्यैवानुवृत्तिरिति तदर्थ पृथग् योग एवोचित । यद्यप्येकयोगेऽप्येकदेशस्य स्वरितत्वबलादनुवृत्तिः कर्तुं शक्या, तथापि "अप्रते" इत्यस्योभयत्राप्यन्वये ष्टम्भधातावपि षत्वनिषेधे "बाहुप्रतिष्टम्भविवृद्धमन्यु" इति वृद्धप्रयोगासङ्गति स्यात् ।

क्र० सं० १९ "अवाच्चालम्बनाविदूर्ययो" (८।३।६८) अत्र "इण्को" इति नाधिक्रियते, अवादित्यनेन विरोधात्, "मूर्धन्य" इत्यधिक्रियते । "स" इति "उपसर्गात्" इति "स्तन्भे" इति चानुवर्तते । अवादुपसर्गा परस्य स्तन्भे सस्य मूर्धन्य. स्यादालम्बनाविदूर्ययोरर्थयो. । आलम्बनञ्चेहाश्रयणम् । आविदूर्यम्—सामीप्यम् । यथा—यष्टिमवष्टभ्य (आश्रित्य)

तिष्ठति । 'अवष्टब्धा गौ ', निरुद्धा सति समीपे आस्ते । आलम्बनाविदूर्ययोरित्युक्त्या अवस्तब्धो वृषल. शीतेनेत्यादौ षत्वाभाव । इण परत्वाभावादयमपूर्वविधि । सूत्रे चकारश्चिन्त्यप्रयोजनः ।

क्र० सं० २० "वेश्च स्वनो योजने" (८।३।६९) "मूर्धन्य." इति, "इणः" इति चाधिक्रियते । "उपसर्गात्" इति, चकारेण पूर्वसूत्राद् "अवात्" इति चानुवर्तते । व्यवाभ्या-मुपसर्गाभ्यामुत्तरस्य स्वनते सस्य मूर्धन्य स्याद् भोजने । विष्वणति, अवष्वणति । भोजन इत्युक्त्या 'विस्वनति मृदङ्ग , अवस्वनति वीणा' इत्यादौ न षत्वम् । इह भोजन इति पदेनाभ्यव-हारक्रियाविशेषोऽभिधीयते, यत्र स्वननमस्ति तेन विष्वणतीत्यस्य सशब्दं भुङ्क्त इत्यर्थ. । इह स्वन्धातो सकारस्यादेशत्वाभावादप्राप्तौ विधानार्थमिदं सूत्रम् ।

क्र० सं० २१ "परिनिविभ्य सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्" (८।३।७०) "मूर्धन्य." इत्यधिक्रियते । "स " इति ' उपसर्गात्' इति चानुवर्तते । "अपदान्तस्य" इति "इण." इति च नाधिक्रियते, अव्यावर्तकत्वात् । परिनिविभ्य उपसर्गेभ्य परेषामेषा सस्य मूर्धन्यः स्यात् । परिषेवते, निषेवते, विषेवते । परिनिविभ्य इत्युक्त्या उपसर्गान्तरेभ्यो न, यथा—अभिसेवते ।

ननु "उपसर्गात्" इति सूत्रे स्तुस्वञ्जोर्ग्रहणेन तेनैव षत्वसिद्धे इह पुनर्ग्रहणं परिनिविभ्य. परयोरेतयोरड्व्यवायेऽपि सिवादीना वेत्यादिना विकल्पार्थम् । तेन—'पर्यष्टौत्, पर्यस्तौत्' इत्यादौ विकल्पेन षत्वसिद्धि । अत्र षेवृषिञ्षिवुषह्स्वञ्जधातूना षोपदेशत्वेन सकाराणामादेश-रूपत्वादिण परत्वाच्च "आदेशप्रत्यययोः" इत्यनेन षत्वप्राप्तौ पदादित्वेन निषेधे विधानार्थमिह ग्रहणम् । सुट सकारे त्वपूर्वविधिरयम् ।

क्र० सं० २२ "सिवादीना वाड्व्यवायेऽपि" (८।३।७१) "मूर्धन्य " इत्यधिक्रियते । "उपसर्गा ," इति "परिनिविभ्य " इति चानुवर्तते । परिनिविभ्य उपसर्गेभ्यः परस्य सिवादीना सस्य मूर्धन्यो वा स्यादड्व्यवायेऽपि । पर्यषीव्यत्, पर्यसीव्यत् । पर्यषहत, पर्यसहत । पर्यष्करोत्, पर्यस्करोत् । न्यष्टौत्, न्यस्तौत् । व्यष्वजत, व्यस्वजत । अत्र परिनिविभ्य इत्यस्यानुवृत्त्या 'अभ्य-सीव्यत्' इत्यादौ नानेन विकल्पेन षत्वम्, सितशब्दात् प्राग्भावित्वाभावेन च नापि प्राक्सितादित्या-दिना नित्यम् । सिवादीनामित्युक्त्या 'न्यषेवत' इत्यादौ च नित्यमेव मूर्धन्यादेश ।

क्र० सं० २३ "अनुविपर्यभिनिभ्य स्यन्दतेरप्राणिषु" (८।३।७२) "मूर्धन्य " इत्यधि-क्रियते । "स " इति "उपसर्गात्" इति वेति चानुवर्तते । अनुविपर्यभिनिभ्य उपसर्गेभ्य परस्या-प्राणिकर्तृकस्य स्यन्दते सस्य मूर्धन्यो वा स्यात् । अनुष्यन्दते, अनुस्यन्दते वा जलम् । एवमेव 'विष्यन्दते' विस्यन्दत, इत्यादौ विकल्पेन षत्वं बोध्यम् । अत्राप्राणिष्वित्युक्त्या 'अनुस्यन्दते मत्स्य उदके' इत्यत्र षत्वाभाव. । अप्राणिष्वित्यत्र नञर्थ पर्युदासस्तेन प्राणिभिन्नप्राणिसदृशकर्तृकस्यैव स्यन्दतेर्वा षत्वम् । अत. प्राण्यप्राणिकर्तृकस्याप्यप्राणिप्राणिभिन्नकर्तृकत्वाद् मत्स्योदके अनुष्यन्देते, अनुस्यन्देते वेत्यत्रापि षत्वविकल्प. । प्रसज्यप्रतिषेधे त्वत्रापि न स्यात् । अत्र स्यन्दूधातोः सकारस्यानादेशत्वादप्राप्तौ विधानार्थमिदम् ।

क्र० सं० २४ "वे स्कन्देरनिष्ठायाम्" (८।३।७३) "मूर्धन्य " इत्यधिक्रियते । "उप-सर्गात्" इति "सः" इति "वा" इति चानुवर्तते । वेरुपसर्गादुत्तरस्य स्कन्दे. सकारस्य मूर्धन्यो वा स्यादनिष्ठायाम् । स्कन्देस्तृचि—विष्कन्ता, तुमुनि-विष्कन्तुम् । वेरित्युक्त्या निस्कन्तेत्यादौ

षत्वाभावः। अनिष्ठायामित्युक्त्या निष्कन्न इत्यत्र न षत्वम्। अनिष्ठायामित्यत्र पर्युदासस्वीकाराद् निष्ठाभिन्ननिष्ठासदृशस्य कृत एव ग्रहणम्, न तु तिङ। तेन विस्कन्दतीत्यादौ षत्वाप्रवृत्तिः। इह स्कन्दधातोः सकारस्यादेशरूपत्वाभावादप्राप्तौ विधानार्थमयं विधिः।

क्र० सं० २५ "परेश्च" (८।३।७४) "मूर्धन्यः" इत्यधिक्रियते। "उपसर्गात्" इति "वा" इति पूर्वसूत्रात् "स्कन्देः" इति चानुवर्तते। परेरुपसर्गात् परस्य स्कन्देः सस्य मूर्धन्यो वा स्यात्। परिष्कन्दति, परिस्कन्दति। परिष्कण्णः, परिस्कन्नः। परेश्चेत्युक्त्या उपसर्गान्तरेभ्यो न विस्कन्दति। विपरिभ्यां स्कन्देरनिष्ठायामित्येकयोगस्तु न कार्यः, तथा सत्यनिष्ठायामित्यस्य परिणापि सम्बन्धे 'परिष्कण्णः' इत्यत्रापि षत्वानापत्तेः।

क्र० सं० २६ "परिस्कन्दः प्राच्यभरतेषु" (८।३।७५) परेश्चेति पूर्वसूत्रेण प्राप्तस्य परिपूर्वकस्य स्कन्देः सस्य षत्वाभावोऽनेन निपात्यते प्राच्यभरतेषु वाच्येषु। प्राच्यभरतेषु—परिस्कन्दः। अन्यत्र 'परिष्कन्दः, परिस्कन्दः' इत्यादौ पूर्वसूत्रेण षत्वविकल्पः।

अत्र सूत्रे काशिकाकाराः—अचि निपातनम्, अथवा निष्ठातकारलोपः। अयमभिप्रायः—परिपूर्वकात् स्कन्देः पचाद्यजन्तस्य षत्वाभावो निपात्यते। अथवा निष्ठातकारलोपविशिष्टषत्वाभावो निपात्यते।

क्र० सं० २७ "स्फुरतिस्फुलत्योर्निर्निविभ्यः" (८।३।७६) "मूर्धन्यः" इत्यधिक्रियते। "सः" इति "सिवादीनां वा" इत्यतो वेति चानुवर्तते। अतो निर्निविभ्यः परयोः स्फुरतिस्फुलत्योः सस्य मूर्धन्यो वा स्यात्। निष्फुरति, निस्स्फुरति। निष्फुरति, निस्फुरति। विष्फुलति, विस्फुलति। इह निर्निविभ्य इत्युक्त्या उपसर्गान्तरेभ्यो न 'अभिस्फुरति'। इह स्फुरतिस्फुलत्योरषोपदेशत्वेनादेशसकाराभावादप्राप्तौ विध्यर्थमिदम्।

क्र० सं० २८ "वेः स्कभ्नातेर्नित्यम्" (८।३।७७) "मूर्धन्यः" इत्यधिक्रियते। नित्यशब्दविरोधाद् 'वा' इति नानुवर्तते। वेः परस्य स्कभ्नातेः सस्य नित्यं मूर्धन्यादेशो भवति—विष्कभ्नोति। विष्कभ्नाति। विष्कम्भिता, विष्कम्भितुम्। इह "वेः" इत्युक्त्या उपसर्गान्तरेभ्यो न यथा—परिस्कभ्नाति, निस्कभ्नाति। सूत्रे स्कभ्नातेरित्युक्त्या श्नाविकरणविशिष्टस्यैव षत्वमिति न भ्रमितव्यम्, 'विष्कम्भिता, विष्कम्भितुम्' इत्यादौ माधवग्रन्थे षत्वदर्शनात्। अत्र स्कम्भधातोरषोपदेशत्वेनादेशरूपसकाराभावादप्राप्तौ विधानार्थमयमारम्भः।

क्र० सं० २९ "समासेऽङ्गुलेः सङ्गः" (८।३।८०) "मूर्धन्यः" इत्यधिक्रियते। "सः" इत्यनुवर्तते। 'अङ्गुलेः' इति पञ्चम्यन्तम्। "सः" इति षष्ठ्यन्तेनान्वयानुरोधात् 'सङ्ग' इति षष्ठ्यर्थे प्रथमा। अङ्गुलिशब्दात् परस्य सङ्गशब्दावयवस्य सस्य मूर्धन्यादेशो भवति समासे। अङ्गुलिषङ्गः। असमासे तु—अङ्गुलेः सङ्गः।

अत्र सङ्गशब्दस्य षञ्जधातोर्निष्पन्नत्वात् सकारस्यादेशरूपत्वाद् "आदेशप्रत्यययोः" इत्यनेन षत्वप्राप्तौ पदादित्वेन निषेधस्य प्रतिप्रसवार्थमयं विधिः।

क्र० सं० ३० "भीरोः स्थानम्" (८।३।८१) इहापि "मूर्धन्यः" इत्यधिक्रियते। "सः" इति "समासे" इति चानुवर्तते। 'भीरोः' इति पञ्चम्यन्तम्। 'स्थानम्' इत्यत्र षष्ठ्यर्थे प्रथमा।

षष्ठयर्थश्चावयवावयविभावसम्बन्ध । भीरो परस्य स्थानशब्दावयवस्य सस्य मूर्धन्यो भवति समासे—भीरुष्ठानम्, असमासे तु भीरो स्थानम् ।

अत्र स्थानशब्दस्य ष्ठाधातोर्निष्पन्नत्वेन सकारस्यादेशरूपत्वादिण परत्वाच्च "आदेशप्रत्यययो." इत्यनेन प्राप्तौ पदादित्वेन निपेधे विधानार्थमिदम् ।

क्र० सं० ३१ "अग्ने स्तुत्स्तोमसोमा" (८।३।८२) अत्रापि "मूर्धन्य" इत्यधिक्रियते "स" इति "समासे" इत्यनुवर्तते । 'अग्ने' इति पञ्चम्यन्तम् । "स्तुत्स्तोमसोमा" इत्यत्र षष्ठ्यर्थे प्रथमा । अग्ने परेपामेषा सकारस्य मूर्धन्यादेश स्यात् समासे । अग्नि स्तूयतेऽस्मिन्निति अग्निष्टुत्, ऋतुविशेप । अग्नीना स्तोम —अग्निष्टोम स्तोत्रविशेष ।

अत्राय विशेष —अग्नेर्दीर्घान्तादेव सोमशब्दस्य षत्वम्, दीर्घेकारविशिष्टश्चाग्निशब्द· "ईदग्ने सोमवरुणयो" इत्यनेन निष्पन्न । इदञ्चेत्वं देवताद्वन्द्व एव । अतो देवताद्वन्द्वे 'अग्नीषोमौ' अन्यत्र—अग्निसोमौ माणवकौ, स्तुत्स्तोमशब्दयो ष्टुञ्धातोर्निष्पन्नत्वात्, सोमशब्दस्य षुञ्धातोर्निष्पन्नत्वाच्च सकाराणामादेशरूपत्वादिण परत्वाच्च षत्वप्राप्तौ पदादित्वेन निषेधे पुनर्विधानार्थमिदम् ।

क्र० सं० ३२ "ज्योतिरायुप स्तोम" (८।३।८३) "मूर्धन्य." इत्यधिक्रियते । "स" इति "समासे" इति चानुवर्तते । 'ज्योतिरायुष' इति पञ्चम्यन्तम् । 'स्तोम' इत्यत्र षष्ठचर्थे प्रथमा । ज्योतिरायुष्शब्दाभ्यामुत्तरस्य स्तोमशब्दावयवस्य सस्य मूर्धन्य स्यात् समासे । ज्योतिष्टोम । आयुष्टोम । असमासे तु–'ज्योतिष स्तोम, आयुष स्तोम' इति भट्टोजिदीक्षिता. । तत्त्वबोधिनीकारास्तु 'ज्योति स्तोमोऽयम्' इति प्रत्युदाहर्तुमुचितमित्याहु ।

अत्रायमभिप्राय —दीक्षितप्रयुक्तप्रत्युदाहरणे विभक्त्याव्यवधाने ज्योतिरायुष्शब्दाभ्यामव्यवहितपरस्य स्तोमशब्दस्याभावादेव षत्वाप्राप्तौ नेद समास इत्यस्य प्रत्युदाहरणम् । अतो 'ज्योति स्तोमोऽयम्' इति 'इद ज्योति स्तोम' इति वा प्रथमान्तेनैव प्रत्युदाहरणमुचितम् । केचित्तु 'ज्योतिष. स्तोम' इति प्रत्युदाहरणे 'ज्योतिष' इति शब्दं पञ्चम्यन्त मत्वा ज्योतिष्शब्दादव्यवहितपर स्तोमशब्दो यत्र तत्प्रत्युदाहरणमिति कौमुदीग्रन्थस्याभिप्रायं स्वीकुर्वन्ति । अतो नात्र मतभेद ।

क्र० सं० ३३ "मातृपितृभ्या स्वसा" (८।३।८४) पूर्ववत् "मूर्धन्य." इत्यधिक्रियते । 'समासे' इत्यनुवर्तते । मातृपितृभ्यामिति पञ्चम्यन्तम् । स्वसेति षष्ठचर्थे प्रथमा । मातृपितृभ्यामुत्तरस्य स्वसृशब्दावयवस्य सस्य मूर्धन्य स्यात् समासे । मातृष्वसा, पितृष्वसा । वाक्ये तु मातुः स्वसा, पितु स्वसा । स्वसृशब्दावयवस्य सकारस्यानादेशत्वात्, प्रत्ययावयवाभावाच्च षत्वाप्राप्तौ विधानार्थमिदम् ।

क्र० सं० ३४ "मातु पितुभ्यामन्यतरस्याम्" (८।३।८५) अत्रापि "मूर्धन्य:" इत्यधिक्रियते । "समासे" इति पूर्वसूत्रात् स्वसा इति चानुवर्तते । मातु. पितुरिति पदे समासेऽप्यलुग्विशिष्टयो· शब्दस्वरूपयोर्वाचिके । मातु पितुभ्यामिति पञ्चम्यन्त पदम् । अतो मातु पितुरिति षष्ठ्यन्ताभ्यामुत्तरस्य स्वसृशब्दावयवस्य सस्य मूर्धन्यादेशो वा स्यात् समासे- मातुष्वसा, मातु स्वसा । पितुष्वसा, पितु· स्वसा । लुक्समासे तु मातृष्वसेत्यादौ पूर्वसूत्रेण नित्यमेव ।

क्र० सं० ३५ "अभिनिसम्तन शब्दसंज्ञायाम्" (८।३।८६) "मूर्धन्य" इत्यधिक्रियते। पूर्वसूत्रात् "अन्यतरस्याम्" इति वेति चानुवर्तते। 'अभिनिस' इति पञ्चम्यन्तम्। "स्तन" इति षष्ठ्यन्तम्। अभिनिस परस्य स्तन सस्य मूर्धन्यो वा स्यात् शब्दसंज्ञायाम्। अभिनिष्टान, अभिनिस्तानो वा वर्णः (विसर्जनीय)। शब्दसंज्ञायामित्युक्त्या 'अभिनिस्तनति मृदङ्ग' इत्यत्र षत्वाप्रवृत्ति।

क्र० सं० ३६ "उपसर्गप्रादुर्भ्यामस्तिर्यच्पर" (८।३।८७) उपसर्गप्रादु शब्दयोर्द्वन्द्व, य् च अच् चेति द्वन्द्व। 'अस्ति' इत्यत्र षष्ठ्यर्थे प्रथमा। "मूर्धन्य" इति "इण" इति चाधिक्रियते। 'उपसर्गशब्द' उपसर्गस्थेऽर्थे लाक्षणिक। उपसर्गस्थादिण प्रादुश्च परस्यास्ते सस्य ष स्याद् यकारेऽचि च परे। अभिषन्ति, निषन्ति, प्रादुष्षन्ति, प्रादुष्ष्यात्। अत्रोपसर्ग-विशेषणेन दधि स्यादित्यादौ न षत्वप्रवृत्ति। अस्तीत्युक्त्या धात्वन्तरस्य नानुसृतम्।

क्र० सं० ३७ "सुविनिर्दुर्भ्य सुपिसूतिसमा" (८।३।८८)। सुविनिर्दुर्भ्य इति पञ्चम्य-न्तम्। 'सुपिसूतिसमा' इत्यत्र षष्ठ्यर्थे प्रथमा। "मूर्धन्य" अधिक्रियते। सुविनिर्दुर्भ्य. परस्यैषा सस्य मूर्धन्य स्यात्। सुषुपुषतु, सुषुप्त, विषुप्त, नि षुप्त, दु षुप्त। सुषूति, विषूति, नि षूति, दु षूति.। एवमेव 'सुषमम्' इत्यादय। सुविनिर्दुर्भ्य इत्युक्त्या उपसर्गान्तिरेभ्यो न षत्वप्रवृत्ति. प्रतिसुसुपतु। अत्र सुपिशब्देन कृतसम्प्रसारणस्य स्वपेर्ग्रहणम्। सूतिशब्द क्तिन्नन्तो गृह्यते। समशब्देन समप्रातिपदिकस्यैव ग्रहणम् न तु 'षम' धातोर्व्याख्यानात्।

अत्रेदं तत्त्वम्—'सुषुषुपतुः' इत्यत्र यदि स्वप्धातो पूर्वं साधनेन योग, पश्चाच्चोप-सर्गेण, तदा स्वप् अतुस् इति स्थिते द्वित्वे सम्प्रसारणे च प्राप्ते, परत्वात् पूर्वं सम्प्रसारणे पश्चाद् द्वित्वेऽभ्यासकार्ये सुसुप् अतुस् इति दशायामुत्तरखण्डस्यैव "आदेशप्रत्यययो." इत्यनेन षत्वं स्यात्, न तु पूर्वखण्डस्य पदादित्वेन निषेधात्। सुब्रूपाभावात् सुविनिर्दुर्भ्य इत्यादिनापि न। अत प्रकृते लक्ष्यानुरोधात् पूर्वं धातुरुपसर्गेण युज्यते पश्चाच्च साधनेन। ततश्च द्वित्वात् परत्वात् पूर्वं सम्प्रसारणे, तत सुपूर्वकस्य सुप. षत्वे पश्चाद् द्वित्वादिकार्ये खण्डद्वये षत्वसिद्धि।

इह त्रयाणामुपसर्गाणामिणन्तत्वात् तेभ्यः परयो सुपिसूत्यो सरकारस्यादेशरूपत्वात् "आदेशप्रत्यययो." इत्यनेन षत्वे प्राप्ते पदादित्वेन निषेधे सति पुनर्विधानार्थमिदम्।

क्र० सं० ३८ "निनदीभ्यां स्नातेः कौशले" (८।३।८९)। "मूर्धन्यः" इत्यधिक्रियते। 'निनदीभ्याम्' इति पञ्चम्यन्तम्। "स्नाते." इति षष्ठ्यन्तम्। निनदीभ्यामुत्तरस्य स्नाते. सस्य षः स्यात् कौशले गम्यमाने।

निष्णात. शास्त्रेषु। नद्यां स्नातीति नदीष्ण। अकौशले तु निस्नात, नदीस्नातः इत्यादौ न।

इह निनदीशब्दयोरिणन्तत्वात् स्नाधातो. सस्यादेशरूपत्वात् "आदेशप्रत्यययो" इत्यनेन षत्वे प्राप्ते पदादित्वेन निषेधे कौशलेऽर्थविधानार्थमिदम्।

क्र० सं० ३९ "सूत्रं प्रतिष्णातम्" (८।३।९०)। सूत्रे विशेष्ये प्रते. परस्य क्तान्तस्य स्नातेः सस्य षत्वं निपात्यते। प्रतिष्णातं सूत्रम्, शुद्धमित्यर्थ। अन्यत्र प्रतिस्नातम्।

क्र० सं० ४० "कपिष्ठला गोत्रे" ( ८।३।९१ )। गोत्रविषये कपिशब्दादुत्तरस्य स्थलशब्दावयवस्य सस्य षत्वं निपात्यते। कपिष्ठलो नाम, यस्य कापिष्ठलिः पुत्रः। अगोत्रे तु 'कपीना स्थलम्' इत्यादौ न षत्वम्।

अत्र कपिशब्दस्येणन्तत्वेन तत परस्य स्थलशब्दावयवसकारस्यादेशरूपत्वादादेशप्रत्यययोरित्यनेन प्राप्ते पदादित्वेन निषेधे पुनर्विधानार्थमिदम्।

क्र० सं० ४१ "प्रष्ठोऽग्रगामिनि" (८।३।९२)। अग्रगामिन्यर्थे प्रोपसर्गात् परस्य स्थाधातोः सस्य षत्व निपात्यते। प्रतिष्ठत इति प्रष्ठो गौ, अग्रतो गच्छतीत्यर्थः।

इह प्रपूर्वात् 'स्था'धातो. "आतश्चोपसर्गे" इत्येनन कप्रत्यये आकारलोपे च षत्वं निपात्यते। अन्यस्मिन्नर्थे प्रस्थो व्रीहीणामित्यादौ न अत्रेण्कवर्गपरत्वाभावादप्राप्तौ विधायकमिद वचनम्।

क्र० सं० ४२ "वृक्षासनयोर्विष्टर" (८।३।९३)। वृक्षासनयोर्वाच्ययोर्विपूर्वस्य स्तृणातेः सस्य षत्वं निपात्यते। विष्टरो वृक्ष। विष्टरम् आसनम्। वृक्षासनयोरित्युक्त्या वाक्यस्य विस्तर इत्यत्र षत्वस्याप्रवृत्ति। इह स्तृणातेरषोपदेशत्वादादेशरूपसकाराभावादप्राप्तौ विधानार्थं वचनम्।

क्र० सं० ४३ "छन्दोनाम्नि च" (८।३।९४) "प्रे स्त्रोऽयज्ञे" इति तृतीयाध्यायस्य सूत्रात् 'स्त्र' इति, "प्रथने वावशब्दे" इत्यत "वौ" इति च मण्डूकप्लुत्याऽनुवर्तते। अतो विपूर्वस्य घञन्तस्य स्तृणातेः सस्य मूर्धन्यो निपात्यते छन्दोनाम्नि। विस्तीर्यन्तेऽक्षराण्यस्मिन्निति विग्रहे विपूर्वात् स्तृणातेर्घञि षत्व निपात्यते। विष्टारपङ्क्तिश्छन्द। इह स्तृणातेः सकारस्यादेशरूपाभावादप्राप्तौ विधायकं वचनम्।

क्र० सं० ४४ "गवियुधिभ्यां स्थिरः" (८।३।९५)। 'गवियुधिभ्याम्' इति पञ्चम्यन्तम्, 'स्थिर' इत्यत्र षष्ठ्यर्थे प्रथमा। गवियुधिभ्यामिणन्ताभ्या सप्तम्यन्ताभ्यामुत्तरस्य स्थिरशब्दावयवस्य सस्य मूर्धन्य स्यात्। गविष्ठिर, युधिष्ठिर। अत्र गोशब्दस्याजन्तत्वेनालुगप्राप्तौ सूत्रे गवीति निर्देशाल्लुक्। इह गवियुधिशब्दयोरिणन्तत्वेन ताभ्यामुत्तरस्य स्थिरशब्दावयवस्य सस्य दिशरूपत्वात् षत्वे प्राप्ते पदादित्वेन निषेधे प्रतिप्रसवार्थं वचनम्।

क्र० स० ४५ "विकुशमिपरिभ्य. स्थलम्" (८।३।९६। विकुशमिपरिभ्य इणन्तेभ्य. परस्य स्थलशब्दावयवस्य सस्य मूर्धन्य स्यात्। विष्ठलम्, कुष्ठलम्, शमिष्ठलम्, परिष्ठलम्। इहापीणः परत्वेनादेशसरकारस्य षत्व प्राप्तं पदादित्वेन निषिद्धं पुन प्रतिप्रसूयते। विकुशमिपरिभ्य इत्युक्त्या उपसर्गान्तरेभ्यो न—नि.स्थलम्, निस्थलम्।

क्र० स० ४६ "अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिदिव्यग्निभ्य स्थ" (८।३।९७) एभ्य परस्य स्थशब्दावयवस्य सस्य मूर्धन्य स्यात्। अम्बष्ठ., आम्बष्ठ, गोष्ठ., भूमिष्ठ, सव्येष्ठ, अपष्ठ, द्विष्ठ, त्रिष्ठ, कुशेष्ठ, कुष्ठ, शङ्कुष्ठः, अङ्गुष्ठः, मञ्जिष्ठः, पुञ्जिष्ठ, परमेष्ठः, बर्हिष्ठ, दिविष्ठ, अग्निष्ठ। एषु अम्ब-आम्ब-सव्य-अप-बहिस्-शब्दानामनिणन्तत्वेन तेभ्य परस्य स्थ सकारस्य षत्वाप्राप्तावपूर्वविधानार्थम्। अन्येभ्यस्तु प्राप्तमपि षत्व पदादित्वेन निषिद्ध पुनर्विधीयते। अम्बाम्बेत्याद्युक्त्या शब्दान्तरेभ्यो न—आकाशस्थः। कप्रत्ययान्तस्य 'स्थ' इत्यस्योक्त्या क्तप्रत्ययान्तस्य न—भूमिस्थितम्।

क्र० सं० ४७ "सुषामादिषु च" ( ८।३।९८ ) सुषामादिगणपठितेषु शब्देषु सस्य मूर्धन्य. स्यात्। शोभनं साम यस्यासौ सुषामा ब्राह्मण । शोभना सन्धिर्यस्यासौ सुषन्धि.। निष्षामा, दुष्षामा, निष्षेध, दुष्षेधः इत्यादय । इह सुशब्दस्य "सु. पूजायाम् इति सूत्रेण कर्मप्रवचनीयसञ्ज्ञयोपसर्गसंज्ञाया बाधात् षत्वाप्राप्तौ विधानार्थमिदम्। निर्दु शब्दयोश्च क्रियान्तरविषयत्वादनुपसर्गत्वादप्राप्तौ विधानार्थं वचनम्। अथवा सेधतेर्गतावित्यनेन गतौ निषिद्धस्य षत्वस्य बाधनार्थं पाठ । सुषामादिराकृतिगणः। येषा मूर्धन्यादेशो न केनापि सूत्रेण विहितस्तेषामस्मिन् पाठो मन्तव्य ।

क्र० सं० ४८ "एति सञ्ज्ञायामगात्" (८।३।९९) अगकारात् कोरिणो वोत्तरस्य एतिपरकस्य सस्य मूर्धन्यादेशो भवति सञ्ज्ञायाम्। हरिषेण, परिषेण, जानुषेणः। एतीत्युक्त्या 'हरिसक्थम्' इत्यादौ षत्वाभाव । संज्ञायामित्युक्त्या पृथ्वीसेना यस्यासौ पृथुसेनो राजा इत्यादौ न। अगादित्युक्त्या शतभिषक्सेन इत्यादौ न षत्वम्। न चात्रापि सकारस्य ककारात् परत्वे-नागादिति निषेधाप्रवृत्तौ षत्वं भवत्येवेति वाच्यम्, षत्वविधायकस्य पूर्वत्रिपादित्वेन तद्दृष्ट्या चर्त्वस्यासिद्धत्वेन सकारे गकारपरकत्वस्य सुलभत्वात्। सुषामादिगणान्तर्गणसूत्रमिदम्।

क्र० सं० ४९ "नक्षत्राद् वा" (८।३।१००)। एतिसञ्ज्ञायामगादिति कृत्स्नं सूत्रम-नुवर्तते। अत नक्षत्रवाचकादुत्तरस्यागकारात् कोरिणश्च परस्य सस्य मूर्धन्यो वा स्यादेति संज्ञायामित्यर्थं सम्पद्यते। रोहिणीषेण, रोहिणीसेन । भरणीषेण., भरणीसेन । अगकारादि-त्येव शतभिषक्सेन । इण्कोरित्यस्य सम्बन्धादिह न—सर्वसेन ।

क्र० सं० ५० "ह्रस्वात् तादौ तद्धिते" (८।३।१०१)। ह्रस्वादिण. परस्य सस्य मूर्धन्यः स्यात् तादौ तद्धिते। निर्गतो वर्णाश्रमेभ्य इति विग्रहे "निसोगत" इति वार्तिकेन निसुपसर्गात्त्यप्य-नेन षत्वे निष्ट्यः ( चाण्डालादि )। अत्र काशिकाकारा—तादितद्धिते परिगणन स्वीकुर्वन्ति। तथाहि—तरतमतयत्वतल्तसृत्यप् एतानि प्रयोजयन्तीति। क्रमेण तेषामुदाहरणम्—सर्पिष्टरम्, सर्पिष्टमम्, चतुष्टयम्, सर्पिष्ट्वम्, सर्पिष्टा, सर्पिष्ट, आविष्ट्य.। ह्रस्वादित्युक्त्या 'गीस्तरा' इत्यत्र न। तादावित्युक्त्या सर्पि सात्भवतीत्यादौ प्रकृते सकारस्य न। तद्धित इत्युक्त्या सर्पिस्तरतीत्यादौ न। निसः सकारस्य पदान्तत्वादादेशप्रत्ययावयवत्वाभावाच्चाप्राप्ते विधिरयम्।

क्र० सं० ५१ "निसस्तपतावनासेवने" (८ ३।१०२)। इण परस्य निस. सकारस्य मूर्धन्यादेशः स्यात् तप्धातौ परेऽनासेवने। आसेवनं पौन पुन्य ततोऽन्यस्मिन् विषय इत्यर्थः। निष्टपति सुवर्णम्—सकृत् स्पर्शयतीत्यर्थ । आसेवने तु निस्तपति सुवर्णं सुवर्णकारः। अतः निस सरकारस्यादेशरूपाभावात् प्रत्ययावयवत्वाभावाच्चाप्राप्तौ विधानार्थम्।

क्र० सं० ५२ "युष्मत्तत्ततक्षुष्वन्त.पादम्" (८।३।१०३) अत्र "ह्रस्वात् तादौ तद्धिते" इत्यस्मात् तादावित्यनुवर्तते, तच्च युष्मदो विशेषणम्। इह युष्मच्छब्देन तदादेशा एव गृह्यन्ते। तकारादिषु युष्मदादेशेषु त्वं त्वा ते तवेषु तत् ततक्षु षु च परेषु इणुत्तरस्य सस्य मूर्धन्यादेशो भवति, स च सकार पादमध्यस्थश्चेत्। अग्निष्ट्व नामासीत्। अग्निष्ट्वा वर्धया-मसि। सधिष्टव। अग्निष्टद् विश्वमापृणति। निष्टतक्षु.। अन्त पादमित्युक्त्या 'तदग्नि-

स्तदर्यमा' इत्यत्र अग्निशब्दस्य पूर्वपदस्यान्ते विद्यमानत्वान्न षत्वम्। पदान्तत्वदप्राप्तौ विधिरयम्।

**क्र० सं० ५३** "यजुष्येकेषाम्" (८।३।१०४) अत्र "युष्मत्तत्तक्षुष्वन्त पादम्" इति कृत्स्नं सूत्रमनुवर्तते। यजुर्वेदविषये पूर्वसूत्रेण विधीयमानं षत्व वा स्यात्। अर्चिभिष्ट्वम्, अर्चिभिस्त्वम्। अग्निष्टेऽग्रम्—अग्निस्तेऽग्रम्। अत्र यजुरित्युक्त्या अन्येषु वेदेषु नित्यमेव। एकेष्वित्युक्त्या विकल्पार्थो लब्ध।

**क्र० सं० ५४** "स्तुतस्तोमयोश्छन्दसि" (८।३।१०५)। एकेषामित्यनुवर्तते। 'स्तुत्स्तोमयो' इत्यत्रावयवार्थिका षष्ठी। इण्कुभ्यामुत्तरस्य स्तुत्स्तोमशब्दावयवस्य सस्य मूर्धन्यो वा स्यात्। नृभिष्टुतस्य, नृभिस्तुतस्य। गोष्टोमम्, गोस्तोमम्। वस्तुतस्तु पूर्वपदादित्युत्तरसूत्रे पूर्वं पद पूर्वपदमिति सामान्येन समासव्यासोभयविधपदग्रहणेन तेनैवात्रापि षत्वसिद्धौ सूत्रे स्तुत्स्तोमयोर्ग्रहणमदृष्टार्थमेव। छन्दसीति तूत्तरार्थमावश्यकम्।

**क्र० सं० ५५** "पूर्वपदात्" (८।३।१०६)। पूर्वपदशब्द पूर्वपदस्थे लाक्षणिक, पञ्चमी तु निमित्तार्थिका। पूर्वपदस्थाभ्यामिण्कुभ्यामुत्तरस्यापदान्तस्य सस्य मूर्धन्यो वा स्याच्छन्दसि। यदिन्द्राग्नी दिविष्ठ। यदिन्द्राग्नी दिविस्थ। द्विषन्धि, द्विसन्धि। त्रिषन्धि, त्रिसन्धि। अत्र पदादित्वेन षत्वे निषिद्धे विधानार्थं सूत्रम्।

**क्र० सं० ५६** "सुञ" (८।३।१०७)। इह पूर्वपदादिति, छन्दसीति चानुवर्तेते। "सुञ." इत्यवयवषष्ठ्यन्तस्य निपातस्य ग्रहणम्। पूर्वपदस्थान्निनिमित्तात् परस्य सुञ्निपातावयवस्य सस्य मूर्धन्यः स्याच्छन्दसि। उद्ध्वर्म् ऊषुण.। अभीषुण.।

**क्र० सं० ५७** "सनोतेरन." (८।३।१०८)। 'सनोते' इति, 'अन' इति चोभय पदं षष्ठ्यन्तम्। छन्दसीत्यनुवर्तते। इण्कुभ्यामुत्तरस्यानकारान्तस्य सनोते सस्य मूर्धन्य स्याच्छन्दसि। गोषा, नृषा। अन इत्युक्त्या 'गोसनिम्' इत्यत्र न षत्वम्।

अत्रेदं तत्त्वम्—गोषा, नृषेत्यादौ पूर्वपदादित्येव सिद्धे सूत्रमिदं नियमार्थम्। पूर्वपदस्थान्निमित्तात् परस्य सनोते सस्य षत्व तर्हि नान्तस्यैव। तेन गोसनिमित्यादौ षत्वाभाव.। केचित्तु गोसनेः सवनादिगणे पाठात् षत्वाभावे सिद्धे नेद नियमफलम्। अतस्ते सिसानयिषतीति नियमफलं साधयन्ति। अण्यन्ते सिसनिषतीत्यत्र तु स्तौतिण्योरेवेति नियमादेव षत्वाप्रवृत्तिः।

अन्ये तु सिसनिषतेरप्रत्यये सिसनीः इत्यादौ षत्ववारण नियमफलं वदन्ति। अत्र सनः षत्वाभावे स्तौतिण्योरेवेति नियमाप्रवृत्ते। एवञ्चाण्यन्ते षत्वनिषेधेन नियमे चरितार्थे ण्यन्ते सिषाणयिषतीत्यादौ षत्व भवत्येव।

**क्र० सं० ५८** "सहे पृतनर्त्ताभ्याञ्च" (८।३।१०९)। अत्र "इण्को" इति न सम्बध्यते, पृतना-ऋतशब्दाभ्या विरोधात्। छन्दसीति वर्तते। पृतनर्त्ताभ्यामिति पञ्चम्यन्तम्। पृतना-ऋतशब्दाभ्यामुत्तरस्य सहे सस्य मूर्धन्य स्याच्छन्दसि। पृतनाषाहम्। ऋताषाहम्।

केचित्तु सहेरितियोगविभागेन ऋतीषाहमित्यत्रापि षत्व सम्पादयन्ति तन्मुधैव, सूत्रेऽनुक्तसमुच्चयार्थकचकारेणैवेष्टसिद्धेः।

**अथ निषेधविधायकानि सूत्राणि—**

क्र० सं० ५९ "न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्" (८।३।११०) रः परो यस्मादसौ रपर. सकार: । रेफपरस्य सकारस्य सृपादीनामवयवस्येण· परस्य सकारस्य मूर्धन्यादेशो न स्यात् । रपरे—विस्रसिकायाः । विसृप । विसर्जनात् । दिविस्पृशम् । निस्पृहम् । अनुसवनम् । अत्र सवनशब्देन सवनादिगणो विवक्ष्यते सर्वत्र पूर्वपदादित्यनेन षत्व प्राप्तमनेन निषिध्यते । सूत्रमिद सिद्धान्तकौमुद्याम् उणादिप्रकरणे संगृहीतम् ।

क्र० सं० ६० "सात्पदाद्यो." (८।३।१११) । 'सात्पदाद्योरिति षष्ठचन्तम् । 'सात्' इति प्रत्यय· । पूर्वसूत्रेण 'न' इत्यनुवर्तते । इण्कुभ्यामुत्तरस्य सात्प्रत्ययावयवस्य पदादेश्च सस्य मूर्धन्यादेशो न स्यात् । अग्निसाद्भवति । दधि सिञ्चति । पदादेरित्युक्त्या 'रामेषु' इत्यादौ षत्वं भवत्येव ।

क्र० सं० ६१ "सिचो यङि" (८।३।१ २) । 'न' इत्यनुवर्तते । 'सिच' इति षष्ठचन्तम्, 'यङि' इति सप्तम्यन्तम् । यङि परे इण परस्य सिच्धातोरवयवस्य सस्य मूर्धन्यादेशो न स्यात् । निसेसिच्यते, अभिसेसिच्यते । उपसर्गात्सुनोतीत्यादिना "सात्पदाद्यो" इत्यनेनैव निषिद्ध षत्वं प्रतिप्रसूयते, नात्वनेन निषिद्धम्, अत. पूर्वसकारस्योपसर्गादित्यादिना प्राप्तं द्वितीयस्य च स्थादिष्वभ्यासेनेत्यादिना च प्राप्त षत्वमनेन प्रतिषिध्यते ।

क्र० सं० ६२ "सेधतेर्गतौ" (८।३।११३) । इहापि 'न' इत्यनुवर्तते । 'सेधते.' इति षष्ठचन्तम् । गत्यर्थे विद्यमानस्येण उत्तरस्य सेधते सस्य मूर्धन्यो न स्यात् । परिसेधयति गा. । अगतौ तु शिष्य प्रतिषेधयन्यकार्यात् । उपसर्गादित्यादिना प्राप्ति प्रतिषिध्यते ।

क्र० सं० ६३ "प्रनिस्तब्धनिस्तब्धौ च" (८।३।११४) नेत्यनुवर्तते । प्रतिस्तब्धनिस्तब्धयो षत्वाभावो निपात्यते । प्रतिस्तब्ध , निस्तब्ध । इह "स्तन्भे" इति सूत्रेण प्राप्त षत्वम् ।

क्र० सं० ६४ "सोढ" (८।३।११५) "न" इत्यनुवर्तते । "सोढ" इति षष्ठचन्तम् । इण. परस्य सोढरूपस्य सहे सस्य षत्वं न स्यात् । परिसोढ., परिसोढा । सोढरूपस्येत्युक्त्या 'परिषहते' इत्यत्र षत्वं भवत्येव । इह परिनिविभ्य इत्यादिना षत्व प्राप्तम् ।

क्र० सं० ६५ "स्तम्भुसिवुसहा चङि" (८।३।११६) 'न' इत्यनुवर्तते । "उपसर्गानिमित्तस्य प्रतिषेध" इति वार्त्तिक परामृश्यते । उपसर्गनिमित्तस्यैषा सस्य मूर्धन्यादेशो न स्यात् । "स्तन्भे."इत्यनेन "परिनिविभ्य." इत्यादिना चोपसर्गनिमित्तं प्राप्तं षत्वमनेन निषिध्यते । अभ्यासनिमित्तकं द्वितीयस्य षत्वं तु भवत्येव । पर्यतस्तम्भत्, अभ्यतस्तम्भत् । पर्यसीषिवत् । न्यसीषहत ।

क्र० सं० ६६ "सुनोतेः स्यसनो (८।३।११७) 'न' इत्यनुवर्तते । 'सुनोतेः' इति षष्ठचन्तम् । 'स्यसनो.' इति सप्तम्यन्तम् । इण· परस्य सुनोते· सस्य षत्वं न स्यात् स्यसनोः परयोः । विसोष्यति, अभिसोष्यति । सनि–अभिसुसूषतेरप्रत्यये 'अभिसुसू.' । अत्र 'स्ये' "उपसर्गात्सुनोति" इत्यादिना प्राप्तम्, सनि 'अभिसुसूः' इत्यत्र द्वितीयसकारस्याभ्यासनिमित्तकं च षत्वमनेन निषिध्यते ।

क्र० सं० ६७ "सदिष्वञ्जो परस्य लिटि" (८।३।११८) 'न' इत्यनुवर्तते। 'सदिस्वञ्जो' इत्यवयवषष्ठयन्तम्। सदिष्वञ्जोरवयस्येण परस्य सस्य मूर्धन्यादेशो न स्याल्लिटि। परिषसाद, परिषस्वजाते।

"सदेः [1]परस्य लिटि" इति कौमुदीसम्मत पाठ। कः पाठो युक्त इति विचारणीयम्। वस्तुतस्तु कौमुदीपाठ एव भाष्यसम्मत।

क्र० सं० ६८ "निव्यभिभ्योऽड्व्यवाये वा छन्दसि" (८।३।११९) नि-वि-अभि-उपसर्गेभ्यः परस्य सस्याड्व्यवाये मूर्धन्यादेशो विकल्पेन निषिध्यते छन्दसि। न्यसीदत्, न्यषीदत्। अभ्यष्टौत्, अभ्यस्तौत्।

इत्थमत्र यथाशास्त्र यथाप्रमाणञ्च साधुशब्दनिदर्शनान्यतमभूतषत्वस्य विधायकानि सूत्राणि दर्शितानि। तत्र यत्र कश्चन विशेष. परिलक्षितस्तस्याविष्कार. स्पष्टतया कृत। यद्यपि सर्वाणीमानि कार्याणि व्याकरणे कृतश्रमाणा विदितान्येव सन्ति, तथापि वादे वादे जायते तत्त्वबोध इति न्यायेन—

यथानुवाक. श्लोको वा सोढत्वमुपगच्छति।
आवृत्त्या न तु स ग्रन्थः प्रत्यावृत्त्या निरूप्यते॥
( वा० प० १।८२ )

इति वचनप्रामाण्याच्च दार्ढ्याय परिलक्षितानि। शम्।

---

१. यद्यपि प्रकृतसूत्रस्य "सदिस्वञ्जो परस्य लिटि" इति पाठः काशिकाया सर्वत्र मुद्रितः, सिद्धान्तकौमुद्याञ्च "सदेः परस्य लिटि" इत्येव पाठः, कौमुदीसम्मत एव पाठः भाष्येऽपि सर्वत्र मुद्रित इति प्रामाणिकः।

# पुरुषस्य प्रकृतेर्वा कैवल्यम्

डॉ० मुरलीधरपाण्डेय., आचार्यः, एम० ए०, वाचस्पतिः ( डी० लिट्० )
प्रवाचकः, केन्द्रीयसंस्कृतविद्यापीठम्, तिरुपति', आन्ध्र' ।

यथा भारतीय सर्वं दर्शन जीवस्य मुक्त्यै यतते, तथैव साख्ययोगदर्शनमपि पुरुषस्य कैवल्यार्थं यतते। अस्मिन् दर्शने प्रकृतिपुरुषयो सयोगाद् भोग ससारो वा द्वयोर्वियोग सत्त्व-पुरुषान्यताख्यातिमात्र वा कैवल्यम् ( मोक्ष )। अत प्रकृतिपुरुषयो. संयोग एव दु खहेतु', अनयोर्वियोगेन केवलीभाव एवानन्दहेतु.। एतत् कैवल्यम्, अर्थात् केवलीभाव पुरुषस्यैव भवति, यथा साख्यकारिकाया पातञ्जलयोगसूत्रे साख्यसूत्रे साख्यसारे चोपदिष्टम्—

**संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।**
**पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥**
**तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य।**
**कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥**
( सां० का० १७, १९)

अत्र सप्तदशकारिकायास्तत्त्वकौमुद्या श्रीवाचस्पतिमिश्र स्पष्टयति यत् कैवल्यार्थं प्रवृत्तेश्च शास्त्राणा महर्षीणा दिव्यलोचनाना च केवल्यमात्यन्तिकदु खत्रयप्रशमलक्षण न बुद्धयादीना सभवति। ते हि दु खाद्यात्मका कथ स्वभावाद् वियोजयितु शक्यन्ते। तदतिरिक्तस्य—त्वत्तदा-त्मनस्तनो वियोग शक्यसम्पाद ।

इदमेव गौडपादाचार्येणाप्युक्तम्—

**प्रधानमपि पुरुषस्य मोक्षं कृत्वा निवर्तते।**
**पुरुषोऽपि प्रधानं दृष्ट्वा कैवल्यं गच्छति ॥**
( सा० का० २१ )

इत्थमेव योगसूत्रेऽपि पुरुषस्यैव कैवल्यमुक्तम् यथा—

**"तदा द्रष्टु स्वरूपेऽवस्थानम्।"** ( यो० सू० १।३ )

**"तदभावात् संयोगाभावो हानं तद्दृशे कैवल्यम्।"** ( यो० सू० २।२५ )

अत्र व्यासदेव'—"तस्यादर्शनस्याभावाद् बुद्धिपुरुषसयोगाभाव आत्यन्तिको बन्धनोपरम इत्यर्थ.। एतद्धानम्। तद्दृशे कैवल्यम्, पुरुषस्यामिश्रीभाव'।"

**पुनश्चोक्तम्—"सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् ॥"** ( यो० सू० ३।५५ )

अत्र व्यासदेव—तदा पुरुषस्य शुद्धिसाम्यमिवापन्न भवति। तदा पुरुषस्योपचरित-भोगाभाव. शुद्धि'। अनयैव रीत्या साख्यसूत्रे[1] तथा साख्यसारे[2] च पुरुषस्यैव बन्धन तथा

---

१. "विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य" ( सा० द० २।१ )।

२. अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसम्भ्रमे।

कैवल्यमुक्तम्। किन्तु एतद्विपरीतं साख्यकारिकायामन्ते चतुर्विंशतिपदार्थनिरूपणानन्तर बन्धनमोक्षयोरथवा सयोगकैवल्ययो. प्रतिपादनावसरे उच्यते—

**प्रकृते सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।**
**या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य॥**
**तस्मान्न बध्यतेऽद्धा न मुच्यते च नानाश्रया प्रकृति.।**

**( सां० का० ६१-६२ )**

अनयो कारिकयोर्बन्धनमोक्षौ प्रकृतेर्धर्मावित्युच्यते। अत्र श्रीवाचस्पतिमिश्रश्च व्याख्यातवान् यत् प्रकृतावेव बन्धमोक्षौ भवत., पुरुषे तु बन्धनमोक्षव्यवहार उपचारादुच्यते "प्रकृतिरेव तु नानाश्रया सती बध्यते ससरति मुच्यते चेति बन्धमोक्षव्यवहारा. पुरुषेषूपचर्यन्ते। यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्येते, तदाश्रयेण भृत्याना तद्भागित्वात्। नन्ववगत प्रकृतिगता बन्धसंसारापवर्गा· पुरुषेषूपचर्यन्ते।" ( सा० न० कौ० ६२ )।

( अत्रत्य श्रीवाचस्पतिमिश्रव्याख्यानम् (१७) सप्तदशकारिकागतव्याख्यानाद् विरुद्धम्। )

परमार्थोऽप्यस्या कारिकायामेवमेव ब्रवीति—"यदि कश्चन् मनुष्यो न जानातीदं तत्त्व तदा वदेत् पुरुषो बध्यते ससरति चेति।"

एतदनन्तरं पुनरुच्यते यत् प्रकृति स्वयमेवात्मान बध्नाति, आत्मानमेव स्वय मोचयति–

**रूपै सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृति।**
**सैव पुरुषार्थं प्रति विमोचयत्येकरूपेण॥**

**( सां० का० ६३ )**

अतोऽत्र मूलग्रन्थे पूर्वापरविरोधात्, तथा व्याख्यातॄणा व्याख्यानस्य च विरोधाद् विचारणीय यद्वस्तुत कैवल्य मोक्षो वा पुरुषस्य भवति प्रकृतेर्वेति।

स्यात् तादृशी केवलता स्थिते द्रष्टर्यवीक्षणे। ( सा० का० ७।२८ )

साख्यकारिकायामस्या स्पष्टमुत्तर नोपलभ्यते। यद्यप्यनेकस्थले[3] पुरुषस्य कैवल्यार्थं पुरुषस्य मोक्षार्थं प्रकृते प्रवृत्तिरिति कथनात् पुरुषगतमेव कैवल्यं भवितुमर्हति। किन्तु पातञ्जलयोगसूत्रे तस्य श्रीव्यासदेवभाष्ये चोभयो प्रकृतिपुरुषयो कैवल्यमिति सिद्धान्तितम्। तथाहि सूत्रम्—"पुरुषार्थशून्याना गुणाना प्रतिप्रसव कैवल्य स्वरूपप्रतिष्ठा वा चितिशक्तिरिति।" (पा० यो० सू० ४।३४)।

अत्र श्रीव्यासदेव.–"कृतभोगापवर्गाणा पुरुषार्थशून्याना य प्रतिप्रसव. कार्यकारणात्मकाना गुणाना तत्कैवल्यम्। स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वानभिसम्बन्धात् पुरुषस्य चितिशक्तिरेव वा केवला तस्या सदा तथैवावस्थानं कैवल्यमिति।"

३. (क) प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भ (सा० का० ५६)।
(ख) पुरुषविमोक्षनिमित्त तथा प्रवृत्ति प्रधानस्य। (त० ५७)।
(ग) पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम्। (त० ५८)।
सा च चितिशक्तिरेव प्रतिबिम्बरूपेणोपाधिवियुक्तेत्यर्थ।

अत्र द्विविध कैवल्यमुक्तम्—प्रथम कैवल्य प्रकृतेर्भवति। यदा सत्त्वादिगुणाना स्वस्व-कारणेषु लयो भवति, तदावशिष्टं प्रधानं केवल तिष्ठति। इद प्रकृते कैवल्य विवेकख्यातिमन्तं पुरुष प्रति भवति।

द्वितीयं कैवल्यं तु पुरुषस्य स्वस्वरूपप्रतिष्ठारूपमस्ति। तदा पुरुष प्रकृतिरूपोपाधि-विनिर्मुक्त केवलस्तिष्ठति। इदमेव पुरुषस्य चितिशक्तिरूपा कैवल्यम्। इदमेव कैवल्यम् "तदा द्रष्टु स्वरूपेऽवस्थानम्" (यो० सू० १।३) इति सूत्रेण निरूपितम्।

इद च तत्त्वं श्रीविज्ञानभिक्षुणा योगसारसग्रहे चतुर्थांशे इत्थ प्रत्यपादि—

"कैवल्यमेकाकिता। सा चान्योन्यवियोगरूपतया गुणपुरुषयोरुभयोरेव भवति। तत्र विवेकख्यात्या परवैराग्येण पुरुषार्थशून्याना गुणाना पुरुषोपकारणानामात्यन्तिक प्रतिप्रसव. प्रलय।" "एतदाद्य कैवल्य प्रकृतिधर्म। द्वितीय च कैवल्य पुरुषस्य स्वरूपप्रतिष्ठा॥"

एवं रीत्या कैवल्यस्य द्विविधत्वेनैकस्य प्रथमकैवल्यस्य प्रकृतिधर्मत्वे, अपरस्य द्वितीय-कैवल्यस्य पुरुषे उपचरितधर्मत्वेऽपि कैवल्यफल दुःखभोगनिवृत्तिरूपं पुरुषस्यैव भवति, न तु प्रकृते। अत एव साख्यकारिकाया साख्यसूत्रे च बहुषु स्थलेषु कैवल्य पुरुषार्थ पुरुषस्य वेति प्रतिपादितम्। तेन साख्ययोगग्रन्थेषु न पूर्वापरविरोध।

उपरितनविवेचनेनेदमायात यत् कैवल्यं प्रकृतिपुरुषयोरुभयो, कैवल्यफलं तु पुरुष एवेति।

अत्रेदमपरमप्यगन्तव्य यत्तत्त्वज्ञानेऽधिगते कैवल्य प्राप्तेऽपि च पुरुषे प्रकृतिपुरुषयो सयोगो भवत्येव, यतो हि प्रकृतिरपि सर्वगता पुरुषोऽपि सर्वगत। किन्तु तत्त्वज्ञानानन्तर-मस्यामवस्थायामुभयो संयोगेऽपि सयोगकृत सर्गो न प्रवर्त्तते, यतो हीदानीन्तनस्तयो संयोग ऋणापगमानन्तरमुत्तमर्णाधमर्णयो सयोग इव वर्तते। यथा ह्युत्तमर्णाधमर्णयोर्द्रव्यविशुद्धौ सत्यपि सयोगे न कश्चिदर्थसम्बन्धो भवति। तद्वत् प्रकृतिपुरुषयो सयोगो न किञ्चिदर्थकर.[४]। अत कैवल्यावस्थायामपि प्रकृतिपुरुषयो सयोगो वर्तते, किन्तु सयोगकृतः सर्गस्तत्कृतश्च दुःखत्रयाभिघातो न भवतीति शम्।

---

४. सा० का० ६६ श्रीगौडपादभाष्यं युक्तिदीपिका च।

# प्राचीनार्वाचीनपरमाणुविचाराणां पर्यालोचनम्

प० श्रीपरमहंसपाण्डेयः, व्याकरणाचार्यः,
प्रधानाचार्यः, श्रीवेदादर्शसंस्कृतमहाविद्यालयः,
सॉडीकलॉरुद्र, नगर-बस्तीजनपदः

हयग्रीवं प्रभुं नत्वा बोधदानखिलान् गुरून् ।
पितरौ देशिकञ्चैव ध्यात्वा वक्ष्येऽणुनिर्णयम् ॥

"परमाणुत्व च मूर्तत्वे सति निरवयवत्वम्" इति लक्षणे न केषाञ्चित् परमाणुवादिना विवाद, ऋते बौद्धसिद्धान्तात् । यतस्तेषा मते उत्पत्तिविनाशवन्तः क्षणभङ्गुराश्च परमाणवः । नैयायिकवैशेषिकाणा परमाणुः परमसूक्ष्म आदिरवयव., स्वयं निरवयव., अतीन्द्रियो नित्य. । उक्त च—

जालसूर्यमरीचिस्थ सूक्ष्म यद् दृश्यते रज ।
तस्य षष्ठतमो भागः परमाणु स उच्यते ॥ इति ।

स च परमाणुर्निरवयवो नित्य. । तत एव सृष्टयादौ ईश्वरशक्तिसवलितै परमाणुभिर्द्व्यणुकादिपरम्परया वस्तुजातस्य सृष्टि. । तस्यैव द्व्यणुकादिवस्तुसमूहस्य कार्यत्वान्नाशोऽपि महाप्रलये भवति । एतन्मते ये सावयवा., ते कार्यरूपाः, अतो विनाशवन्तो भवन्तीति विचार्य नित्यत्वस्यैव सरक्षणाय परमाणौ निरवयवत्व स्थाप्यते । अवयवपरम्पराया क्वचिदपि विश्रामोऽपि स्यादतोऽन्यथानवस्थाप्रसङ्ग इति हेतोश्च । एव च कारणभिन्नमवयव्यनित्यं विलक्षण द्व्यणुकादिकार्य जातं मन्यते ।

बौद्धसिद्धान्ते च परमाणव उत्पत्तिविनाशवन्त क्षणभङ्गुराश्च सन्ति । तेषामेव समूह कार्यत्वेन व्यवह्रियते । एतन्मते निरवयव नित्यं न किञ्चिद्वस्तुजात सिद्धम् । अत उत्पत्तिश्चेत्, तत्र किं मूलम् अत उत्पत्तिविनाशश्चेत् क्वादर्शनमिति सदिग्धमेव । अतश्च किमपि नित्यं कारणं मन्तव्यम्, यत उत्पत्तिविनाशयोः संगतिः स्यात् ।

एवं सावयवत्वे निरवयवत्वे, नित्यत्वेऽनित्यत्वे पूर्वोक्ताना विवाद., परमाणुस्वीकृतिस्तु सर्वमतेन पूर्वोक्तेन सिद्धैव ।

एतेषा सिद्धान्तेन परमाणु पदार्थाना न्यूनतमः कण. । विभिन्नपरमाणूनां सयोगतो विभिन्नगुणयुक्ता विभिन्ना पदार्था भवन्ति । मनस शरीरस्यापि परमाणव. सन्ति । यदा ते संमिलिता एकत्रभवन्ति, तदा चैतन्यसिद्धिर्भवति ।

एनमेव परमाणुवादमर्वाचीनेषु डाल्टनमहोदयोऽपि स्वीकरोति । परन्तु वादोऽयं लामकिस्य, डार्विनमहोदयस्य चोत्क्रान्तिवादतः पृष्ठतो गत । यथा तथैव श्रीमहर्षिकाणादमतं श्रीमहर्षिकपिलदेवमुनेः साख्यवादेन पृष्ठतः कृतम् ।

तथा च—मूलमूलपरमाणुभि कथ गति प्राप्ता, ऋतेऽदृष्टात् । अपि च अचेतनात् सचेतनम्, तस्य चोत्क्रान्ति. कथ याता इति काणादैर्न प्रदर्शितम् । कपिलस्य साख्यवादेनैव प्रदर्शितं यदेकस्यैव सूक्ष्मरूपस्य मूलपदार्थस्य गुणाना विकासेन सृष्टिर्भवति। तत्त्वानि पञ्चविंशतिसख्याकानीति साख्यवादिभि स्वीक्रियते। सत एव पदार्थस्योत्पत्ति सम्भवति, यथाहि दध्यर्थिना दुग्धमेवोपादीयते, न तु जलम् । यद्यसतोऽप्युत्पत्ति स्यात्, तदा तदप्युपादेय भवेत्, न तु तथा व्यवहारः । अत एव सर्वपदार्थमूलभूतद्रव्य प्रकृतिरिति निगद्यते साख्ये ।

प्रकृति सत्त्वरजस्तमोगुणाना समूह । यदा ह्येतेषा साम्यावस्था, तदा प्रकृतिरिति कथ्यते। यदा च प्रवृत्त्यात्मकरजोगुणस्य वैषम्य जातम्, तदा प्रकृतितो विभिन्नपदार्थानामुत्पत्त्या सृष्टेः प्रारम्भोऽभूत् । तमसाऽज्ञानम्, रजसा प्रवृत्ति । एव मूलप्रकृतेरैक्येऽपि गुणाना न्यूनाधिकतया नानात्वविशिष्ट जगत् सम्पद्यते ।

प्रकृतिर्मूलतस्तु अव्यक्तस्वरूपाऽक्षरस्वरूपाऽस्ति, (परमाणु) सूक्ष्मरूपा इति)। यदा चेय गुणवैषम्ययुक्ता भवति, तदा नानात्वम्, व्यक्त क्षरं च भवति । एतस्या प्रकृतेरतिरिक्त, सचेतन उदासीनोऽकर्त्ता निर्गुण पुरुषोऽप्यस्ति । इमौ प्रकृतिपुरुषावनादिसिद्धौ, स्वतन्त्रौ स्वयभुवौ च स्त. । प्रलयकाले प्रकृतिविकाररूपस्य व्यक्तरूपस्य नाशो भवति, तदाऽव्यक्तप्रकृति., ज्ञरूप. पुरुषश्चावशिष्ट. ।

अत्र च पाश्चात्त्यविदुषा जर्मनदेशीयो दार्शनिक (अर्न्स्ट हे केलनामको विद्वान्) जडस्योत्कर्षेणैवात्मनश्चैतन्यस्यैवोत्पत्तिर्भवतीति ब्रवीति । परन्तु तत्रत्यकाण्टमहोदयेन तु प्रकृतिपुरुषावुभौ स्वतन्त्रौ तत्त्वरूपेण स्थितो स्त इति स्वीक्रियते ।

पाश्चात्त्यदेशेषु वर्षशतद्वयात् पूर्वं पृथिव्यप्तेजोवायव एव चत्वार पदार्था सृष्टेर्मूलभूता. सन्तीति सिद्धान्त आसीत् । परन्तु यदा हीद ज्ञात यदिमेऽपि पदार्था. पृथक् पृथग् विभिन्नपदार्थैर्निर्मिता. सन्ति, तदैतस्य सिद्धान्तस्य त्यागो जात । तत कालादेव विज्ञानाध्ययनसमुन्नतिर्जाता । प्रकृतिलीला ज्ञातु प्रयत्नशीलैर्वैज्ञानिकैर्दृष्ट यत् सृष्टौ जडपदार्थस्य, कर्मशक्तेश्चैतन्यस्यैव च सर्वोऽपि चमत्कारो दृश्यते । जडपदार्था अपि द्व्यधिकनवति(९२)मूलद्रव्यैर्निर्मिताः सन्ति । वैज्ञानिकैश्चैतेषा परमाणूनां संयोगादिभि· सापेक्षपरमाणुपरिमाण निश्चयीकृतम् ।

श्रीमेयरमण्डलीफप्रभृतिवैज्ञानिकास्तु एनमेव सिद्धान्तमाधारीकृत्यामुकाज्ञातद्रव्याणामीदृशो गुणो भविष्यतीति उक्तवन्त· । भविष्यति भविष्यद्वाणी बहुधा सत्या सिद्धा ।

श्रीडाल्टनमहोदयः परमाणुविभाजन न भवितुमर्हतीत्युक्तवान् । परन्तु तत. परमपरैर्वैज्ञानिकै. परमाणुभेदने संदिहानै कल्पितं यत् परमाणुर्यैर्भागैर्निर्मितस्तत्र काचिन्महती शक्तिस्तिष्ठति । यदि तस्या शक्तेर्भेदने सामर्थ्यं स्यात्तदा परमाणुभङ्गोऽपि स्यादेव ।

पदार्थविज्ञातृभिः प्रकाशोपरि प्रयोग कृत्वा निश्चित यत्—ईथरत कियताचन प्रलम्बतरङ्गाणां बहिर्भावेन प्रकाशकिरणानामुत्पत्तिर्भवति । तथा च मनुष्याक्षि, रक्तप्रकाशत· (तरङ्गविस्तारः १–८१० लक्षमीटर) आरम्य किञ्चिद्धरितनीलिममिश्रित (वैगनी १।३६० लक्षतोऽपि)-तरङ्गप्रकाशावधिकतरङ्गान् द्रष्टुं शक्नोति ।

इदमपि दृश्यमान यन्मूलद्रव्याणि विभिन्नरङ्गप्रकाश ददति। अतोऽपि पाश्चात्य-वैज्ञानिकाना निश्चयो दृढो जात, यद्धि परमाणुरपि विभाज्य। मूलद्रव्याणा गुणभेदैरेव परमाणोरप्यनन्तता रचनायाश्च भेदो भवति। चुम्बकसन्निधानेन यदा तरङ्गेष्वपि भिन्नता दृश्यमाना जाता, तदा परमाणुरपि कैश्चिद्विभिन्नैर्भागैर्निर्मित इति निश्चित। अत्र च प्राचीनाना पञ्चीकरणरीतेरनुसरण प्रकटीभवति।

इद विश्व प्रारम्भकाले आकाशरूपम् (शून्यरूपम्) वायुरूपं वात्यन्तोष्ण चासीत्। क्रमेण शीतलत्वे जायमाने काले हि परमाणूना निर्माणमभूत्। अत एव हाइड्रोजनहेलियमवन्मूल-द्रव्याणा परमाणुरचना सरलतया शीघ्रतया निर्मिता।

अन्ततो रेडियनयुरेनियमा जाता। ते चाल्पसख्यका एव प्राप्यन्ते। इमे च स्थायिनो न सन्ति। स्थायिद्रव्यरूपेण परिवर्तितु यत्नश्च भवति यथा यथा तापमाने न्यूनता जाता, तथा तथा मूलद्रव्याणा परमाणव समिलिता भवन्तो नवनवपदार्थरूपेण परिणता बभूवु।

इममेव सिद्धान्तमवलम्ब्य वैज्ञानिकैर्विपरीतक्रियया विभिन्नपदार्थाना तापमान सवर्ध्य तेषा मूलद्रव्येषु पृथक्करण कृतम्, यदा ह्येमेऽन्यैरुपायै पृथक् क्रियन्ते, तदा स्वयमेव तापमानस्य संवर्धनमिति। यदि च शून्ये वायोरभूतपूर्वतापस्य न्यूनतया परमाणुरभूत्, तर्हि परमाणो-र्भङ्गे तस्य सर्वस्यापि तापस्य प्राप्तिरस्माक स्यादिति विविच्यैवमेव परमाणुवमेत्यादीना निर्माण जातम्।

यदा हि वायुनलिकासु विद्युद्वहनप्रयोग. चलित, तदेदं ज्ञात यत् पृथिव्या द्विनवति-मूलद्रव्याणा परमाणव, घनविद्युताम्, ऋणविद्युता च सयोगेन निर्मिता:। ऋणविद्युद्युक्ता. कणा 'इलेक्ट्रान' इत्युच्यते, तथा या तेषामतीव तीव्रधारा साकैथोडकिरणेत्युच्यते। एतेषामेव ऋणघनविद्युद्युक्तकणाना न्यूनाधिकरूपवैषम्येण पृथक्-पृथग् गुणवन्ति मूलद्रव्याण्युत्पद्यन्ते।

यदा हि—यूरेनियमनामकादप्यधिकतेज किरणविसर्जकद्रव्यस्य रेडियमनामकस्य ज्ञान जातं तदा तु ज्ञातमिद यदेकग्रामपरिमितस्य रेडियमनाम्न. पदार्थस्य परमाणुभङ्गेनार्बुदद्वयग्राम-परिमितोष्णता प्राप्यते ( अर्द्धसेटकं कोयलानामक पदार्थं भस्मीकर्तुं यावत्य उष्णता अपेक्षिता-स्ततो दशलक्षगुणेयमिति। )

सूर्यमण्डलरचनाया वैज्ञानिकैरिदमपि कल्पित यत् परमाणोरपि रचना तथैवास्ति। मध्ये घनविद्युद्युक्त प्रोटानं तस्य चतुर्दिक्षु ग्रहस्थितिवद् ऋणविद्युद्युक्तम् एलेक्ट्रानम् ( अत्र च साख्यवादस्य प्रकृते:–रजस्तम सत्त्वाना चानुसरणं ज्ञायते ) निवसति। तीव्रवोल्टेजसम्पन्नया विद्युता इदं एलेक्ट्रानम् पृथक् कर्तुं शक्यते। ततोऽपि कालान्तरे प्रोटानं कणद्वयेन निर्मितत-त्रैकं घनविद्युद्युक्तंऽपरञ्च तटस्थमिति तटस्थ. कणो न्यूट्रानशब्देनोच्यते, यतोऽय न्यूट्रानोऽत: प्रोटानेषु सरलतया प्रविशति। प्रोटानभङ्गक्रियायामेतस्यैवोपयोगो भवति।

आसीत् पाश्चात्यवैज्ञानिकानामिदमेव ज्ञानम्, तद्धि—

१—मूलद्रव्यम्, अणुभिर्निर्मितम्

२—अणुश्च परमाणुभिर्निर्मित

३—परमाणु एलेक्ट्रानै प्रोटानैश्च

४—एलेक्ट्रान-प्रोटानौ च—ईथरेण शून्यवायुना चेति।

परमाणुर्वस्तुतो मूलतत्त्वाना लघुतम' कण , य च प्रशस्तानुवीक्षणयन्त्रैरपि द्रष्टुं न शक्नुम । तस्याकृतेरनुमान चैकेनोदाहरणेन कर्तुं शक्यते । तद्धि यद्येकस्य नारङ्गीफलस्याकार वर्धयित्वा पृथिव्यास्तुल्यं कुर्यात्, तदा तत्फलान्तर्भूता. परमाणव कन्दुकवद् द्रक्ष्यन्ते । एकस्या. सूच्या' चरमे भागेऽनेककोटिपरमाणव. सन्ति ।

परमाणुश्चायं क्षुद्रकणैर्निर्मित । प्रत्येक परमाणुर्लघुरूपसौरमण्डलसदृशोऽस्ति । यत्र केन्द्रपिण्डस्य चतुर्दिक्षु कणान्तराणि ग्रहवत् परिक्रमन्ति । केन्द्रपिण्ड प्रोटानै (घनात्मकविद्युत्-कणै ) तथा न्यूट्रानैश्च (विद्युद्विहीनकणै.) निर्मित । तथा ऋणात्मककणा (एलेक्ट्राना.) केन्द्र-पिण्डस्य चतुर्दिक्षु भ्रमन्ति । अतो विचारणीयमिति यत् परमाणौ शून्य स्थानमस्ति, तदन्त एते कणा. परस्परमपरमपर कण तीव्रशक्त्या आकृष्यन्ति, अत एवैतेषा पृथक्करण सरलतया न भवितुमर्हति । तदर्थं परमाणौ तीव्रतमैर्विद्युत्कणैराघातोऽपेक्षित. ।

ब्रिटिशवैज्ञानिको लार्डरदफोर्ड सर्वप्रथमं परमाणोरवयवान् पृथक् कृतवान् १९१९ ईशवीये वत्सरे । ततश्च परमाणुभेदनार्थं विभिन्नदेशेषु प्रचलितमनुसधानम् । तत्रामेरिकादेशीय-प्रोफेसरलारेन्सो विशेषत सफलोऽभूदिति पाश्चात्यविदुषां मतम् ।

श्रीमहर्षिकणादमते यश्चाणुपरिमाणस्य चरमोऽवधि., यतो न किमपि, अणुः स एव परमाणु. । स चेदनित्यस्तदा तस्य किमपि समवायिकारणं वक्तव्यम् । अन्यथा कार्यभावोत्पत्तिर्न स्यात् ।

नित्यश्चेत्तदा स एवास्माक परमाणुरिति एतन्मते (ध्वसभिन्नत्वे सति ध्वंसाप्रतियोगित्वं नित्यत्वम्) ततोऽतिरिक्तो घटाद्यवयवी अनित्य इति परमाणुपुञ्जवादिबौद्धमत निरस्तम् ।

अत्र मानं च "न प्रलयोऽणुसद्भावात्" (४।२-१६) इति सूत्रे न्यायभाष्ये । यस्मान्नाल्प-तरमस्ति, य' परमोऽल्पस्तत्र निवर्तते । यतश्च नाल्पीयोऽस्ति त परमाणु प्रचक्ष्मह इति ।

एव च कार्यद्रव्यस्योत्पत्तिविनाशप्रक्रिया चेत्थम् । तथाहि--महेश्वरस्य चिकीर्षावशात् प्रथमं परमाणुषु क्रियोत्पद्यते, ततो द्वयो परमाण्वो सयोगस्तेन द्वचणुकमुत्पद्यते, तत्र द्वचणुकोत्पत्तौ परमाणु. समवायिकारणम्, परमाणुद्वयसयोगोऽसमवायिकारणम्, परमेश्वर तज्ज्ञानम्, इच्छा, तत्कृति', कालः, दिक् प्रागभावोऽदृष्टम् (धर्माधर्मौ) प्रतिबन्धकाभाव इति निमित्तकारणम् (एतानि च कार्य-मात्रं प्रति साधरणकारणनिमित्तकारणानि ) । एवं द्वचणुकोत्पत्त्यनन्तर महेश्वरेच्छावशाद् द्वच-णुकेषु क्रिया, ततस्त्रिभिर्द्वचणुकैरेक त्र्यणुकमारभ्यते । एवमत्रापि द्वचणुकानि समवायिकारण तेषा संयोगोऽसमवायिकारणम्, ईश्वरेच्छादिक निमित्तकारणम् । एवमेव पूर्ववत्तेषु सजातीयेषु त्र्यणुकेषु क्रिया, तैश्चतुर्भिस्त्र्यणुकैरेक चतुरणुकमुत्पद्यते । ते चासंख्याता एवोत्पद्यन्ते । एवं चतुरणुकोत्पत्तौ सत्या तत एव पञ्चभिश्चतुरणुकैर्मिलित्वा एक स्थूलतर कार्यमारभ्यते, ततस्तैः स्थूलतरै. पञ्चभि. पञ्चाणुकैर्मिलित्वा एकं स्थूलतर कार्यमारभ्यते । ततस्तै. स्थूलतरैः पञ्चा-णुकैर्मिलित्वा स्थूलतमं पञ्चाणुकाख्यं कार्यमारभ्यते । एवमेव पूर्वपूर्वकार्यापेक्षयोत्तरोत्तर स्थूलकार्योत्पत्तिक्रमेण महती पृथिवी, महत्य आप., महत्तेज , महान् वायुश्चोत्पद्यते ।

**संहारक्रमश्च—**

महेश्वरस्य कार्यद्रव्यसञ्जिहीर्षावशात् परमाणुषु क्रियोत्पत्तिः । ततः परमाणुद्वयविभागः,

ततो द्वयो. परमाण्वो सयोगनाश·, ततो द्व्यणुकनाश , ततस्त्र्यणुकनाश , एवं चतुरणुकादि-नाशक्रमेण महापृथिव्यादीना नाश. । अयमेवावान्तरप्रलय इत्युच्यते ।

सर्वकार्यद्रव्यध्वंसोऽवान्तरप्रलय इति तल्लक्षणात् । महाप्रलयस्तु सर्वकार्यभावध्वस । भावकार्यं चानित्य द्रव्यम्, अनित्या गुणा , अनित्य कर्म चेति बोध्यमिति ।

**पुनः सृष्टिसद्भावे मानञ्च—**

"धाता यथापूर्वमकल्पयत्" (ऋग्वेद १०।१९०।१-२-३) इत्यादिश्रुति ।

मीमासकास्तु—संसारप्रवाहो बीजाङ्कुरन्यायेनानादिरनन्त , नैव प्रलयसद्भावे मान-मित्याहु. ।

समवायिकारणनाशाद् द्रव्यनाश । क्वचिदसमवायिकारणनाशाद् द्रव्यनाश इति प्राञ्च ।
सर्वत्रासमवायिकारणनाशाद् द्रव्यनाश । एव सति लाघवमिति नव्या ।

एतेषा पाकजत्वं तु क्षितौ, नान्यत्र कुत्रचित् । तत्रापि—परमाणौ स्यात् पाको वैशेषिके नये ( सि० मु० कारिका १०५ ) ।

वैशेषिकमते ( पीलुपाकवादिमते ) रूपरसगन्धस्पर्शाना पाकजत्वं पृथिव्यामेवोपलभ्यते । पृथिव्यामपि परमाणावेव पाक इति वैशेषिका वदन्ति । तेषामयमाशय —

अवयविना घटपटादिना, अवष्टब्धेषु-आवृतेषु निरुद्धेषु वा, अवयवेषु—कपालादिषु, पाक. रूपपरावृत्तिहेतुस्तेज.सयोगो न सभवति । प्रतिबन्धे सति कथ पाक स्यात् ? अर्थाद् रूपादिनाशं प्रति साक्षात् परम्परया साधारणत सर्वावयवावच्छेदेन कारणत्वम् । तेनावयविना-वरुद्धेषु अवयवेषु अवयविनि पूर्वरूपनाश कथं स्यात् ? कथ च तदनाशे रूपान्तरमुत्पद्येत ? सर्वावयवावच्छेदेन तेज सयोगाभावादिति । अतोऽवयविषु ( घटाद्यारम्भककपालादिपर-माणुपर्यन्तेषु ) अग्निसयोगेन, घटादिद्व्यणुकपर्यन्तेषु नाशसभवात् स्वतन्त्रेषु ( कार्यद्रव्यध्वस-विशिष्टेषु ) परमाणुषु पाक । पुनश्च पक्वपरमाणुसयोगाद् द्व्यणुकादिक्रमेण पुनर्महावयवि-पर्यन्तमुत्पत्ति । तेजसामतिशयितवेगवशात् पूर्वसस्थाननाश झटिति सस्थानान्तरोत्पत्तिश्चेति ।

तत्र क्षणप्रक्रियाया विचार्यमाणाया विभागजविभागानङ्गीकारे ( कारणाकारणविभागात् कार्याकार्यविभागवत्, कारणमात्रविभागात् कारणाकारणविभागानङ्गीकार इत्यादिविभिन्न-विधिना नवक्षणदशक्षणैकादशक्षणा प्रक्रिया प्रदर्शिता । इति )

नैयायिकाना तु नये द्व्यणुकादावपीष्यते । अर्थाद् नैयायिकाना पिठरपाकवादिना गौतमानुसारिणा नये ( शास्त्रे ) द्व्यणुकादाववयविन्यपि पाको भवति । अपिशब्दात् परमाणावपि चरमावयवे । एतेषा चायमाशय —

अवयविन सच्छिद्रा सन्ति, तस्मात् तदन्तराग्निप्रवेशो निष्प्रतिबन्ध । ततोऽवयविन-मारभ्य परमाणुपर्यन्त पाको जायते । एव निर्वाहे सति असख्यावयव्युत्पत्तिकल्पनाया गौरवमेव पीलुपाकमते । आमघटान्तर्निक्षिप्तजलस्य बहिर्भागे निस्यन्दनमेवावयविनो घटस्य सच्छि-द्रताया मानमस्ति (इति) ।

साख्यमते चेयं प्रक्रिया । तथा च—यद्येकं प्रधानं तर्हि कथ तस्माद्विविधकार्योत्पत्ति·, नह्येकतन्तुतः पटो दृश्यते, तत्राह—

**कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च ।**

**परिमाणतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥**

( सां० का० १६ )

यदव्यक्तं जगत. करणमस्ति तत्त्रिगुणत. प्रवर्तते (सत्त्वादिगुणत्रयात् प्रवर्तते) कार्यं जनयति। तथा च गुणत्रयात्मके प्रधाने बहुत्वमस्त्येव, अतो नानुपपत्ति । एकजातीयकार्यजनकता (अचेतन-सजातीयकार्यजनकता ) कथम् ? तत्राह–समुदयाच्चेति ( समेत्योदयः समुदय ) मेलना चेत्यर्थ, गुणप्रधानभावेन ( गौणमुख्यभावेन ) मिलित्वा चित्ररूपमिवैक कार्यं जनयति इति भाव ।

भवतु महदादिकार्यमेकजातीयम्, कार्यान्तरेषु ( जडप्रकाशरूपेन्द्रियतन्मात्रेषु ) वैषम्यं तु कुतस्तत्राह–प्रतिप्रतीति । एकैकगुणाश्रयेण यो विशेषस्तस्मादित्यर्थ । गुणवैषम्याद्वैषम्यमिति भाव ।

तत्र दृष्टान्त.–परिणामन सलिलवदिति । यथा सलिलमेकमपि नारिकेलजम्बीरादि-परिणामभेदान्मधुरतिक्तादिभाव प्रतिपद्यते तद्वदिदमपि सहकारिभेदादेव विषममिति ।

**एवं च पुरुषे प्रमाण प्रदर्श्य "सघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।**

**पुरुषोऽस्ति भोक्तृ भावात् कैवल्यार्थं प्रवृत्तेश्च ॥"** ( सा० का० १७ )

इत्यनेन पुरुषेऽपि प्रमाणमुपन्यस्य तस्य बहुत्व प्रतिपादयति । तथाहि—

**जन्ममरणकरणाना प्रतिनियमादयुगपत् प्रवृत्तेश्च ।**

**पुरुषबहुत्वं सिद्ध त्रैगुण्यविपर्ययाच्चैव ॥** ( सां० का० १८ )

पुरुषबहुत्वं सिद्धम्, कस्मात् ? जन्ममरणकरणाना प्रतिनियमात्–आत्मनि देहसम्बन्धो-जन्म तत्त्याग एव मरण, करणानि चक्षुरादीनि, एषा प्रतिनियम प्रत्येकमेव दर्शनं ( व्यवस्था ) तस्माद् आत्मन एकत्वे तन्न स्यात् । एकस्मिन् जाते मृते वा सर्व एव जाता मृता वा स्युः । एकस्मिन् सचक्षुषि सर्व एव सचक्षुष स्यु, एकेन दृष्टे सर्वे द्रष्टार स्यु । न च तथा, तस्माद् बहव पुरुषा इति भाव. ।

हेत्वन्तरमाह–अयुगतप्रवृत्तेश्चेति एकस्य धर्मेऽन्यस्य ज्ञाने, अन्यस्य वैराग्ये, अन्यस्यैश्वर्ये, अन्यस्य कामादावित्येव प्रवृत्तिभेदादित्यर्थ. । आत्मन एकत्वे सर्वेषामेकस्मिन्नेवार्थे युगपत्प्रवृत्ति. स्यात्, न च तथा, तस्मादपि बहव पुरुषा इति भाव ।

हेत्वन्तरमाह—त्रैगुण्यविपर्ययाच्चैवेति । एवकारो भिन्नक्रम, सिद्धमित्यस्यानन्तरं द्रष्टव्यम्, सिद्धमेव नासिद्धम्, त्रयो गुणास्त्रैगुण्यम्, तस्य विपर्यय. परिणामभेद, क्वचित् सुखमेव, क्वचिद् दु.खमेव, क्वचिन्मोह एवेत्येवविधस्तस्मात् । यद् वा त्रैगुण्येन विपर्ययो भेद, सात्त्विकराजसभेदेन पुरुषस्य, तस्मादेकत्वपक्षे तु तन्न स्यात्, किन्तु सर्वे सुखिनो दु खिनो वा स्यु । एवं त्रिगुणभेदेन नीचोत्तममध्यम व्यवस्थापि न स्यात् । न चान्त.करणभेदात्तथेति वाच्यम्, अन्त.करणभेदे पुरुषभेदस्यैव बीजत्वात्, अन्यथा तद्भेदस्याप्रामाणिकत्वात् ।

सर्गक्रमश्च—

> **प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशक ।**
> **तस्मादपि षोडशकात् पञ्चभ्य पञ्चभूतानि ॥ ( सां० का० २२ )**

अत्रेय प्रक्रिया—एक प्रकृतित किञ्चिन्न्यूनपरिमाण महत्तत्त्वमशाशिभावापन्न जायते। तत्राशा बुद्धितत्त्वाख्या आत्मसमसख्या शरीरप्रवेशार्हप्रमाणका जीवभोगाय भवन्ति। तेषामापूरिका प्रकृतिरेव। एवमहङ्कारो महत्तत्वाल्पपरिमाणोऽशाशिभावापन्नो भवति। तत्राशाः सूक्ष्मा आत्मसमसख्यास्तथैव तद्भोगाय भवन्ति।

षोडशको गणस्तु एकादशेन्द्रियाणि वक्ष्यमाणानि पञ्च तन्मात्राणि च, तस्मादपि षोडशकात् त षोडशकं प्राप्य स्थितेभ्य. तन्मात्रेभ्य पञ्च महाभूतानि भवन्ति। तत्र शब्दतन्मात्रादाकाश, तस्य शब्दो गुण., शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद् वायु, शब्दस्पर्शगुणवान्। शब्दस्पर्शतन्मात्रसहिताद् रूपतन्मात्रात् तेज, शब्दस्पर्शरूपगुणकम्। शब्दस्पर्शरूपतन्मात्रसहिताद् रसतन्मात्रादाप·, तत पृथिवी, शब्दस्पर्शरूपरसगन्धगुणेति। अत्र संग्रह—

> **वियदेकगुणं प्रोक्त द्वौ गुणौ मातरिश्वन ।**
> **त्रयस्तेजसि चत्वार सलिले पञ्च भूमिगा ॥ इति ।**

अहङ्कारादेव पञ्च भूतानि भवन्तीति तु न वक्तु शक्यम्। शब्दादिगुणकाना तेषामहङ्कारत उत्पत्तेरसंभवात्। अहङ्कारस्य शब्दाद्यभावात्, न चाहङ्कारस्य पञ्चगुणवत्त्वे मानमस्ति। तथा सत्याकाशादीनामेव पञ्चाना पञ्चगुणवत्त्व स्यात्। एव बाह्येन्द्रियग्राह्यगुणवत्त्वस्यैव भूतत्वेन तस्यापि भूततापत्तौ स्वस्य स्वकारणत्वानुपपत्त्या तस्य भूतकारणत्वश्रुतिविरोधश्च स्यात्। न चाहङ्कारस्य शब्दाद्यभावे कथ तस्माच्छब्दादितन्मात्रोत्पत्तिरिति वाच्यम् हरिद्रादीनां चूर्णादिसंयोगेन तदुभयारब्धे रक्तरूपवन्महदहङ्कारादिसयोगेन शब्दतन्मात्राद्युत्पत्तिसम्भवात्। न च स्थूलानामप्येवमेवमहङ्कारादुत्पत्तिर्वक्तु शक्येति वाच्यम्, स्वविशेषगुणकद्रव्योपादानकत्वव्याप्येन स्थूलत्वेन परिशेषात् सूक्ष्मद्रव्यारब्धत्वानुमानादहङ्कारोपादानकत्वनिरासात्। इत्थमन्यत्र विस्तर। तन्मात्रत्व च यज्जातीयेषु शान्तघोरमूढाख्यविशेषत्रय तिष्ठति, तज्जातीयतदनाश्रयशब्दस्पर्शरूपरसगन्धाश्रयसूक्ष्मद्रव्यत्वम्। शान्तं सुखात्मकम् घोरं दु.खात्मकम्, मूढ मोहात्मकम्, तन्मात्राणि च देवादियोग्यत्वेन केवलं सुखात्मकान्येव, सुखाधिक्यात्। सूक्ष्मत्वात् त्वयोग्यतया तेषामस्मदाद्यग्राह्यत्वमिति तत्त्वम्॥

अथ परिणामवादी—एतन्मते कार्यगुणा अपि कारणे सन्त्येव, परन्त्वनुद्भूता। कारणगुणा अपि कार्ये सन्त्येव। उद्भूता अनुद्भूता वेत्यन्यदेतत्। इति।

श्रीमद्भागवते द्वितीयस्कन्धे पञ्चमाध्याये श्रीभगवान् व्यासोऽपि नारदप्रश्ने ब्रह्मण उत्तरमुक्तवान्। तथाहि नारद उवाच—

> **देव देव नमस्तेऽस्तु भूतभावनपूर्वज ।**
> **तद्विजानीहि यज्ज्ञानमात्मतत्त्वनिदर्शनम् ॥१॥**
>
> **यद्रूपं यदधिष्ठानं यत सृष्टमिदं प्रभो ।**
> **यत्सस्थ यत्परं यच्च तत्तत्त्वं वद तत्त्वतः ॥२॥**

सर्वं ह्येतद्भवान् वेद भूतभव्यभवत्प्रभुः ।
करामलकवद्विश्वं विज्ञानावसितं तव ॥३॥
यद्विज्ञानो यदाधारो यत्परस्त्वं यदात्मक ।
एक. सृजसि भूतानि भतैरेधात्ममायया ॥४॥
आत्मनभावयते तानि न पराभावयन् स्वयम् ।
आत्मशक्तिमवष्टभ्य ऊर्णनाभिरिषा क्रम ॥५॥
नाहं वेद परं ह्यस्मिन् नापरं न समं विभो ।
नामरूपगुणैर्भाव्यं सदसत्किञ्चिदन्यत ॥६॥
स भवानाचरद्धोरं वत्तप सुसमाहित ।
तेन खेदयसे नस्त्वं परा शङ्का प्रयच्छति ॥७॥
एतन्मे पृच्छता सर्व सर्वज्ञ सकलेश्वर ।
विजानीहि तथैवेदमहं बुद्ध्येऽनुशासित ॥८॥

ब्रह्मोवाच—

सम्यक्कारुणिकस्येदं वत्स ते विचिकित्सितम् ।
यदहं चोदित सौम्य भगवद्वीर्यचोदने ॥९॥

इत्युक्त्वा चतुर्दशश्लोकत सृष्टिक्रममुपक्रान्तवान् । तथाहि—

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
वासुदेवात् परो ब्रह्मन् न चान्योऽर्थोऽस्ति तत्त्वत. ॥
नारायणपरा वेदा देवा नारायणाङ्गजा ।
नारायणपरा लोका नारायणपरा मखा ॥१५॥
नारायणपरो योगो नारायणपरं तप. ।
नारायणपरं ज्ञानं नारायणपरा गति ॥१६॥
तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मन. ।
सृज्यं सृजासि सृष्टोऽह मोक्षयैवाभिचोदित ॥१७॥
सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रय ।
स्थितिसर्गनिरोधेषु गृहीत्वा मायया विभो ॥१८॥
कार्यकारणकर्तृत्वे द्रव्यज्ञानक्रियाश्रया ।
बध्नन्ति नित्यदा मुक्तं मायिनं पुरुषं गुणाः ॥१९॥
स एष भगवांल्लिङ्गैस्त्रिभिरेभिरधोक्षज ।
स्वलक्षितगतिर्ब्रह्मन् सर्वेषां मम चेश्वर ॥२०॥
कालं कर्म स्वभावं च मायेशो मायया स्वया ।
आत्मन्यदृच्छया प्राप्तं विबुभूषुरुपाददे ॥२१॥
कालाद् गुणव्यतिकर परिणाम स्वभावत ।
कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत् ॥२२॥

महतस्तु विकुर्वाणाद् रज.सत्त्वोपबृंहितात् ।
तमःप्रधानस्त्वभवद् द्रव्यज्ञानक्रियात्मक. ॥२३॥

सोऽहङ्कार इति प्रोक्तो विकुर्वन् समभूत्त्रिधा ।
वैकारिकस्तैजसश्च तामसश्चेति यद्भिदा ॥
द्रव्यशक्तिक्रियाशक्तिज्ञानशक्तिरिति प्रभो ॥२४॥

तामसादपि भूतादेर्विकुर्वाणादभून्नभ. ।
तस्य मात्रा गुण. शब्दो लिङ्गं यद्द्रष्टृदृश्ययोः ॥२५॥

तेजसस्तु विकुर्वाणादासीदम्भो रसात्मकम् ।
रूपवत् स्पर्शवच्चाम्भो घोषवच्च परान्वयात् ॥२८॥

विशेषस्तु विकुर्वाणादम्भसो गन्धवानभूत् ।
परान्वयात्संस्पर्शशब्दरूपगुणान्वित· ॥२९॥

वैकारिकान्मनो जज्ञे देवा वैकारिका दश ।
दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ॥३०॥

तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन् ।
ज्ञानशक्ति. क्रियाशक्तिर्बुद्धि. प्राणश्च तैजसो ।
श्रोत्रं त्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायव. ॥३१॥

यदैते संगता भावा भूतेन्द्रियमनोगुणा. ।
यदायतननिर्माणे न शेकुर्ब्रह्मवित्तमाः ॥३२॥

तदा संहत्य चान्योन्यं भगवच्छक्तिचोदिता· ।
सदसत्त्वमुपादाय चोभयं ससृजुर्ह्यद ॥३३॥ इति ।

अपि च द्वि० स्कन्धे ६ अ०, ३ श्लोके—

नारायणे भगवति तदिदं विश्वमाहितम् ।
गृहीतमायोरुगुणः सर्गादावगुण. स्वत· ॥३४॥ इति ।

तत एवावलोकनीयम् ।

अपि च द्वि० स्क० १० अध्याये—

भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः ।
ब्रह्मणो गुणवैषम्याद् विसर्ग पौरुषः स्मृत. ॥३॥

अपि च—

निरोधोऽस्यानुशयनमात्मन सह शक्तिभिः ।
मुक्तिर्हि वान्यथारूपं स्वरूपेण व्यवस्थितिः ॥६॥

आभासश्च निरोधश्च यकाच्चाध्यवसीयसे ।
स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते ॥७॥

अन्यच्च—

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहत' सन्ति न सन्ति यदुपेक्षया ॥१२॥

एको नायात्वमन्विच्छन् योगतल्पात् समुत्थित. ।
वीर्यं हिरण्मय देवो मायया व्यसृजत् त्रिधा ॥१३॥ इति ।

एवमेव तृतीयस्कन्धे देवहूतेरुपदेशकाले साक्षाद्भगवता कपिलेनाप्युक्तम् । तद्धि—

अनादिरात्मा पुरुषो निर्गुण प्रकृते. पर. ।
प्रत्यग्धामा स्वयं ज्योतिर्विश्वं येन समन्वितम् ॥
स एव प्रकृतिं सूक्ष्मां दैवीं गुणमयी विभु ।
यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥ ४ ॥

गुणैर्विचित्रां सृजती सरूपाः प्रकृतिं प्रजा. ।
विलोक्य मुमुहे सद्य' स इह ज्ञानगूहया ॥ ५ ॥
एवं पराभिध्यानेन कर्तृत्वं प्रकृते. पुमान् ।
कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥ ६ ॥

अपि च—

कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।
भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृते. परम् ॥ ८ ॥

अपि च—

यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवित् ॥१०॥
पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।
एतच्चतुर्विंशतिकं गणं प्राधानकं विदुः ॥११॥
महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभ. ।
तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ॥१२॥

अपि चाग्रे तत्रैव—

एतावानेव संख्यातो ब्रह्मण' सगुणस्य ह ।
सन्निवेशो मया प्रोक्तो यः काल. पञ्चविंशकः ॥१५॥
प्रभावं पौरुषं प्राहु. कालमेके यतो भयम् ।
अहङ्कारविमूढस्य कर्तुः प्रकृतिमीयुषः ॥१६॥

प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि ।
चेष्टा यतः स भगवान् काल इत्युपलक्षितः ॥१७॥
अन्तःपुरुषरूपेण कालरूपेण यो बहिः ।
समन्वेत्येष सत्त्वाना भगवानात्ममायया ॥१८॥

दैवात् क्षुभितधर्मण्यां स्वस्यां योनो पर. पुमान् ।
आधत्त वोर्यसासूत महत्तत्त्वं हिरण्मयम् ॥१९॥
विश्वात्मगत व्यञ्जन् कूटस्थो जगदङ्कुर ।
स्वतेजसापिबत् ब्रमात्मप्रस्वापनं तम. ॥२०॥
यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवत पदम् ।
यदाहुर्वासुदेवाख्यं चित्त तन्महदात्मकम् ॥२१॥
स्वच्छत्वमविकारित्वं शान्तत्वमिति चेतस. ।
वृत्तिभिर्लक्षणं प्रोक्तं यथापा प्रकृति परा ॥२२॥
महत्तत्त्वाद् विकुर्वाणाद् गवद्वीर्यसम्भवात् ।
क्रियाशक्तिरहंकारास्त्रिविधत समपद्यत ॥२३॥
वैकारिकस्तैजसश्च तामसश्च यतो भवः ।
मनसश्चेन्द्रियाणां च भूतानां महतामपि ॥२४॥

इत्यादि सेश्वरसाख्यवादिमते च ईश्वरस्य विचित्रशक्त्या प्रकृत्यैव सृष्टिः प्रदर्शिता, सा प्रकृतिश्च सूक्ष्मरूपा ( अणुरूपैव ), परन्तु ईश्वरेच्छया महत्त्वविशिष्टापि भवत्येव । तथाहि–तत्रैव तृतीयस्कन्धे, अ० २६ श्लो० ५२—

एतदण्डं विशेषाख्यं क्रमवृद्धैर्दशोत्तरै ।
तोयादिभिः परिवृतं प्रधानेनावृतं बहिः ॥
यत्र लोकवितानोऽयं रूपं भगवतो हरे. ।

इत्यनेन प्रदर्शितम् ।

भा० स्क० ११ अ० २४—

अणुर्बृहत् कृश· स्थूलो यो यो भाव. प्रसिद्धयति ।
सर्वोऽप्युभयसंयुक्त· प्रकृत्या पुरुषेण च ॥
इत्यनेन च सर्वत्रैव चिच्छक्तियोगोऽस्त्येवेति सिद्धम् ।

**वैयाकरणमते च—**

स्फोटरूपब्रह्मणो विवर्तरूप जगद् विवर्त्तश्च—अतत्त्वतोऽन्यथाप्रथा—इति ।

अत्रापि—परमाणुर्बिन्दुरूपेणोच्यते । तथाहि—

क्रियाशक्तिप्रधानाया. शब्दशब्दार्थकारणम् ।
प्रकृतेर्बिन्दुरूपिण्या शब्दब्रह्माभवत् परा ॥

अत्रापि परावाक् शब्देन, बिन्दुरूपा, मूलाधारसस्था सकलकारणभूता प्रणवस्वरूपा प्रकृत्यपरपर्याया सूक्ष्मप्रकृतिरेव गृह्यते । तस्या अपि व्यञ्जनम् ओकार एव, "सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा च भवति" इतिश्रुते. भवत्येवेति—

स्मृतिरपि—

समाहितात्मनो ब्रह्मन् ब्रह्मण परमेष्ठिन ।
हृद्याकाशादभून्नादो वृत्तिरोधाद् विभाव्यते ॥ इति ॥

**ज्योतिर्मते च—**

मुनीन् प्रति कश्चिद्विशिष्टो मुनि. सूर्यांशपुरुषवचनमनुवाद्यानन्तरं मयासुरेण सूर्यांशपुरुषः पृष्टस्तत्र प्रश्नोत्तरे भूगोलाध्याये सूर्यसिद्धान्तेऽपि किमपि प्रदर्शितम् । तद्धि—

> **वासुदेव परं ब्रह्म तन्मूर्ति पुरुष पर' ।**
> **अव्यक्तो निर्गुण शान्त पञ्चविंशात् परोऽव्यय ॥१२॥**
> **प्रकृत्यन्तर्गतो देवो बहिरन्तश्च सर्वग ।**
> **सङ्कर्षणोऽप सृष्ट्वादौ तासु वीर्यमवासृजत् ॥१३॥**
> **तदण्डमभवद्धैमं सर्वत्र तमसावृतम् ।**
> **तत्रानिरुद्धप्रथमं व्यक्तीभूत सनातन ॥१४॥**
> **हिरण्यगर्भो भगवानेषच्छन्दसि पठ्यते ।**
> **आदित्यो ह्यादिभूतत्वात् प्रसूत्या सूर्य उच्यते ॥१५॥**
> **परंज्योतिस्तम पारे सूर्योऽयं सवितेति च ।**
> **पर्येति भुवनान्येष भावयन् भूरिभावन ॥१६॥**
> **प्रकाशात्मा तमोहन्ता महानित्येष विश्रुत ।**
> **ऋचोऽस्य मूलं सामान्युस्रा मूर्त्ति र्यजूंषि च ॥१७॥**
> **त्रमीमयोऽयं भगवान् कालात्मा कालकृद्विभु ।**
> **सर्वात्मा सर्वग सूक्ष्म. सर्वमस्मिन् प्रतिष्ठितम् ॥१८॥**
> **रथे विश्वमये चक्रं कृत्वा सवत्सरात्मकम् ।**
> **छन्दांस्यश्वा सप्तयुक्ता पर्यटत्येष सर्वदा ॥१९॥**
> **त्रिपादममृतं गुह्यपादोऽयं प्रकटोऽभवत् ।**
> **सोऽहङ्कारं जगत्सृष्ट्यै ब्राह्मणमसृजत् प्रभु ॥२०॥**

अत्राय विवेक —

अत्रापि —

> **"वासुदेव परंब्रह्म तन्मूर्त्ति पुरुष. पर ।**
> **अव्यक्तो निर्गुण शान्त पञ्चविंशात् परोऽव्यय ॥**

प्रकृत्यन्तर्गत सर्वग संकर्षणः सर्वात्मा सर्वग सूक्ष्मः" इत्यादिभि सर्वकारणभूतस्य सूक्ष्मत्वं प्रतिपादितम् । अव्यक्ततो व्यक्तीभवनं च कारणशक्तित इति स्पष्टमेवोक्तम् । "तासु वीर्यमवासृजत्"इत्यादिनेति । तमसावृतेऽण्डेऽनिरुद्ध , हिरण्यगर्भ आदित्य इत्यपरपर्याय. तेज - स्वरूपस्याविर्भावोऽपि स्पष्टः पूर्वप्रसङ्गे । एवं सूर्य एव महत्तत्त्वेनाप्युक्त. । एतस्यैवाङ्गत्वेन वेदा निर्दिष्टाः । 'इम एव जगत. कारणभूता. सन्ति' इति ।

**वैयाकरणैश्च—**बिन्दुरूपिण्या नादरूपाया परानाम्न्या' प्रकृते क्रियाशक्तिप्रधानायाः सकोशाज्जगदुत्पन्नमिति स्वीक्रियते ।

'सिद्धा च कारणाचिन्त्यशक्तिर्वेदमन्त्रेषु- -

तथाहि—

१. अर्जुनाश्वत्थाम्नोर्ब्रह्मास्त्रप्रयोगे,

२. विश्वामित्रद्वारके वलातिवलोपदेशे श्रीरामचन्द्रं प्रति वाल्मीकीये।

३ श्रीभारद्वाजकर्तृके श्रीरामचन्द्रस्य भरतस्य वातिथ्यसम्पादने।

४ वसिष्ठेन श्रीविश्वामित्रप्रयुक्तसर्वास्त्रनिवारणे।

५ विश्वामित्रकर्तृकसृष्टौ, त्रिशङ्को. स्वर्गप्रेषणप्रयासे च।

६. अन्येष्वपि श्रुतिस्मृतीतिहासपुराणप्रतिपादितेषु कथाप्रसङ्गेषु।

**साम्प्रतं च लोकेऽपि सर्वैरनुभूयते शब्दशक्तिः सर्पवृश्चिकादिविषाणामन्यथाकरणेन मन्त्रैरिति॥**

ब्रह्मशक्तिरेव सर्वजगदुत्पादिकेत्यत्र तु स्थूलप्रकृतिश्चमत्कारासक्ताः पाश्चात्यविद्वास उदासीना एव अतो बौद्धन्यायवैशेषिकसाख्यवादिपरमाणुभिः सहैवार्वाचीनानां परमाणुवादपर्यालोचनं युक्ततरं प्रतिभाति।

तथा च—परमाणवोऽपि नित्यानित्यभेदेन द्विविधाः। यो हि नित्यः स तु कणादकपिलादिभिरपि कैश्चित् परमाणुरूपेणापरैश्च सूक्ष्म (प्रकृति) रूपेण। वैयाकरणैर्बिन्दुरूपेण। शाङ्करवेदान्तिभिरविद्यारूपेणापरैश्च वेदान्तिभिरचिद्रूपेण विचित्रस्य जगत सृष्टिं प्रतिपादयद्भि, अणोरणीयान् महतो महीयान् नित्यो नित्याना चेतनश्चेतनानामेको बहूना यो विदधाति कामानिति श्रुतिभिश्च महत्त्वविशिष्टस्य जगत. कारणत्व तत्तद्रूपेणाभिहितपरमाणूनामेव। तत्र चेश्वरशक्तिर्ब्रह्मशक्ति, प्रकृतौ स्वाभाविकी शक्तिर्वेत्यङ्गीक्रियते।

अनीश्वरवादिभिर्बौद्धादिभि. परमाणुपुञ्जै कार्यजातस्यासिद्धि ब्रुवद्भिश्च पुञ्जीभवने काचिद्विचित्रा शक्ति. स्वभावशक्ति. स्वीकार्या एव, अन्यथा विचित्रजगतोऽनुत्पत्तिरेव स्यात्।

पाश्चात्यविद्वद्भिश्च परमाणौ काचिद्विद्युद्रूपा शक्तिरस्ति। प्रयाससाध्य परमाणोर्भेदनमपि भविष्यतीति ब्रुवद्भि. परमाणु स्वीक्रियत एव, स च विद्युच्छक्तियुक्त ईश्वरशक्तियुक्तो वेत्यन्यदेतत्।

पूर्वोक्तरीत्या जालान्तर्गतभानुकिरणे यत्सूक्ष्मं रजो दृश्यते, तत्तु त्र्यणुकपरिमाणमिति तस्य षष्ठतमो भागः परमाणुः स उच्यत इति सिद्धान्तपक्ष इति।

तैश्चाणुभिरपाम्, पृथिव्याः, तेजस., वायोश्च व्याप्तमिदमाकाशमण्डलम्।

अर्वाचीनाना मते च तत्त्र्यणुकेष्वेव परमाणुरिति व्यवहार.। प्राचीनानां मते यश्चाणुपरिमाणस्य चरमोऽवधि, यतो न किमप्यणु स एव परमाणुरित्युक्तस्तथा च यावदवधिरणूना विभागस्तावत्कालं तु द्वयणुकादिरेव भवितुमर्हति। अत परमाणोर्हि यो विभागोऽर्वाचीनैः प्रदर्शित. स च द्वयणुकादिष्वेव परमाणुभ्रान्त्या।

१. प्राचीनैश्च—ओषधिनिर्माणकार्येष्वञ्जनादिषु विचित्राणामणूना सम्मेलनेन विचित्रौषधीना निर्माणेनाणुशक्ति प्रकटीकृता। लेह्यपदार्थेषु च तथैव वैचित्र्यमनुभूयते।

२. सुवर्णादिनिर्माणरूपरासायनिकक्रियासु च विचित्रपरमाणुशक्तिरेव कर्मकरीभवति।

३. यज्ञादिषु चारणिमन्थनेऽणूनामेव सघर्षणजन्यविस्फोटेनाग्नेरुत्पत्तिः।

४. आतसीनामकशीशक( सूर्यकान्तमणि )सहकारेण सूर्यकिरणाना पृथक् पृथग् विघटितानां तेजःपरमाणूनामेवैकत्रकरणेनाप्यग्नेरुत्पत्ति' ।

५. पार्थिवचूर्णेषु ( चूना इति प्रसिद्धेषु ) अत्यन्तपुञ्जीभूताना परमाणूना दृषद्रूपेण परिणतानाभग्निसंयोगेन दग्धाना शान्ताग्नीनामस्फुटिताना जले निक्षेपेण परमाणूना विघटनकाले तीव्रतरस्याग्नेरुष्णतोपलभ्यते ।

६ पाकप्रक्रियानिर्दिष्टरीत्या च परमाणुष्वेव पाकः । एव च वायुसहकृतस्याग्नेर्वस्त्वन्तरे परमाणौ प्रवेशानन्तरमेव पाको भवितुमर्हति । अतः परमाणौ तयो. प्रवेशेनैव पृथिव्या पाकजरूपादीना परिणाम ।

एवं च यत्रान्यस्य प्रवेशस्तत्रावकाशोऽपि स्वीकरणीय एवेति किमधिकं वैलक्षण्य परमाणौ शून्यं स्थानमस्तीति वदतामर्वाचीनाना मते ?

७ पञ्चीकरणरीतिर्वेदान्तिनामपि नयेऽङ्गीकृता । तत्र यत्र पदार्थे यस्य तत्त्वस्याधिक्यं तत्तत्त्वेन व्यवह्रियते । यथा सुवर्णे माणिक्ये च तैजसपरमाणूनामाधिक्यम् तत्र च पार्थिवादिपरमाणूना स्थितावपि सुवर्णं तैजसमिति व्यवह्रियते । अत एवाग्निसयोगेऽप्यन्यद्रव्यवन्न तस्य नाश. । विलक्षणद्रव्यसहकारेण भस्मरूपेण परिणतेष्वपि चाकचिक्ययुक्तास्तैजस परमाणव दृश्यन्ते, विचित्रगुणयुक्ता रोगशामकाश्च भवन्ति ।

८. साख्यनये—शब्दतन्मात्रादाकाश , स्पर्शतन्मात्राद् वायु , रूपतन्मात्रात् तेज , रसन्मात्राद् जलम्, गन्धतन्मात्रात् पृथिवीति क्रमेण पूर्वतन्मात्रसहितादुत्तरोत्तराकाशादितत्त्वाना सृष्टि प्रदर्शिता ।

अर्वाचीनैश्चेद विश्वं प्रारम्भकाल आकाशरूपं वायुरूप वात्यन्तोष्णमासोदिति स्वीकरणेनैषैव सरणिरङ्गीकृता इति न किमपि वैचित्र्यम् ।

सर्वैरप्यनुभूयते घृतजलादिकाठिन्येन, यच्छैत्येन काठिन्यम्, उष्णेन च द्रवीभवनम् । परमाणुविघटनं चेति यया क्रियया सयोग , ततो विपरीतक्रियया वियोग इति वायुतेजसोराधिक्ये सकलपिण्डीभूतपदार्थावयवाना विभाग इति नातोऽपि प्राचीनदार्शनिकापेक्षयाऽर्वाचीनाना किमप्यधिकं बुद्धेर्वैलक्षण्यम् ।

९ परमाणुस्तत्कार्यवैचित्र्यञ्च प्रत्यह सर्वैरनुभूयते, यतो हि परमाणुरूपाङ्कुरात् पिप्पलवद्वृक्षाकृत्या पुष्पपरागरूपाणुभ्यो वाय्वानीतेभ्योऽदृश्यमानेभ्योऽनेकेषा जनाना युगपद्गन्धलाभेन पृथिव्या., तथैव जलप्रपातान्तप्रदेशेषु वाय्वानीतजलपरमाणुभिः शैत्यलाभेन ग्रीष्मान्ते, वायुतेजसो. सहकारेण विघटिताना जलपरमाणूना वर्षासु घनीभूताना मेघाकारपरिणतेन च जलस्य । ग्रीष्मे तैजसानामणूनामाधिक्येन घर्मसतापेन तेजस , तथैव वायोरणूनामाधिक्येन वायुप्राबल्याद् वायोः । सर्वदैवैकस्यैव शब्दस्य वीचीकदम्बन्यायेन तद्वत्प्रसरणेनाकाशस्य इति ।

इदं सर्वं जडस्य वैचित्र्यम्, चेतनस्य, उभयोर्वेति सुधीभिर्विचार्यमेव । मदीयस्त्वेष विचार., तथाहि—यथा यस्य वृद्धिर्भवति, तद्विपरीतक्रियया ह्रासोऽपि सभवति । वृक्षादिषु यावत्कालं प्राणसंचारानुमितचेतनससर्गा भवति, तावदेव तस्य वृद्धिर्दृश्यते । चेतनससर्गाभावे तस्य

विनाशोऽपि भवति। एव चात्र जडचेतनयो· ससर्ग एव विचित्रा शक्तिरस्ति। सा शक्तिर्जडे चेतने वा तिष्ठतीति सदिहान एवाद्यावधि जगज्जीव.। अत एवागतिकतया प्रत्यक्षव्यवहार-भूताना जडद्रव्याणामेव परमाणुषु शक्तेरन्वेषण करोति, न चान्त गच्छति।

१०. जडपरमाणुभ्यो भिन्ना अपि केचन परमाणव सन्ति। ते चात्मेति, पुरुष इति, ब्रह्मेति शब्दवाच्या वेत्यन्यदेतत्। तच्छक्तेरेवोपनिषत्सु वर्णनमुपलभ्यते—"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुत्या। तच्छक्तौ सम्पद्यमानाया संकल्पसिद्धिर्भवति।

१. तदैक्षत बहु स्या प्रजायेय" इति श्रुत्या ब्रह्मण संकल्पसिद्धि सिद्धा।

२. वाल्मीकीयरामायणे च श्रीमहर्षिभारद्वाजोऽपि सकल्पसिद्धचैव लौकिकभोग्यवस्तूना सम्पादनेन श्रीभरतस्यातिथ्य चकार।

३. आत्मशक्तिसहकारेणैव पूर्वं ब्रह्मास्त्रादीना प्रयोग आसीत्।

अपि च पञ्चभिरेव तत्त्वैर्निर्मिता विभिन्नजातिगुणाकारा, विभिन्नस्वभावा मनुष्या, पशवः, पक्षिण., स्थावराः, वृक्षौषधिसमुदायाश्चेश्वरसृष्टौ जाता ।

अद्यापि लोकैर्मूलतो विभिन्नवृक्षसंयोगेन विभिन्नफलोत्पादकाना विभिन्नगुणानाञ्च फलाना वृक्षाणा नवनिर्माण क्रियते। यथा चाणुतो महापरिमाणका पृथिव्यादयो जाता.। लघुपरिमाणतो वायो. सहकारेण कन्दुकादिषु महत्त्वम्, चणकान्नादिचूर्णनिर्मितवटिकादिषु च महाकारत्व सम्पद्यमानं दृश्यते।

एवमेव यन्त्रादिसाधनाना सद्भावे परमाणुभिस्तच्छक्तिभिश्च मनुष्यो ज्ञानमेक विहाय प्रकृतिजन्यवस्तूना विलक्षणाना साधने समर्थो भवितुमर्हति। विशेषतोऽत्रार्थापेक्षा कालापेक्षा चेत्यन्यदेतत्।

यथा चेश्वरनिर्मितचक्षुरिन्द्रियस्य ह्रासे विभिन्नस्वच्छपरमाणुनिर्मितोपनेत्रैर्दर्शनशक्ति समेध्यते, तथैवेश्वरस्य प्राकृतिक प्रतीकमादायान्यान्यपि कार्यजातानि साधितुं शक्यन्त एव। परञ्चैष एव भेद.—स च चैतन्यविशिष्टैः परमाणुभि (वीर्यादिभि) चैतन्यविशिष्टपिण्डस्य, अन्यैश्चान्यस्य वस्तुन. सिद्धिरिति।

एव च पूर्वोक्तेनेदमेव प्राचीनार्वाचीनपरमाणुवादपर्यालोचनेन निष्पन्न यद्धचर्वाचीना. प्रकृतेर्द्व्यणुकपर्यन्तमनुधावन कृत्वा कृतकृत्यं मन्यमाना. सन्ति।

प्राचीनाश्च ततोऽप्यग्र आत्मशक्तिमवलम्ब्य सर्वसङ्कल्पसिद्धि कुर्वन्ति स्म। प्राकृतिका च सिद्धि नश्वरां नि·साराञ्चावेक्ष्य वेदेषु च सम्यगालोच्य लोकानवबोध्य स्वय चात्मशक्तिसम्पादने सल्लग्ना बभूवुरिति।

इत्थ प्राचीनमतपरमाणुषु चेद् विशिष्टानुधानं स्यात्, तदा तु जगन्मङ्गलकारकाणा-मुपायानामुपलब्धिर्भवेदित्यत्र नहि शङ्काकलङ्कपङ्कावकाश।

षोडशोत्तरद्विसाहस्रे वत्सरे फाल्गुनेऽसिते।
दशम्या शशिवारेऽभूत् पूर्ण पराणुनिर्णय ॥ १ ॥



# प्राचीनभारते केषाञ्चिद् यन्त्राणां वर्णनम्

(Desciiption of the some instiuments in old India)

डॉ० रामनारायणदासः

वरिष्ठानुसन्धाता ( सीनियर रेसर्चफेलो ) यू० जी० सी

अद्यतने युगे सर्वविधकार्यनिर्वाहाय विविधयन्त्राणामन्वेषण जातमिति सर्वेषा विदित-चरम् । अतोऽय काल 'यन्त्रयुग' इत्यपरनाम्ना लोके प्रसिद्धिमागत । अस्मिन् युगे दूरश्रुत्यर्थं बहूनि यन्त्राणि दृष्टिगोचरीभवन्ति । तद्यथा-दूरभाषयन्त्रम्[1], दूरध्वनिग्राहक[2]-प्रेषकयो·[3] सविद्युद्-यन्त्रम्, विद्युद्विहीनञ्च दूरध्वनिग्राहकप्रेषकयन्त्रम्[4] । एभिर्यन्त्रैविद्युच्छक्त्या ध्वनिग्रहण-प्रेषणयो. सर्वं कार्यं निरुद्यते ।

प्राचीनकालेऽपि वैद्युदावैद्युदेत्युभयविधयन्त्राणा न्यूनता नासीदिति सर्वे गीर्वाणसाहित्य-पारावारीणा मनीषिणो विदन्ति । उक्तञ्च वाल्मीकीयरामायणस्य सुन्दरकाण्डे—

**तरस्विनौ धारयता मृगस्य सत्त्वेन रूपं मनुजेन्द्रपुत्रौ ।**

**नूनं विरास्तौ मम कारणात्तौ सिंहर्षभौ द्वाविव वैद्युतेन ॥**

(सर्ग०, ६४। श्लो० २२)

मृगस्य रूप धारयता सत्त्वेन वैद्युतेनेव संहर्षभौ तौ द्वौ मनुजेन्द्रपुत्रौ मम कारणात्तौ विरास्तौ । एवं लङ्कायामशोकवाटिकाया जनकात्मजा विलाप कुर्वन्ती शङ्कास्पदं वाक्य जगाद । यथा वैद्युतं यन्त्र कमपि प्राणिन वञ्चयित्वा प्राणैर्विमुक्त करोति, तथैव तेन मृगेण प्रवञ्च्य तौ हताविति तात्पर्यमवसीयते । अत्र श्लोके 'वैद्युतेन' इति पदेन प्राचीनकालिक-वैद्युतयन्त्रव्यवहार प्रमाणितो भवति । साम्प्रतमिव प्राचीनकालेऽपि उत्क्षेपणादियन्त्राणामस्तित्व-मितिहासग्रन्थेषु श्रूयते । तद्यथा प्रमाणशिरोमणिभूतस्य वाल्मीकीयरामायणस्य सुन्दरकाण्डे प्रोक्तम्—

**उत्पतन्तमनुत्पेतु. सर्वे तु हरियूथपाः ।**

**कृत्वाकाशं निराकाशं यन्त्रोत्क्षिप्ता इवोपला· ॥**

(सर्ग० ६४ श्लो० ४२)

यथा यन्त्रोत्क्षिप्ता उपला आकाश निराकाश कृत्वा परस्परमुत्पतन्तमनुत्पतन्ति, एव ते सर्वे हरियूथपा इति श्लोकान्वय· । प्राचीनकाले एतादृग् यन्त्रमासीद्, येन न केवल लोष्टानि यद्वा शर्कराः, अपि तु उपला विशाला शिला अपि उत्क्षिप्यन्ते स्म । उपलोत्क्षेपकयन्त्रे एतादृशी शक्तिरासीत् । किञ्च न केवल व्यवहारोपयोगिना विविधयन्त्राणामेवान्वेषण पूर्वं कृतमासीत्, अपि तु क्षणमात्रेण योजनगामिना विविधयानानामपि गवेषणाऽभूत् । महर्षिभरद्वाजकृते अंशुबोधिनीत्याख्ये

---

१. टेलीफोन २. रेडियो ३. रेडियोस्टेशन ४. वायरलेस टेलीग्राफी ।

ग्रन्थे विविधविद्याना वर्णनं कृतम् । अस्य ग्रन्थस्य विमानप्रकरणे "शक्त्युद्गमाद्यष्टौ" इति सूत्रस्य बौधायनो निम्नाङ्किता व्याख्या चकार—

**शक्त्युद्गमो भूतवाहो धूमयानशिखोद्गमः ।**
**अंशुवाहस्तारामुखो मणिवाहो मरुत्सखः ॥**
**इत्यष्टकाधिकरणे वर्गाण्युक्तानि शास्त्रतः ।**

१. शक्त्युद्गम'—विद्युच्छक्त्या सञ्चरति ।
२. भूतवाह.—वाय्वग्निजलादिभि' सञ्चरति ।
३ धूमयानम्—वाष्पद्वारा प्रचलति स्म ।
४. शिखोद्गम —पञ्चशिखिनस्तैलेन सञ्चरति ।
५. अंशुवाहः—सूर्यरश्मिद्वारा प्रचलति ।
६. तारामुख:—उल्कारसेन ( चुम्बकेन ) परिभ्रमति ।
७. मणिवाह —सूर्यकान्ताचन्द्रकान्तादिमणिभिर्गच्छति ।
८. मरुत्सख.—वायुशक्त्या सञ्चरति ।

शक्त्युद्गमाख्यविमानप्रामाण्येन प्राचीनकालेऽस्मद्देशे विद्युद्द्वारा यन्त्रयानादिसञ्चारो विश्वासमारोहति, अप्रासङ्गिकत्वादेषामत्र विशद व्याख्यानमक्षमम् ।

**यन्त्रलक्षणम्—**

जलवायुस्तम्भनेन समुत्पन्ना शक्तिर्मन्त्राख्याम्, दण्डचक्रदन्तकृतसरणिपरिभ्रामणेन समुत्पन्ना शक्ति. यन्त्रवाच्यताम्, मनुष्येषु पशुषु च या शक्ति. सा तन्त्राभिधां लभते । उक्तञ्च भरद्वाजकृतयन्त्रार्णवे—

**मन्त्रज्ञा ब्राह्मणाः पूर्वं जलवाय्वादिस्तम्भने ।**
**शक्तेरुत्पादनं चक्रुस्तन्मन्त्रमिति गद्यते ॥**
**दण्डैश्चक्रैश्च दन्तैश्च सरणिभ्रामकादिभिः ।**
**शक्तेस्तु वर्द्धकं यत्तच्चालकं यन्त्रमुच्यते ॥**
**मानवीपाशवीशक्तिकार्यं तन्त्रमिति स्मृतम् ॥**

वस्तुतस्तु येन दैवादिशक्तीनां यमन क्रियते, तद् यन्त्रमुच्यते । इदं लक्षणं तन्त्रशास्त्र-ग्रन्थेषु यन्त्रस्य यत् स्वरूप दृश्यते, तत्रापि परिलक्ष्यते । यन्त्रस्य ये भेदा दृष्टिगोचरीभवन्ति, ते भागद्वये विभक्तुमर्हा.—

१. दण्डचक्रादिनिर्मितम् ।
२ ताम्रादिफलकेषु रेखया अङ्कितञ्च ।

पुराकाले अद्यतने च युगे इतिवृत्तिप्रेषकादीनि यानि यन्त्राणि दृष्टिगोचरीभवन्ति, तानि सर्वाणि दण्डचक्रादिनिर्मितानि, आगमशास्त्रेषु च यानि दृष्टिपथं समायान्ति, तानि ताम्रादिफलकेषु रेखयाऽङ्कितानि । महर्षिभरद्वाजकृतयन्त्रार्णवे बहूनां यन्त्राणा चर्चा श्रूयते । तद्यथा यन्त्रार्णवस्य विमानप्रकरणे ' रहस्यज्ञोऽधिकारी" (१।२) इति सूत्रे—

**मान्त्रिकस्तान्त्रिकस्तद्वत् कृतकश्चान्तरालकः ।**
**गुप्तो रहस्यमदृश्यञ्च परोक्षश्चापरोक्षकः ॥१॥**
**सङ्कोचो विस्तृतश्चैव विरूपकरणस्तथा ।**
**रूपान्तरसुरूपश्च ज्योतिर्भावस्तमोमयः ॥२॥**
**प्रलयो विमुखस्तारो महाशब्दविमोहनः ।**
**लङ्घनसार्पगमनश्चपलस्सर्वतोमुखः ॥३॥**
**परशब्दग्राहकश्च रूपाकर्षणस्तथा ।**
**क्रियारहस्यग्रहणे दिक्प्रदर्शनमेव च ॥४॥**
**स्तब्धकः कर्षणश्चेति रहस्यानि यथाक्रमम् ॥५॥**
**एतानि द्वात्रिंशद् रहस्यानि गुरोर्मुखात् ।**
**विज्ञाय विधिवत् सर्वं पश्चात् कार्यं समारभेत् ॥६॥**

श्लोकान्तर्गतरहस्यनामानि—१—मान्त्रिकरहस्यम्, २—तान्त्रिकरहस्यम्, ३—कृतकरहस्यम्, ४—अन्तरालरहस्यम्, ५—गूढरहस्यम्, ६—दृश्यरहस्यम्, ७—अदृश्यरहस्यम्, ८—परोक्षरहस्यम्, ९—अपरोक्षरहस्यम्, १०—सङ्कोचनरहस्यम्, ११—विस्तृतरहस्यम्, १२—विरूपकरणरहस्यम्, १३—रूपान्तररहस्यम्, १४—सुरूपरहस्यम्, १५—ज्योतिर्भावरहस्यम्, १६—तमोमयरहस्यम्, १७—प्रलयरहस्यम्, १८—विमुखरहस्यम्, १९—ताररहस्यम्, २०—महाशब्दविमोहनरहस्यम्, २१—लङ्घनरहस्यम्, २२—सार्पगमनरहस्यम्, २३—चापलरहस्यम्, २४—सर्वतोमुखरहस्यम्, २५—परशब्दग्राहकरहस्यम्, २६—रूपाकर्षणरहस्यम्, २७—क्रियाग्रहणरहस्यम्, २८—दिक्प्रदर्शनरहस्यम्, २९—आकाशाकाररहस्यम्, ३०—जलदरूपरहस्यम्, ३१—स्तब्धकरहस्यम्, ३२—कर्षणरहस्यम् ।

उपर्युक्ताना रहस्यानामुपयोगार्थं तत्तद्रहस्याख्ययन्त्राण्यपि निर्मीयन्ते स्म । तद्यथा दिक्प्रदर्शनरहस्यविद्याया. समुपयोगार्थं दिक्प्रदर्शनयन्त्रमासीत् । दिक्प्रदर्शनरहस्यविद्यानिपुणो विमानसञ्चालक एतदाख्ययन्त्रेण दिग्ज्ञान लभते स्म । तदित्थं द्वात्रिंशद्रहस्यविद्याप्रयोगस्य साफल्यार्थं तत्तन्नामकानि यन्त्राण्यासन् । एवं परशब्दग्राहकविद्यानिपुणो वैमानिको विमानस्थशब्द ग्राहकयन्त्रद्वारा सौदामिनीकलोक्तप्रकारेण व्योम्न. प्रथममण्डलात् प्रारभ्य सप्तपरिधिमण्डलपर्यन्तं परविमानस्य जनसम्भाषणादिसमस्तशब्दान् आकृष्य शृणोति स्म । सौदामिनीकलाग्रन्थे (विद्युत्कलाग्रन्थे) विमानस्थशब्दग्राहकयन्त्रद्वारा दूरध्वनिग्रहणस्य चर्चा श्रूयते । विद्युत्कलेति ग्रन्थनाम्ना ज्ञायते यत् प्राचीनपरशब्दग्राहकरहस्यनामकयन्त्रेण दूरस्थशब्दग्रहणकार्यमद्यतनदूरध्वनिग्राहकयन्त्रवद् विद्युच्छक्तिसाहाय्येनैव सम्पाद्यते स्म । किञ्च अद्यतनदूरवीक्षणयन्त्रवद् ( टेलीवीजन ) रूपाकर्षणनामकं यन्त्रमासीत् । विमानस्थरूपाकर्षणयन्त्रद्वारा परविमानस्थिते वस्तुरूपाकर्षणं क्रियते स्म । भरद्वाजकृतयन्त्रसर्वस्वस्य "तथोपयन्त्राणि" ( अ० ५ सू० १ ) इति सूत्रस्य यतिबोधानन्दकृतवृत्तौ बहूना यन्त्राणा चर्चा कृता । तद्यथा—

विमानाङ्गोपयन्त्राणि द्वात्रिंशदिति ज्ञास्यतः ।
यथोक्तं यन्त्रसर्वस्वे भरद्वाजेन धीमता ॥५७॥
तथैवात्र प्रवक्ष्यामि सङ्ग्रहेण यथामति ।
यन्त्रे विश्वक्रियादर्शश्शक्त्याकर्षणयन्त्रकः ॥५८॥
परिवेषक्रियायन्त्रं प्रोक्तं पश्चात् तथैव हि ।
अङ्गोपसंहारकाख्ययन्त्रं सर्वाङ्गसुन्दरम् ॥५९॥
पश्चावविस्तृतक्रियाख्यं ततो वैरूप्यदर्पणम् ।
पद्मचक्रमुखं नाम यन्त्रं पश्चाद् विचित्रकम् ॥६०॥
कुट्टिणीशक्तियन्त्रञ्च तथापुष्पणिकं स्मृतम् ।
तथैव पिञ्जुलादर्शयन्त्रं पश्चान्मनोहरम् ॥६१॥
नालपञ्चकयन्त्रञ्च गुहागर्भाभिधं तथा ।
तमोयन्त्रं पञ्चवातस्कन्धनालमतः परम् ॥६२॥
पश्चाद् वातस्कन्धनालकीलकं यन्त्रमीरितम् ॥६३॥
ततो विद्युद्यन्त्रमतश्शब्दकेन्द्रमुखाभिधम् ।
ततो विद्युद्द्वादशकयन्त्रं प्रोक्तं ततः परम् ॥६४॥
प्राणकुण्डलिनीनामयन्त्रं शक्त्युद्गमं तथा ।
वक्रप्रसारणं तद्वच्छक्तिपञ्जरकीलकम् ॥६५॥
शिर कीलकयन्त्रञ्च शब्दाकर्षणयन्त्रक. ।
पटप्रसारणं नाम यन्त्रं तद्वद् दिशाम्पति ॥६६॥
पट्टिकाभ्रकयन्त्रञ्च सूर्यशक्त्यापकर्षणम् ।
तथापस्मारधूमप्रसारणाख्यमत परम् ॥६७॥
तथा स्तम्भनयन्त्रं चोक्तं पश्चात् तथैव हि ।
वैश्वानरयन्त्रमिति द्वात्रिंशति क्रमात् ॥६८॥

श्लोकोक्तयन्त्राणा नामानि—

१—विश्वक्रियादर्शयन्त्रम्, २—शक्त्याकर्षणयन्त्रम्, ३—परिवेषक्रियायन्त्रम्, ४—अङ्गोपसंहारयन्त्रम्, ५—सर्वाङ्गसुन्दरयन्त्रम्, ६—विस्तृतक्रियानामकयन्त्रम्, ७—वैरूप्यदर्पणयन्त्रम्, ८—पद्मचक्रमुखयन्त्रम्, ९—विचित्रकयन्त्रम्, १०—कुट्टिणीशक्तियन्त्रम्, ११—पुष्पणिकयन्त्रम्, १२—पिञ्जुलादर्शयन्त्रम्, १३—मनोहरयन्त्रम्, १४—नालपञ्चकयन्त्रम्, १५—गुहागर्भनामकयन्त्रम्, १६—तमोयन्त्रम्, १७—पञ्चवातस्कन्धनालयन्त्रम्, १८—पञ्चवातस्कन्धनालकीलयन्त्रम्, १९—विद्युद्यन्त्रम्, २०—शब्दकेन्द्रमुखनामकयन्त्रम्, २१—

विद्युद्द्वादशकयन्त्रम्, २२—प्राणकुण्डलिनीयन्त्रम्, २३—शक्त्युद्‌गमयन्त्रम्, २४—वक्रप्रसारण-यन्त्रम्, २५—शक्तिपञ्जरकीलकयन्त्रम्, २६—शिर कीलकयन्त्रम्, २७—शब्दाकर्षणयन्त्रम्, २८—पटप्रसारणयन्त्रम्, २९—दिशाम्पतियन्त्रम्, ३०—पट्टिकाभ्रकयन्त्रम्, ३१—सूर्य-शक्त्यपकर्षणयन्त्रम्, ३२—अपस्मारधूमप्रसारणयन्त्रम्, ३३—स्तम्भनयन्त्रम्, ३४—वैश्वानर-नालयन्त्रम् ॥

अत्र अपस्मारधूमप्रसारणवैश्वानरनालयन्त्रयो क्रमश तमोयन्त्रपञ्चनालस्कन्ध-यन्त्रयोरन्तर्भावो बोद्धव्य । तेन "वैश्वानरयन्त्रमिति द्वात्रिंशति क्रमात्" इत्यत्र यन्त्राणा प्रोक्ता द्वात्रिंशति. संख्या सङ्गच्छते ।

इत्थमस्माक देशो यान्त्रिकक्रियाविषयेऽग्रेसर आसीत् । कालेन एतत्सर्वं ज्ञानं विलुप्तम् । यत. प्रभृति एतद्देशप्रसूता द्विजा ज्ञानमय तपो विहाय कुटुम्बपोषणाय धनार्जनानुरक्ता., तत. प्रभृत्येव मान्त्रिक तान्त्रिकम् अथ यान्त्रिकं सर्वमपि ज्ञानमदर्शनमभजत् । एतेषा यन्त्राणामन्वेषणार्थम्, अथ च निर्माणार्थं प्रजानिर्वाचितप्रशासनस्य, अथ च धनिना श्रेष्ठिना सस्कृतविदुषाञ्च साहाय्यमपेक्षते ।



# संस्कृतवाङ्मये मानमानम्

गायत्रीप्रसादपाण्डेय 'गवेषक' सं० सं० वि० वि०

अहो वाचामगोचरो महिमा सस्कृतवाङ्मयोद्यानस्य, यत्रानेकविधमानिनीमानवर्णना-नैपुणी सुमनसो मधुरमधुरापरम्परैव सुमनसां मनासि बलादाचिकीर्षति । यत्र च रुचिररुचिरा षड्पदालीव निर्भरमकरन्दपिपासवो रसिका. कामं श्रद्दधते । भूयासो वश्यवचसो महाकवयो मनसा मानस्य महिमानमाकलयन्तो बहु पर्यरीरचन् मानविषये । अत्र निबद्ध्यमाने प्रस्तावे मानपदेन मानिनीनां विचित्र' प्रेमाभिनयोऽस्ति प्रतिपिपादयिषित', स च मानः प्रणयेर्ष्यादि-सहकारिसमुत्थो द्विविध इति पुरो विवक्ष्यते अत्रादाविदमत्र ध्येय यदसौ मान. कथमुत्पद्यते, कथमाविर्भाव्यते, का परम्परा, कश्च मानहेतु , का च मानभूरित्येवमादि । मानमस्ति नूनमति विलक्षणं वस्तु, यन्न सीमाङ्कितुमियत्तया परिच्छेत्तुञ्च शक्यते केनापि । अदौ हि नानाविधासु परिस्थितिषु मानिनीना हृदयसरोवरसमुद्भूत मानपद्मं स्वीयकमनीयामोदप्रसरेण सचेतसा चेतो मिलिन्दममन्दमाह्वयति । मानधारकत्वादेव स्त्रियो मानिनीत्याख्या बहोरनेहस. समा-लिलिङ्गु । परन्तु पुंसा मनसि असौ मानो नोदेतीत्यत्र न मनाग् मे प्रत्यय । एष हि सार्व-जनीनानुमतो विषय., यदिह लोके प्रेमा भवत्येवात्यन्त विलक्षणो विचक्षणमात्रैकविज्ञेयोऽत्यन्त वक्रिम. । जीवन नामानन्दनिष्यन्दिन. प्रेम्णो रसमाधुरीनिचयस्य नवं नवं परिपाकमाकाङ्क्ष-दपि नैजानिर्वचनीयमहिम्ना ऐकविध्येऽपि वैविध्यमापादयद. कस्याक्षणो परमस्तीति न कश्चिद् विपश्चिदविपश्चित् सामान्यो वा विप्रतिपद्यते ।

प्रणयिनि सन्निहिते मानमभीषुभिर्विधीयमानो मान' प्रेम्णोऽभिनूलतामाढौकयितुं प्रयतते । असौ क्रमस्त चिरसमीहितं प्रेमाण समेधयितुमेवानुष्ठीयते प्रायशः । यच्च प्रणयमान-निदर्शने निदर्शयिष्याम । मानमन्तरा प्रेमपूर्णं परिपोषं नाश्नुते । अत एव प्रियतमसदनोन्मुखी सखी तत्सहचरी काचिद् विहितपतिगृहनिवासा योषा मानं शिक्षयति

अयि ? प्रथमत एव पतिपरायणे मुग्धे ? मौग्ध्यं नानुष्ठेयं त्वया प्रेम्णोऽतिरमणीये पथि । कदाचिन्मानमवलम्बेथा., प्रणतिपरेऽपि दयिते धैर्यं धारयेथा., आर्जवं च वर्जयेः । सखी च यदैवेवमबुबोधयिषया व्याजहार्षीत्, तदैव भयावनम्रवदना सा व्याहृतवती-आ., शनकैर्ब्रूहि, नो चेदन्तःसस्थितो मे दयितो निशम्यैतत्तवोपदेशं मनसि किमाकलयिष्यति[1] इत्यादि ।

---

१. मुग्धे ? मुग्धतयैव नेतुमखिल काल किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुता दूरे कुरु प्रेयसि ।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना ।
नीचैः शंश हृदिस्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ।।

( अमरुशतकम् ) श्लो० सं० ७०

अत्रामरुककविवनिता दयितरि भृशमनुरज्यत इति ध्वनि । भाषाकविहरिणा विहारिणा अन्ववादि पद्यमदो महाकवेरमरुकस्य—

**सखी सिखावत मानविधि सैननि बरजत बाल ।**
**हरुये कहु मो हिय सदा बसत बिहारी लाल ॥**[1]

निश्चप्रचमेवात्र विहारिणो मानिनी अमरुककविललनामुपालम्भते यदुरसा क्रियमाणे वाग् व्यापारे कथ त्वमात्मान गोपायेः, अतश्च सा विदग्धा नेत्राभ्यामेवान्तर भावमाविश्चिकीर्षति । उर्दूभाषाकविना केनचिदसौ मान. 'शिकवा' पदेनाभिलप्यमानोऽतिरमणीय प्रतिपादित प्रणयपुण्डरीकविकासकत्वेन । सत्यमेवाय मानो विलक्षणो निकषो यदध्यारूढो नायिकानायकौ वाढमनुभवतोऽतिकमनीयमानन्दसन्दोहम् ।

ऋतूना राजनि वसन्ते समुपारूढे प्रतिग्राम प्रतिस्त्रिय सबहुमानमासीद् मानचर्चा । यौवतकुलमेव मानं धारयदासीत्, परन्तु वसन्तकेसरिणि प्राप्ते पलायितो मानहरिण कामिनीनाम्

"पुरि पुरि विनिवृत्ता मानिनी मानचर्चा" अर्थात् ग्राम ग्रामणीग्रामादपससार मानकृष्णसारो मानभङ्गश्च प्रससार सर्वत. कामिनीकुले । क्व च पद निदध्यादप्यसौ मान बासन्तिकरामणीयके परिसरे परित· प्रेमप्रसूनपरिमलामोदपरिपूरिते कामिजनहृदये कुहावकाशो लभता मान । पुष्पधन्वनोऽविरलशरप्रहाराकुलीक्रियमाणे दम्पतिहृदये क्षणमपि स्थातु न शेके मानभावहरिणशावक ।

पुष्कल कश्चिन्नूनमेव प्रणयमानमहिमा, यत्र च कादम्बर्याद्यनेकग्रन्थरत्नप्रणयिनो महाकविबाणभट्टप्रमुखाः शिरो व्यधूनयन् । परिगृहीतमाना बहुश प्रार्थ्यमानामप्यप्रसीदगाना मानिनी स्वकीयामपगतमाना विदधातु बहु सश्राम, परश्चानपगते तदीये मन्यौ सस्वीयानवद्यसद्योऽवनदपद्येन तन्मानमपनिनीषु तुष्टाव[2] अयि मानप्रिये ? क्षणदा क्षण क्षण क्षीयते, अनन्ताकाशचारिविधुमण्डलमस्ताचलमालम्बते, निद्रापरवश इव दीपो निर्वाणता जिगमिषति । अर्थाद् निशाशशिनौ युगपदेव क्षिणुत —अचिरादेवाजिगमिषति तिग्मगु —ऐन्द्रयाम्, अपुना तव चरणनिपतितोऽप्यह न त्वया मृष्ये ' इत्यादि । अमुष्मिन्नेवावसरे समागतो मयूरभट्टस्तुरीयचरण निर्ममे, निर्ममममिशप्तश्च विलाशग्रस्त 'सूर्यशतकेन' भानुमप्रीणयत्, नीरुक्त्वञ्च समवाप । यदि नाम सा मानं नाकरिष्यत्, नानुनयिष्यत्ता बाणभट्टो न चैव पद्यपूरणेनाभ्यशप्स्यत मयूरभट्ट । अतोऽत्रापि सूर्यशतकाख्यकाव्यप्रणयने परम्परया मानस्य प्रयोजकत्वं को नाम नाङ्गी कर्तुमीष्टे ।

---

१ बिहारी सतसई ।

२.　गतप्राया रात्रि कृशतनुशशी शीर्यत इव
　प्रदीपोऽयं निद्रावशमुपगतो घूर्णित इव ।
　प्रणामान्तो मानस्त्यजसि न तथापि क्रुतमहो
　"कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥
　　　　कादम्बर्या. प्राक्कथनादुद्धृतम् ।

अधुना साहित्यसूरिभिराविर्भावितं मानस्य स्वरूपं निदर्शयितुमुपक्रमे। साहित्यदर्पणकारो विश्वनाथपञ्चाननो मानं पर्यभाषत्—"मान. कोप·[1] · · "

अर्थात् कोपस्यैवापर नाम मान इति, स च द्वेधा भवति—( १ ) आद्य प्रणयसमुद्भव., अपरश्चेर्ष्यासमुत्थ। तत्र प्रणयप्रसूतोऽसौ सप्रयुक्तायां स्थितौ जायते। यदा अकारणमेवोच्छ्वलितानन्दतरङ्गौ जायापती परमानन्दसुधासिन्धावात्मानमुन्मिमङ्क्षन्तौ प्रणयाभिनयमनुतिष्ठतः, स चाभिनयो मिथो जायमान प्रणयमानकोटावाटीकते पदम्। अमन्दानन्दोदन्वानुच्छलति उभयोर्मानसे, बलीयसि परिष्वजाभिलाषे निगूढेऽपि हृदि, कानिचित् क्षणानि यावदेकतरो मानमाधत्ते, अपरश्चानुनिनीषते अन्योन्यम्। यूनोरेकतरे च हावभावादिविलासे प्रकाशिते युगपदुभयोर्धैर्यसेतु· सैकत पुलिनमिव विनायाश पित्सति। पुनरपि बोभवीति मिथ आसज्जनम्। इत्थञ्च प्रणयमान कारणान्तरानपेक्षो निक्षिपति प्रणयपक्षम्।

आचार्यो धनञ्जयो[2] मानस्वरूप व्याचष्ट दशरूपके—तदीय हार्दमेतद् यद् गाढानुरक्तयोर्नायिकानायकयो पृथग् भवनमेव हि विप्रयोग। स च मानप्रवासभेदाभ्या द्विधा। मानोऽपि प्रणयेर्ष्याभेदेन द्वैविध्यं भजते। असौ प्रणयमानो नायिकानायकोभयनिष्ठो भवति।

आचार्यो रुद्रट. काव्यालङ्कारे विप्रलम्भशृङ्गारं चतुर्धा व्यभजत्, (१) अनुराग (२) मान (३) प्रवास (४) करुणभेदात्। असौ नाङ्गीचक्रे प्रणयमानम्। केवलमीर्ष्यासमुत्थमेव[3] मानमूरीचकार। तदीय विवक्षितमेतद् यत् यदैव नायिकानायकस्येतररमणीप्रसक्ति विन्दमाना रुषा नायक विप्रिय व्यवजिहीर्षति, तदास्या व्यवहार एव मानपदव्यपदेश्यो भवति। रुद्रटो मानं मानिनीमात्रनिष्ठमामनुते, न च यातुचिन्नायकगतम्। यतो हि परस्त्रीसम्पर्कजन्या ईर्ष्या स्त्रीमात्रवृत्ति। न च कदाचिदपि परपुरुषसक्ता योषा पुरुष ईर्ष्यते। किन्तु क्रुधाऽभिभूयते। इदमत्रावश्यमाकूतम्। एतद्धि विवेचनमतीवकुलीनयोर्नायकनायिकयोरेव सङ्घटते, इतरत्र तु क्षोदक्षमोऽसौ पक्षः। यदा च नायको निष्क्रियो व्यक्तित्वविरहित. षण्ढो वा भवेत् नायिका च मनोज्ञरूपगर्विता दर्पोद्धता यौवनालिङ्गिता सत्यसतीत्वमनुतिष्ठा सति, कुरुते च परनायकसमाश्रयणम् तदा नायक स्वमभिक्रुध्यति ईर्ष्यते च परपुरुषाय।

---

१. मान. कोप. स द्वेधा प्रणयेर्ष्यासमुद्भव ॥

( सा० द०, तृ० परि० ) सा० द० ३।१९८

२. विप्रयोगस्तु विश्लेषो रूढं विस्रम्भयोर्भिदा।
मानप्रवासभेदेन मानोऽपि प्रणयेर्ष्ययो.।
तत्र प्रणयमानः स्यात् कोपावसितयोर्द्वयो ॥

( द० रू०, ४।५७–५८ )

३ मान स नायके य विकारमायाति नायिका सेर्ष्या।
उद्दिश्य नायिकान्तरसम्बन्धसमुद्भव दोषम् ॥

( काव्यालङ्कार, अ० १४ का २२–२३ )

ईर्ष्यामानविवेचनप्रस्तावे दर्पणकारोऽपि[1] स्त्रीनिष्ठमेव तावूरीकुरुते । क्षेत्रान्तरमवतरन्त नायकं वीक्ष्य, वयस्यासाहचर्यादिना वा निवेद्यमान निशम्य अन्तःस्त्रियमुदीयमानो नाम ईर्ष्यामानत्वमाश्लिष्यति ।

धनञ्जयस्याप्यत्रैकमत्य[2] सार्वभौमत्वमस्याभिनक्ति । दशरूपके ईर्ष्यामानस्य प्रयोजकं कारणत्रिकमभिप्रेतं, यच्च सवदते दर्पणेनापि[3] । मानलक्षणं भावप्रकाशीय[4] विद्वद्भ्यो बहु रोरुच्यते । असौ हि प्रेमानुबन्धिनं ललितलास्यविलासमेव मानमाचष्ट, यस्य च स्वरूपं प्रणयमानविवेचनावसरे न्यरूपि प्रागेव । प्रणयसमुत्थ एव मानो मान, ईर्ष्यासमुद्भूतस्तु दुर्मेदतिमिरपटलमिवान्तरा यूनोस्तिष्ठति न च स प्रणयकोपपरिपोषक ।

अत्रेदमनवद्य पद्यमिव हृद्यम्—

न सर्वथा विप्रलम्भशृङ्गार एवान्तर्भवति मान । यदा हि नायिकानायकयोरेकतरानुनयविनयपर्यन्तावस्थायी मानस्तदा तस्य विप्रलम्भशृङ्गारान्तर्मुक्तत्वम्, यदा चानुनयविनयादिकं सोढुं न भवत्यन्त मान, न तदा तदन्तर्गतत्वमपितु तदा सभोगशृङ्गारस्य सञ्चारीभावत्वमेव परिकल्पनीयम्, यथा—[5]

"प्रियतमे गाढपरिरम्भसमुत्सुके समीपमागते चिरान्मान विदधत्या मानिन्या मानः पीडनभयादुरसो निर्ययौ ।"[5]

अत्र न कथञ्चिन्मानमपनुनोद नायको नायिकाया. । चिराय मानमाधृतवती मानिनी भुजङ्गः परिसस्वजे, तेन तदीयो मान क्षणमपि न तस्थिवान्, द्रुत पलाय्य मानिनी विगतमानामकरोत् । अथ च "भ्रूभङ्गे रचितेऽपि मानस्य तस्मिन् जने" इत्यादिपद्येषु मान. सभोगस्य सञ्चारीभावत्वे

---

१. पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते ।
ईर्ष्यामानो भवेत् स्त्रीणा तत्र त्वनुमितिस्त्रिधा ॥
( सा० द०, ३।१९९ )

२. स्त्रीणामीर्ष्याकृतो मान कोपेऽन्यासङ्गिनि प्रिये ।
श्रुते वानुमिते दृष्टे श्रुतिस्तत्र सखीमुखात् ॥
( द० रू०, ४५९–६० )

३. पत्युरन्यप्रिया सगे दृष्टेऽथानुमिते श्रुते ।
( सा० द० तृ० प० १९९ )

४. यत्तु प्रेमानुबन्धेन स्वातन्त्र्याद्धृदयङ्गमम् ।
बध्नातिभावकौटिल्य सोऽयं मान इतीर्यते ॥
भावप्रकाशनम् ४।९

५. गाढालिङ्गनरभसोद्यते दयिते लघुसमुपसर्पति ।
मनस्विन्याः मानः पीडनभीत इव हृदयात् ॥

परिगृह्यते समालोचकैः । एकमेव दर्पणकृदुद्धृत पद्यमपरमुदाहरामि । "अर्थात्[१]—हृदयेन सुरताभिलाषुकावपि नायिकानायिकौ नैजं गरिमाण रिरक्षयिषू आस्य विपास्य यौगपद्येन तल्पे शयानौ कटाक्षविशेषमिषेण यदैव मिथ आलुलोचतु तदैव व्यपागमत् उभयोर्मान' सरभसञ्चाजयतरपरस्पर समासञ्जनम्" इत्यादिस्थलेषु विनैवानुनयमपससार मान., अतश्चात्रापि सम्भोगसञ्चारित्वमेतस्याभ्युपगन्तव्यम् ।

मानो यं समुपलालभ्यते ललनास्वेवेति प्रागवोचम् किन्तु नृषु न बोभवीति नास्माक हृदयम् । पुसामपि मानो मनोमुग्धकरो भवतीति नात्र चित्रम् । एक [२]भवभूतिपद्यमेवोद्धराम —

"लताभवने निषण्णो राम ललनाकुलतिलकललामा सीता प्रतीक्षणपरायणो बभूव, किन्तु सा गोदावर्या सैकते पुलिने कलहसैरनुक्रीडमाना चिराय न रामभाजगाम । व्यपगते कतिचित् क्षणे निवृत्ता सीता राम निर्विषण्ण निर्वर्ण्य कुन्दकुड्मलनिभैरङ्गुलिकोरकै परिकलित-प्रणामाञ्जलि: नातिविलसितेन राममानपमनिन्ये ।"

नायकगतं मानमुदाजहार दर्पणकार: । चिरायन्ती प्रेयसीमासमीक्ष्य वासभवने प्रतीक्षाच्छन्नो नायको मानमादधार । समुपसर्पन्तीञ्च तामवगम्य निद्राव्याजनिमीलिताक्षो बभूव नायक. । स्वकीय-चुम्बनसञ्जातपुलक प्रणयिनमनूचिवान्—"आर्य[३] अलीकमीलितलोललोचन ? स्तोकमपसर, अहमपि शिशयिषामि, अन्येद्यु न त्वा कोपायिष्यामि विलम्बात् ।" अद्यतनो विलम्बो मर्षणीय., अनुमन्तव्या चाह सहशयनाय । इत्यादिर्निरवधिर्मानसन्दर्भो नृषु समासाद्यते ।

युगपन्मानताम्यतोर्नायिकानायकयोरपि वर्णनानैपुणी निपुण निरीक्षणीया उभावपि[४] प्रेयसीप्रणयिनौ कृतमानपरिग्रहौ निस्पन्द निरुद्धनि.श्वासौ शयाते, कविरत्रोत्प्रेक्षते यदनयोर्मल्लयो कतरो ज्यायान् प्रशस्यतरश्च, यस्य मानश्चिर स्थास्यति ।

---

१. एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेऽप्यनुनये सरक्षतो गौरवम् ।
दम्पत्यो शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नौ मानकलि. सहासरभसव्यासक्तकण्ठग्रहः ।।
( सा० द० ) ।। ३।१९८ उदाहरणम्

२. अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षण ·
सा हंसै कृतकौतुका चिरमभूद् गोदावरीसैकते ।।
आयान्त्या परिदुर्मनायितमिव त्वा वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलि. ।।
( भवभूतिः, उत्तररामचरिते ) ।।

३. अलीकप्रसुप्तमिथ्या निमीलिताक्ष, देहि सुभग ममावकाशम् ।
गण्डचुम्बनपुलकिताङ्ग न पुनश्चिरयिष्यामि ।। सा० द० ३।१९८ उदाहरणम्

४. प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानिनो ।
निश्चलनिरुद्धनि श्वासदत्तकर्णयोः को मल्ल ।।
( सा० द० तृ० प० ) ।। १९८ उदाहरणम्

ईर्ष्यासमुत्थो मानो नायके पारदारिके नायिकया विधीयत इति व्यलिखमादावेव। अधुना तद्विभागान् सोदाहरणान् निर्दिधारयिषाम —

प्रणयिनि क्षेत्रान्तरचारित्वे श्रुतेऽनुमिते दृष्टे वा ईर्ष्यामानो मानिनीषु पद धत्ते। अत्रैकैकमुदाहरिष्याम᳘। पत्युर्विगीताचार सख्युपदेशाद् दूत्युपदेशाद्वा विजानते वनिता᳘। तदनु निजावमाननात् धूतमाना नायिका नायक श्लाघते प्रीणयते च चारुवचनै.—

"अयि[1] सुभ्रु ? तावकीन प्रत्यग्रहैयङ्गवीनपेशलं हृदय केनास्मासु कठिनीकृतम्। तव-प्रणयिबुभूषु᳘ कश्चित्त्वामु धैव कोपायितवान् अये ? क्षण-विमृश। किं मुग्धालापा. सख्य. तव मित्रं च ममामृतवदना. मित्रम्मन्यास्तव हितैषिण." अर्थात् केनचिन्मुधा कोपायिता त्व शत्रुं मित्रंच नावगच्छसि यथार्थत.।

नायकस्य नायिकान्तरानुवर्तित्व त्रिभिर्हेतुभिरनुमिमीते नायिका। ते च हेतव. (१) उत्स्वप्नायित (२) भोगाङ्क (३) [2]गोत्रस्खलनरूपा इत्यत्र न च तनीयसी विचिकित्सा सङ्ख्यावताम्। तत्राद्यमुत्स्वप्नायित तदा जायते यदा नायको नायिकान्तर स्वप्ने वीक्ष्य किमपि तया प्रेमालिलपिषति, नेदीयसि निषण्णा नायिका च निशम्य, तदीयान्यासक्तिमनुमनुतेऽनुमान-मानेन। यथा—

"अयि [3]राधिके ?," जलकेलिकुर्वाणेन मया स्मरपरवशेन त्वदीया सहचरी समाश्लिष्टा, इति त्व केनासि विज्ञापिता, कथ रोषमादधासि" इत्याकारामुत्स्वप्नायिता वाचमाकर्ण्य रुक्मिणी कृष्णाश्लेष सव्याज शिथिलीचकार"।" रुक्मिणीकृष्णौ सहैव शयानौ अन्योन्यासक्तौ निद्रा लेभाते, मध्ये च स्वप्नपरवश राधिका हृदये दधान कृष्णस्तामालपत्, तच्छ्रुत्वा रुक्मिणी कृष्णस्य राधिकानुरक्तिमनुमीय ताम्यती तदीयमाश्लेषमधरोचकार।

द्वितीयोऽनुमानहेतुर्भोगाङ्काख्यो, यदा परक्षेत्रे कृताभिरमणो रमणो रामामुपैति तदा तदीय सुरतं तद् वस्त्रासंयमितकेशैर्वसनावसक्तालक्तकरागै कज्जलाकलितकपोलयुगलैश्चानुमीयमाना मानमाधत्ते स एव भोगाङ्कप्रयुक्तो व्यपदिश्यते मान.। यथा—नायिका नायकं ब्रूते—

---

१. सुभ्रु ! त्वं नवनीतकल्पहृदया केनापि दुर्मन्त्रिणा
मिथ्यैव प्रियकारिणा मधुमुखेनास्मासु चण्डीकृता।
किन्त्वेतद्विमृश क्षण प्रणयिनामेणाक्षि कस्ते हित
किं धात्रीतनया वयं किमु सखी किं वा किमस्मत्सुहृत्॥
(दशरूपक ३१२)॥

२. तत्र त्वनुमितिस्त्रिधा। उत्स्वप्नायितभोगाङ्कगोत्रस्खलनसंभवा॥
(सा० द० तृ० प० ७००)

३ निर्मग्नेन मयाम्भसि स्मरभरादालीसमालिङ्गिता—
केनालीकमिद तवाद्य कथितं राधे ? मुधा ताम्यसि॥
इत्युत्स्वप्नपरम्परासु शयने श्रुत्वा वचः शार्ङ्गिण᳘,
सव्याजं शिथिलीकृत कमलया कण्ठग्रह᳘ पातु व॥
(द० श० च० प्र० ३१३)

"अयि [1]लम्पटलक्षणगोपनपटो ? किमिति प्रत्यग्रकराग्रक्षतमाजुगोपायिषसि, दशनशाति-तमधरोष्ठ पाणिपुटेन कथमाचिच्छादायिषसि—विधत्स्वेतान्निखिलमपि, पुनरपरस्त्रीसङ्गसंसक्त-ममल परिमल कथमपि अन्यथापयितु न प्रभुर्भविष्यसि ।

तृतीयो हेतुर्गोत्रस्खलनरूप. । यदा प्रणयालापासक्ताभ्या नायिकानायकाभ्या नायको जाग्रद्दशायामेव नायिकान्तरनामगृह्णाति तदा तदीयं हार्दं नायकान्तरगतं मन्वाना मानिनी मानमाविष्कुरुते लभते च" गोत्रस्खलनसम्भवामाख्याम् । यथा—

नायिका काचिद् भर्तरि सपत्नीनामग्राहिणि झटित्युदश्रुमुखी समभूत्, तत्सहचरी च कैतवेन तदीयम्मन्युमपनिनीषुर्नायकं व्याहरति—

"अयि[2] ! परिहासपेशल ! तावकीनं कैतवमजानन्ती त्वया परिहसिताऽपि रुरोदयिषति, परिहार्योऽय परिहासः त्वया—" इत्यादि ।

दृष्टो मानस्तृतीय । यथा–प्रणयकुपितां[3] पार्वती चिराद् मानयन् गङ्गाधरो न यावत्सा-फल्यमवाप तावत् तदीयचरणयोः नैज शिरः समभ्यधात्, अवनम्रे च शिरशि, तत्र जटाटवी निवासां द्युनदी निरीक्ष्य मानमादधार नम्ना मन्दाकिनीर्ष्यया ।

अहो रचनाचातुरीयं तुरीयस्य कस्यचिद् वश्यवचसो महाकवेरत्र्त्या निभालनीया-यदत्र पूर्वार्द्धश्लोके प्रणयमान उत्तरार्द्धे च ईर्ष्यामानोऽनल्पशिल्पनैपुणीमाख्यापयति कवे. । उपर्यु-दीरितेषु श्रुतानुमितदृष्टेषु पूर्वपूर्वो दुर्बल , उत्तरोत्तर सबलश्चास्ति मान· ।

काव्यालङ्कारकृदाचार्यो रुद्रट केवलमीर्ष्यामानमेवाङ्गीचकारेति पुरो विमृष्टमेव । अधुना तदीयमानविश्लेषणं व्याचिकीर्ष्यते । नायिकान्तरसमुत्थो दोषो विविधो वोभोति नायकस्य । निधुवनं परत्र ज्यायान्[4] दोष·, प्रणयालापश्च ततो लघीयान्, चाक्षुष वीक्षणञ्च ततोऽपि कनीयः । यदि नाम नायिकान्तरेणैव विधीयमाना स्युरिमे दोषास्तदा ततोऽपि क्षोदीयास उच्यन्ते ।

---

१. नवनखपदमङ्ग गोपयस्यशुकेन,
स्थगयसि पुनरधरोष्ठ पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्,
नवपरिमलगन्ध. केन शक्यो वरीतुम् ॥
( दशरू० च० प्र० ३१४ )

२. केलीगोत्रस्खलने विकुप्यति कैतवमजानन्ती ।
दुष्ट ! पश्य परिहासं जाया सत्यमिव प्ररुदिता ॥
( हाल-दशरू० च० प्र० का० ३१५ ) ॥

३. प्रणयकुपितां दृष्ट्वा देवी ससम्भ्रमविस्मित-
स्त्रिभुवनगुरुमीत्या सद्यः प्रणामपरोऽभवत् ।
नमितशिरसो गङ्गालोके तया चरणाहता-
ववतु भवतस्त्र्यक्षस्यैतद्विलक्षमवस्थितम् ॥ ( दशरू० च० प्र० ३१६ ॥

४. गमनं ज्यायान् दोष प्रतियोषिति मध्यमस्तथालापः ।
अवलोकनं कनीयान् मध्यो जायान् स्वयं दृष्ट. ॥ काव्याल० अ० १४ का० १६ ॥

पञ्चभिर्हेतुभिर्नायकस्य स्वैराचरण नायिकया ज्ञायमानमुदलिखद् रुद्रटाचार्य.[1]–(१) आर्द्रनखक्षत (२) नायकाङ्गानि (३) नायकधारित कुसुम्भमाञ्जिष्ठ वास (४) गोत्रस्खलन (५) सखीवचनश्च इति । एतदेवान्ववादि कार्त्स्न्येन दर्पणकृदादिभि । एभिर्हेतुभिर्विज्ञायमानो मानो देशकालपात्रादिभेदेन असाध्य सुखसाध्यो[2] दु खसाध्यश्च जायते । ज्यायासो देशपात्र-कालादयोऽपि परिगणिता. रुद्रटाचार्यै.

"जाज्वल्यमानदीपप्रभाविभासित[3], मनोज्ञसुमन. केशरसुवासितं वासगृहम्, शारदी-ज्योत्स्ना, रम्य' सौधोत्तमाङ्गम्, हृदयावर्जक ललितमारामनिकुञ्जम्, ज्यायान् देश. सुरताय । सुरतोपयुक्ता मन्मथोन्मादिनी मधुयामिनी, वेला रमणीया । पात्रश्चातिकुलीननृपसचिवादि-विदग्धौ नायिकानायकौ" । एवमेवोच्चावचभावा सहृदयै. स्वयमूह्या. । कोषस्य साध्या-साध्यविमर्शो देशकालपात्रसापेक्ष । अनुकूलाया परिस्थितौ देशकालपात्रादीनामुत्तमकल्पे अनुकूलनायके कुलीनया सम जाते प्रवञ्चने तज्जन्यो मानो भवत्यसाध्यः । एवमेवातिविदग्ध-विधीयमानाचरणजनितो मानः कृच्छ्रसाध्यो भवति । सुखसाध्यो भवति मुग्धानायिकाना मानः शठै. ।

मानिन्याः मान परिजिहीर्षो. नायकस्य विविधाश्चेष्टा. सहृदयैराविर्भाविता. । नायिकया नायकापराधे प्रत्यक्षं निरीक्षते परिहार शून्यं प्रभूयते, एतादृश्या स्थितौ स्वीयापराधगोपनमविद्याविलसितमेव । एतद्विलक्षणाया स्थितौ तु नायिकाया. मान. परिहार्य एव । नायकस्यास्तव्यस्तवासोभिः तत्सुरतमुपकल्प्यमाना मानिनो एव मानयितव्या 'अयि मुग्धे ?[4] स्थानादन्यस्मादागतमेतद् वास' अतश्च व्यत्यस्तमाहोस्वित् तावके पूर्वमुप्त एवासयमितमेतत् तदेव, नान्यद् वास, त्वयैवासंयमितमेतद् वसनमामकमित्यादि" ।[5] गोत्रस्खलनेन च क्षेत्रान्तर-

---

१. वसनादिनायकस्य तदीयमार्द्रक्षतश्च तस्याङ्गम् ।
दोषस्य तथा गमक गोत्रस्खलन सखीवचनम् ॥ काव्या० अ० १४ का० १७ ॥

२. देशं कालं पात्रं प्रसङ्गमवगमकमेत्य सविशिष्टम् ।
जनयति कोपमसाध्य सुखसाध्य दु खसाध्य वा ॥ काव्या० अ० १४ का० १८ ॥

३. ज्वलदुत्फुल्लप्रदीप कुसुमोत्करधूपसुरभि वासगृहम् ।
सौधतलञ्च सचन्द्रिकमुद्यान सुरभि कुसुमकरम् ॥
इति देशा ज्यायासो मधुरजनी स्मरमहोदय. काल. ।
पात्रौ तु नायकौ तौ ज्यायो मध्यमाधमायुक्तौ ॥
काव्या० अ० १४ का० १९–२० ॥

४. शब्दान्तरनिष्पत्तिर्गोत्रस्खलने तु केलिर्वा ।
अभियोज्यायां मयि वा कुपितेयमनेन हेतुना तेन ।
वक्ति सखी ते मिथ्या किलेति तद्वचांसि परिहारः ।
( काव्या० १४–२३ ) ॥

५. परिहारो वसनादावन्यस्मादागमोन्यदिदमिति वा ।
परिहर्तुं कृतमस्मिन्न लक्ष्यते नायिकां रमयेत् ॥
तदनु त्वत्कृतमिति परिहार. पूर्वमेव वा सुरतम् ॥
( काव्या० अ० १४ का० २२–२३ ) ॥

चारित्वमनुमिमासो नायिकाया मानापनोदनं व्युत्पत्यन्तरेण नाम्नोऽर्थं प्रतिपाद्य निर्भ्रान्ता कान्ता कुरुते कान्त । एव कर्तुमशक्नुवन्नायक. "परिहासविजल्पनेनैव तन्नामग्रहणमकारि मयकेत्येवम्, सख्यादिनिर्दशिते च नायकापराधे, स्वावमानेन कृतमाना नायिका तत्सख्या मृषा भाषमाणत्वमुपपाद्य मुधा क्रोधकारित्व वा प्रतिपाद्य पुनरपि रमयेद् रामाम् । एभिरुपायैश्चेन्न सिद्ध्येत समीहितम् नायकस्य, तदा सामादिषड्डुपायानसौ[1] प्रयुञ्जीत । सामादिषु तृतीयो दण्ड. समाभासकरस्तत्तत्स्थानापन्न प्रसङ्गविभ्रश सहृदयधुरीणैर्धुरि निधीयते । एकैक षडपि परिचयाय दिष्यते ।

(१) सामस्तुतिपर वच. साम । अह तव दास , त्वमतीवधैर्यशालिनीत्यादि । अथवा प्रकारान्तरेण नायिकायाः सौन्दर्यगुणादिभि स्तवनं साम उच्यते । यथा शृङ्गारतिलके "अयि प्रियतमे[2] ? त्वदीयं नयनयुगल नीलपद्मेन आननञ्चाम्बुजेन, कुन्दकुसुमै, रदन, किसलयेन चाधरो वेधसा विरचितम् । परन्तु न जाने पाषाणेन तावकं हृदय निर्ममे कथ स ? येनातिकठोरहृदया सम्बृत्तासि ।"

(२) दानम्—लुब्धाङ्गना प्रीणातिनायकप्रदत्ताभूषणवासोभि प्रियप्रसूनोपहारे चौपह्रियमाणे नायिका कोपमुज्झति, अपनयति च मानपरम्पराम्, निशीथिन्यां कृतान्यत्रविहारो नायक समेत्य पुष्पकलिकामेका मानवत्यै प्रायच्छत, सा च विदग्धा वचौवैदग्ध्येन ब्रूते—

"अयि शठ ! मधुलिड्झङ्कृतिलसितामेना कलिका कथमस्मभ्य प्रयच्छसि । रात्रौ विहितान्यत्रवासेन भवता कलिर्महान् दत्त । अतश्च दत्ते कलौ कलिका दान तव न पर मन्ये ।" अत्र कलि क्लेशापरपर्याय ।

(३) भेद.—मानिन्या' दूती सहचरी वा स्वानुकूल्येन निर्वर्त्य तत्साहाय्यादवाप्तसाफल्यो नायको मानभङ्ग विधत्ते ।

यथा—"अये सुभ्रु[3] ! पुरा तवाज्ञामुल्लङ्घ्यापि प्रणतिपरायणे मयि त्वया कोपो न्यक्क्रियते स्म । किन्त्वधुना शिरोधुनानोऽप्यह न त्वयानुकम्प्ये, तव प्रियवयस्याना वचास्यपि वितथीभवन्ति, कथन्न जहासि मानम् ।

---

१. सामप्रदानभेदो प्रणतिरुपेक्षा प्रसङ्गविभ्रश ।
अत्रैते षडुपाया. दण्डस्त्विह हन्ति शृङ्गारम् ॥

काव्या० १४।२७॥

२. इन्दीवरेण नयनं मुखमम्बुजेन कुन्देन दन्तमधरं नवपल्लवेन ।
अङ्गानि चम्पकदलै. स विधाय वेधा' कान्ते कथ रचितवानुपलेन चेत ॥

( शृङ्गारतिलक ३ )

३ मुहुरुपहसितमिवालिनादैर्वितरसि न. कलिका किमर्थमेनाम् ।
अधिरजनि गतेन धाम तस्या शठ ! कलिरेव महास्त्वयाद्य दत्तः ॥

माघ—७–५५॥

( ४ ) नतिः :—मानिनीमानभङ्गस्यास्त्ययमन्तिम उपायः। यदा च मानिनी मानं नोज्जिहासति तदा नायकस्तत्चरणयोः शिरो निक्षिपति, जायते च मानभङ्गो यथा—

"प्रियतमायाः[1] चरणयोर्निपतितस्य नायकस्य कुन्तलालिर्मनस्विन्या नूपुराग्रेषु लुण्ठति, अत्रोत्प्रेक्षते कविः—यन्नूपुरस्य उत्थितोऽग्रभागः मनस्विनीमपगतमानामाचष्टे।" असावेव परमः चरमश्चोपायो मानमपनेतुं नायिकायाः। एभिरुपायैः समीहिते वैफल्यकोटिप्रविष्टे रसज्ञो नायिकामुपेक्षते।

( ५ ) उपेक्षा—उपेक्षया च मानभङ्गो भवतीत्यनुभवैकचक्षुषा विदुषा मतम्। चिरं मानितापि मनस्विनी यदा मानं न जहौ तदा नायकस्ताम् उपेक्षितवान्। अनन्तरञ्च सा भिदधौ।

"अयि! [2]सखि। नाहं तत्पुर उपसतुं प्रभवामि सङ्कोचात्, परञ्च चिराय पारुष्यमपि दोषाय अतश्चामुमनुनीय समानय अथवा त्यज मोहम्, क्रियासमभिहारेण विरुन्धन् न भवत्यनुगम।"

( ६ ) प्रसङ्गविभ्रंश—प्रसङ्गविभ्रंशो नाम रसान्तराविष्करणम् भयमाश्चर्यञ्च दर्शयित्वा नायको नायिकाया मानमपसिसारयिषति। यथा च—

"सर्वस्मिन्नपि [3]मानापनोदनप्रयोगे व्यर्थतां नायिकया नीते भयमाविष्कुर्वन् नायकः समीपमुपसर्पन्ती तामाश्लिष्यति। क्षण तूष्णीमुपाय विचिन्त्य नायक नायिका ब्रूते—आ. ? तव पृष्टे किमिद किमिदमिति" सा च त्रस्ता सती मान तत्याज।

एषु षट्सूपायेषु पूर्वपूर्वो[4] मृदु, उत्तरोत्तरञ्च कटुरिति सहृदया रुद्राचार्या अप्यूचुः यच्च मृदुना सिद्धयेत तदर्थं कथं परुषमुपायमुपयुञ्जीत बुधः।

असौ हि मानः संस्कृतवाङ्मये बहुत्रोपलभ्यते। प्रस्तावेऽस्मिन् दिङ्मात्रं दिदर्शयिषुरहमासम्, व्यवेचयमपि तथैव, अधुना हिन्दीभाषाकविवरस्य माधवमिश्रस्यैकं पद्यमुद्धृत्य वाचमवसाययिष्यामि .....

---

१. नूपुरकोटिविलम्बचिकुरं दयितस्य पादपतितस्य।
हृदयं मानपदोत्थमुन्मुक्तमित्येव कथमयति॥ दशरू० च० प्र० ३२१।,

२. किं गतेन नहि युक्तमुपैतुं नेश्वरे परुषता सखि साध्वी।
आनयैनमनुनीय कथं वा विप्रियाणि कुर्वन्ननुनेयः॥—३२२॥

३. अभिव्यक्तालीकः सकलविफलोपायविभव—
श्चिरं ध्यात्वा सद्यः कृतकृतकसंरम्भनिपुणम्।
इतः पृष्ठे पृष्टे किमिदमिति सन्त्रास्य सहसा
कृताश्लेषो धूर्तः स्मितमधुरमालिङ्गति वधूम्॥
( दशरू० द्वि० प्र० १७६ )

४. मृदुस्तत्र यथापूर्वं सर्वेषु यथोत्तरं तथा बलवत्।
साध्येत् यो न मृदुना बलवास्तत्र प्रयोक्तव्यः॥ काव्या० १४।३२॥

काचिन्मानिनी[1] रात्रौ धृतप्रमादमाना प्रणयिपराङ्मुखी एवासीत् । प्रातश्च स्वीयया श्वश्र्वा स्नुषा सस्नेहं पत्युद्बोधनाय आज्ञप्ता सा च मानमपि रिरक्षिषु पत्युद्बोधनस्यौपायान्तरमनवलोकयन्ती चरणयोर्नूपुरावेव बद्धवाग्रभागे रणयामास, रणच्चरणचारुनूपुरा पुरोवर्तिनी कान्तां कान्तो निर्निमेषाभ्या नयनाभ्यामालोचयन् परां मुदं लेभे, व्यस्मार्षीम् चोभौ मानपरम्पराम् ।

इत्थञ्च मानोऽयम् मानिनीनां सौरतसयुगस्य परमास्त्रं नायकानाञ्च प्रार्थनाचाटुप्रणयपोषक तत्त्वमिति मे वितर्कं ।



---

१. मान्यो न मानवती भई भोर
सो सोचहिं सोय गये मनभावन ।
तैसे सो सासु उठी हुलसी
भई बैर कुमार को जाहु जगावन ।
मानको सोच जगावे को लाज
लगी पग नूपुर पाटी बजावन ।
या छवि हेरि हेराये रहे हरि
कौन को रूठिबो का कौ मनावन ॥

( माधव मिश्र )

# गोरक्षशतकम्

श्रीमधुसूदनप्रसादमिश्रः,
अध्यक्षः—श्रीसोमेश्वरनाथसञ्चालकमण्डलानुसन्धानविभागस्य,
अरेराज', चम्पारणम् ( बिहार )

इदं हस्तलिखित पुस्तक चम्पारण्यमण्डलस्य ममरवाग्रामे एकस्य सम्बन्धिनो गृहे प्राप्तम् । अस्य नाम गोरक्षशतकम् इत्युपसहारवाक्यदर्शनात् प्रतीयते । नाथपथानुसारिणा कनफटाख्ययोगिना नवसु नाथेषु सुप्रसिद्धो गोरक्षनाथोऽस्य रचयितेति विश्वास । एव सत्यस्य रचनाकाल पञ्चाशदधिकत्रयोदशशततम ( १३५० ) वैक्रमाब्दसनिकट इत्यपि सिद्धयति । वर्तमानसस्करणस्य लिपिकर्ता कश्चित् लछुमणदासो ( लक्ष्मणदास. ) वैष्णव आसीत् । सवत् १८७८ वैक्रमेऽब्दे, तदनुसारम् १७४३ शकाब्दे ज्येष्ठशुक्लप्रतिपदि भृगौ पुस्तकस्यास्य प्रतिलिपि कृता लिपिकर्त्रा श्रीलक्ष्मणदासवैष्णवेन ।

पुस्तकेऽस्मिन् स्वकीयमुख्यविषय सस्कृत-भाषाया शतद्वयसख्याकश्लोकेषु प्रतिपादितोऽस्ति, अन्ते चावशिष्ट श्लोकद्वय विषयस्य महत्त्वप्रतिपादनायोपनिबद्धम् । वर्तमानपुस्तक कियदशखण्डितमस्ति । पञ्चत्रिशत्तम श्लोकमारभ्य द्वयधिकशतद्वयश्लोकपर्यन्तमुपलब्धमस्ति । पुस्तकमिद नवभिरिञ्चैर्दीर्घेषु सार्धचतुष्टयैस्तैरेव च विस्तृतेषु सुपुष्टविषमस्पर्शपत्रेषु कृष्णमस्या सुन्दरै सुस्पष्टैर्नागराक्षरैर्लिखितमस्ति । लिपिकर्तु सस्कृतस्य पर्याप्तज्ञानाभावेन पदे पदे पुस्तकेऽस्मिन्नशुद्धयो दृश्यन्ते । पुस्तकस्यास्य यावानशो ममाग्रे वर्तते तावत्यशे उभयपृष्ठात्मके एकस्मिन् पत्रे एकैव पत्रसख्या अङ्किताऽस्ति । इमा सख्याश्चतुर्थपत्रात् चतुर्दशपत्रपर्यन्ता. प्रतिपत्र द्वितीयपृष्ठेऽङ्किता उपलभ्यन्ते । एव प्रतिपत्रं पृष्ठद्वयेऽपि अष्टौ नव वा पङ्क्तय उल्लिखिता सन्ति ।

अस्य पुस्तकस्य काचिदन्या पाण्डुलिपि' कस्यचिद् गृहे, कुत्रचिद् ग्रन्थागारे वा सुरक्षितास्ति, न वेति नाह वेद्मि । स्वर्गीय श्रीरामदासगौडमहोदयेन स्वकीये हिन्दुत्वनाम्नि[1] ग्रन्थेऽस्य नामोल्लेखमात्र कृतम्, किन्तु न स्वय साक्षात्कृतं तेन । श्रीगौडमहोदय कस्यचिदाङ्गलग्रन्थकारस्य हालनाम्नः कथनानुसारमस्य ग्रन्थस्य नाममात्रेण परिचितोऽभवत् । तत्कथन प्रमाणीकृत्यैव गोरक्षसाहित्ये परिगणना कृता तेन । अस्य पुस्तकस्य प्रतिपाद्यविषयो योगशास्त्रमस्ति ।

नागादीना पञ्चवायूना शरीरे प्राधान्य प्रतिपाद्य श्रीगोरक्षनाथ एतान् पञ्चापि शरीरे भ्रमतो वायून् जीवसज्ञकान् मन्यते । पूर्वंप्रणष्टचतुस्त्रिशच्छ्लोकेषु प्राणापानादीनामितरेषामपि वायूना प्रतिपादन कृतमिति पञ्चत्रिशच्छ्लोकस्य कतिपयाशदर्शनान्निश्चीयते । प्राणापानाभ्या समाक्षिप्तो जीवो न कदापि स्थिरस्तिष्ठति । तदधीनो ( प्राणापानवशो ) जीवो वामदक्षिणमार्गाभ्यामध ऊर्ध्वं च धावति । चाञ्चल्यात् स ( जीव ) न कदापि दृष्टिपथमायाति । यथा रज्जुबद्धः श्येन उड्डीय यं कमपि देशमालभेत्, पुन स आकृष्ट सन् तमेव पूर्वाधिष्ठित देशमानीयते, तथैव जीवोऽपि गुणबद्ध. प्राणापानाभ्यामाकृष्यते । ऊर्ध्वाध स्थितयो परस्पराकर्षण-

1. हिन्दुत्वग्रन्थस्य सप्ताधिकसप्तशततमपृष्ठमवलोकनीयम् ।

कारिणो. प्राणापानयोर्ज्ञानमेव योगज्ञानम् । अयं जीवो हङ्कारेण बहिर्याति, सकारेण च पुनरन्तर्विशति । एवं ( हसो हस ) इति मन्त्रं सर्वदा जपति । अयं जप· षट्शतोत्तरैकविंशति-सहस्रसंख्यापरिमितोऽहोरात्रेण भवति । इयमेव योगिना मोक्षदायिनी "अजपा" नाम्नी गायत्री । एतत्सदृशी काचिदन्या विद्या, कश्चिदन्यो जप, किञ्चिदन्यज्ज्ञान वा नास्ति । इय गायत्री कुण्डलिन्या सम्भूतास्ति । इयमेव च प्राणान् धारयति । इयं प्राणविद्याज्ञानमेव वेदज्ञानम् । अष्टधा कुण्डलीकृताकृति कुण्डलिनी निजमुखेन ब्रह्मद्वारमुखमाच्छाद्य प्रसुप्ता तिष्ठति । यदा सा परमेश्वरी वायुसहितेन मनसा सह वह्नियोगे सति प्रबुद्धा भवति, तदा कयाचित् पद्मतन्तुनिभया सर्पिण्येव सुषुम्नया नाड्या ऊर्ध्वं व्रजति । कुण्डलिन्या पिहितमोक्षद्वारस्य प्रभेदन योगिन कर्त्तव्यं भवति । सम्पुटितोभयकरो बद्धदृढतरपद्मासनो गाढ वक्षसि चिबुक सन्निधायेप्सित ध्यान च कुर्वन् योगी यदा वारवार पूरित प्राण मुञ्चन् अपान प्रोच्चारयति, तदैवास्मात् शक्तिप्रभावात् कुण्डलिन्या जागरण भवति ।

अङ्गाना मर्दनेन जलेन च शरीरश्रमो दूरीभवति । योगिना कट्वम्ललवणरसाना त्याग. कर्तव्य., क्षीरभोजिना च भाव्यम् । स यदि ब्रह्मचारी, मिताहारी, त्यागी योगपरायणश्च भवति, तर्हि नूनं वर्षादूर्ध्वं सिद्धो भवति । यो हि सुस्निग्धेन मधुरेण सरसेन चाहारेण केवल-मुदरस्य भागत्रयमेव पूरयति स एव मिताहारीत्युच्यते । यश्च योगी महामुद्रा नभोमुद्रामुड्यान जालन्धर मूलबन्ध च जानाति, स एव मुक्तियोग्यो भवति । अत पर मूलबन्धनविधिमभिधाय श्रीगोरक्षनाथस्तेन सततं मूलबन्धनेन वृद्धोऽपि युवा भवतीति घोषयति । एवमेवोड्यानबन्ध-जालन्धरबन्ध-खेचरीमुद्राणा विधिमुपयोगिताञ्च प्रतिपाद्य अग्रे बिन्दुधारणमहत्ता प्रतिपाद-यत्याचार्य ।

श्रीगोरक्षमते बिन्दुरेव शिव, रज एव च शक्ति एव बिन्दुरेवेन्दु, रज एव च रवि । अनयार्बिन्दुरजसो, शक्तिशिवयो, शशिसूर्ययोर्वा सगमादेव परमपदप्राप्तिर्भवति । बिन्दुरजसो-रैक्ये दिव्य वपुरवाप्तं भवति । योगीचन्द्रसयुक्तशुक्रस्य सूर्यसगतरजसश्च समरसतामेकताञ्च जानीयात् । नाडीजालस्य शोधनम्, चन्द्रसूर्ययोश्चालन रसाना शोषणञ्च महामुद्रेति योषि-भिरुच्यते । मुद्रास्वरूपनिरूपणानन्तरमभ्यासप्रकारो वर्णितोऽस्ति । अयमभ्यासश्चन्द्रांशेनारब्धव्य, पुन सूर्यांशेन च यदा अभ्यासद्वयस्यापि सख्या तुल्या भवति, तदा योगसाधको मुद्रा विसर्जयेत् । महामुद्राभ्यासे सम्पन्ने विषमप्यमृतमिव जीर्यति । महामुद्राभ्यासकारिणः क्षयकुष्ठगुदावर्त-गुल्माजीर्णादिरोगा. क्षय यान्ति, अत परमोङ्कारस्य जपकरणाय तन्माहात्म्यं तस्य विविध-रूपत्वञ्च वर्णितमस्ति । साधकेनाय जपः सर्वदा सर्वास्वप्यवस्थासु करणीयो भवति । प्रणवजप-कारी न कदाचिदपि पापलिप्तो भवति । वायुनिश्चलताया महत्त्व प्राणायामस्य प्रकारं नाडी-शोधनक्रियाञ्च प्रतिपादयतोऽस्य ग्रन्थस्यार्द्धभाग समाप्ति गतोऽस्ति । नाडीशोधनेन वायोर्यथेष्ट-धारणम् अग्नेः प्रदीपनम्, नादाभिव्यक्तिरारोग्यञ्चेति विविधफलानि सन्ति । अग्रे उत्तममध्यमा-धमभेदेन प्राणायामभेद वर्णयित्वा तदभ्यासस्यावश्यकता वर्णयति ग्रन्थकार. । साधकः शक्ति-प्रेरित वह्निसहितमपानवायुमाकाशदेशमानीय, आत्मान ध्यायस्त मस्तके स्थापयेत् । प्राणायामः पापेन्धनवह्निः ससारार्णवसेतुश्च तत्राभिहितः । साधक. आसनेन रोगान्, प्राणायामेन पातकं प्रत्याहारेण च मानसविकार हन्ति । धारणाभिर्मनसो धीरताम्, ध्यानेनाद्भुतां चेतनतां समा-

धिना च शुभाशुभं कर्म त्यक्त्वा मोक्षमाप्नोति। तदनन्तरं समाधेः प्रशंसा तत्पूर्वक्रिया-श्चोक्ता. सन्ति।

गगनगते पवने यदा घण्टानाद इव सुमहान् ध्वनिरुत्पद्यते, तदा साधक सिद्धि सनिकटे जानीयात्। योगशास्त्रमनुसृत्य कृताभ्यास प्राणायाम समस्तरोगाणा क्षयकरो भवति। स एव च यदा विधिमुल्लङ्घ्य भवति, तदा हिक्काकासश्वासादीन् शिर कर्णाक्षिपीडा च करोति।

एवमेव प्रत्याहारस्वरूपमनाहतचक्रस्वरूपम्, मणिपूरकनामकमहापद्मस्वरूपम्, सोमरूपा-मृतपानमाहात्म्यम्, पञ्चधारणामार्गस्वरूपम्, ध्यानस्वरूपम् ( मुद्रासहितम् ), तदनन्तर समाधि-स्वरूपञ्च सम्यगमिधाय ग्रन्थस्यास्य समाप्ति कृता आचार्यपादेन।

इह विदुषामवलोकनाय गोरक्षशतकस्यान्तिम सम्पूर्णमेव पृष्ठमुद्धृत्य लघुनिबन्धमिममुप-सहरामि—

(१) दुग्धे क्षीरं घृते सर्पिरग्नो ( ग्नौ ) वह्निरिवार्पित ।
तन्मयत्वं व्रजत्येव योगि ( गी ) लीनः परे पदे ॥
( १९८ प्र० प० )

(२) भवभयहर ( खण्डितं नं ) नृणां मुक्तिसोपानसंज्ञकम् ।
गुह्याद् गुह्यतरं गुह्यं गोरक्षेण प्रकाशितम् ॥
( १९९, द्वि० प० )

(३) इति गोरक्षशतकं योगशास्त्रं जनः पठेन् ।
सर्वपापविनिर्मुक्तो योगसिद्धिं लभते ध्रुवम् ॥
( २००, तृ० प० )

(४) योगशास्त्रं पठेन्नित्यं किमन्यै शास्त्रविस्तरैः ।
यत्स्वयं चादिनाथस्य निर्णतं वदनाम्बुजात् ॥
( २०१, च० प० )

(५) स्नानं (तं) तेन समस्ततीर्थसलिले दत्ता च पृथ्वी द्विजे
यज्ञानां च हुता (तं) सहस्रम्युतं देवाश्च सपूजिता ।
( प० प० )

सत्यं तेन सुरतर्थितश्च (सुतर्पिताश्च) पितर स्वर्गं च नि (नी) ता. पुन-र्यस्य ब्रह्मविचारणे क्षणमपि प्राप्नोति धैर्यं च नः ( मनः ) २०२ ॥

इति गोरक्षशतकं सम्पूरणम् ( र्णम् ) सम्वत् १८७८ ॥
( स० प० )

शाके १७४३ समै ( मय ) नाम जेष्ट ( ज्येष्ठ ) शुक्ल परिवाया ( प्रतिपदि ) शुक्र-वासरे इद पुस्तक लिखित्वा लछुमणदास वैष्णवा ( अष्टमपक्तिः )

●●●

# आहारप्रविचारणा

**कविराजश्रीविद्याधरशास्त्री, एम० ए०, जी० ए० एम० एस०,**
**विद्यावारिधिः ( P-H. D. ), काव्यतीर्थः,**
**रीडर- आयुर्वेद म० वि०, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी**

आह्रियते ( अभ्यवह्रियते ) य. स आहार । पाञ्चभौतिकस्य, पेय-लेह्य-चोष्य-चर्व्य-भोज्य-भक्ष्यभेदेन षड्विधस्य, मधुराम्ल-लवण-कटु-कषाय-तिक्तभेदेन षड्रसस्य, सूपौदन-कृशरा-परमान्न-समिता-रोटिका-पोलिका-पूरिका-बटक-वेशवार-शष्कुली-मोदक-चिपिट-होलक-कुल्माषादि-नानाविधस्य यथेष्टवर्णगन्धरसस्पर्शस्याहार्यद्रव्यस्य रसनासहकारेण यो गलविलाध सयोगा-नुकूलव्यापारो भवति, स एवाहार इत्युच्यते ।

भोजयितुकामेन प्रागेवाहार्योपकरणाना सभारा उपकल्पनीया । तथा प्रयतितव्यं यथा प्रतिविहिते समेषामाहार्यद्रव्धाणा संभरण सुकरं स्यात् । न हि सन्निकृष्टे काले सत्यपि क्रयाक्रये सुकरमाशुसभरणमाहार्यद्रव्याणाम् । सम्यक्प्रयोगनिमित्ता हि सर्वकर्मणा सिद्धिरिष्टा भवति । अतश्चाहारविधिविधानानि प्रविभज्य यथाशुप्रबोधकं भवेत् तथाऽनुव्याख्यास्यतेऽग्रत ।

"यैश्च पदार्थनिकरैरारचितोऽयं शरीर, यैश्च शरीरे पोषणशक्तिरवाप्यते, ते पदार्था आहार्यद्रव्येषु सम्मिलिता भवेयुरिति विचारणीयम् ।

आहारस्य महत्त्वम्—कस्यचिदपि राष्ट्रस्य वैभवमुत्कर्ष, गौरवम्, यशः, ऐश्वर्यं तद्देशवासिजनानाममले चारित्र्ये सुप्रतिष्ठितम् । ये खलु स्वस्थे शरीरे स्वस्थं मस्तिष्क दधति, त एव वास्तविकरूपेण राष्ट्रस्योपस्तम्भा । तेषामेव धर्मेणाचारेण पौरुषेण राष्ट्रं धार्यते । मानवानाञ्च समस्तमेव शारीरं मानसं वा बलमाहारायतनकम् । आहाराग्रहणे द्वित्रैरेव लङ्घनैर्बलिनोऽपि वलं ह्रासमेति । बुद्धिविभ्रंशो भवति, स्मृतिरपसरति, मतिर्हीयते । क्षुधा-ज्वाला ज्वालामुखीव तीव्रा । प्रतिसृष्टिनिर्माणसामर्थ्यमादधता महर्षिणा विश्वामित्रेणैकदा बुभुक्षाकुलेन प्राणान् धारयितुमक्षमेण क्षुत्क्षामकण्ठेन श्वपचगृहात् पर्युषितं श्वास्थि चोरितमिति श्रूयते । वस्तुतो राष्ट्रस्य समृद्धिराहाराधीनैवेति नात्र कश्चन विप्रत्यय । यादृशश्चाहारः क्रियते तादृशी मतिरुदेति, शरीरे च बलाबलमुपलभ्यते । मलिनाहारशीलस्य सत्त्वं दूयते, न च विजानाति हिताहितं स । आहारशुद्धो सत्या सत्त्वशुद्धि सञ्जायते । सर्वात्मना निश्चप्रचमेतद् यच्छरीरसाम्राज्यस्थितिराहारायत्तेति । यथेष्टवर्णगन्धरसस्पर्शमन्नपान प्राणिना सत्त्वमूर्जयति, तद्धि शरीरधातुसाम्यमावहति, बलवर्णेन्द्रियप्रसादकर भवति ।

अन्नाधीन[1] एव जीवनम्, पुष्टि, कान्ति., वर्णावदातताऽऽरोग्यम्, मेधादिकमखिलं, लौकिकोऽभ्युदयश्च । यदि चेद्दुर्लभं मानुष जन्म लब्ध्वा कश्चन ज्ञानी मुक्त्यर्थमपि यतेत्, तदापि

---

१—प्राणाः प्राणभृतामन्नमन्नं लोकोऽभिधावति ।
वर्णप्रसाद. सौस्वर्यं जीवितं प्रतिभा सुखम् ॥
तुष्टिः पुष्टिर्बलं मेधा सर्वमन्ने प्रतिष्ठितम् ।
लौकिकं कर्म यद्वृत्तौ स्वर्गतौ यच्च वैदिकम् ॥
कर्मापवर्गे यत्प्रोक्तं सर्वमन्ने प्रतिष्ठितम् ॥ चरक० सूत्र० २७,५१-५३

देहस्थिरत्व मनसश्च समाधिरपेक्ष्यते । यत्किल विधिविहितान्नपानार्जितस्थिरस्वास्थ्यसम्पद्विना व्याधिपरीतेन क्षुधातुरेण कर्तुं न शक्यते यस्मिंश्च राष्ट्रे आहारस्य समस्या समाहिता वर्तते, स एव विश्वस्मिन्नाद्रियते, सम्मानभाक् च भवति, बोद्धिकी च प्रतिभाऽहर्निशं समेधमाना स्फुरति तत्र ।

आहारो हि नाम शरीरस्य त्रिषु उपस्तम्भेषु[1] प्रधानतमः । हिताशिनः, मिताशिनः, कालभोजिनः, जितेन्द्रियस्य च पुंसो नोपतिष्ठन्ते रोगा । अनात्मवन्तो घस्मरा मिथ्याहाराः समशनानशनविषमाशनसेविनो हि व्याधिमन्दिरीकुर्वन्ति निजानेव देहान् । सत्याञ्च बुभुक्षायामवश्यमेवाशन विधातव्यम् । बुभुक्षाविघाताच्चाङ्गमर्दारोचक[2]तन्द्राबलक्षयादय उपद्रवा आपतन्ति सहसा । एवञ्चाहारायत्तमेव स्वास्थ्य, समृद्धिर्मेधा, प्रतिभा, बलमुत्साहस्तेजः पराक्रम ओजसश्च समुत्कर्ष । सात्त्विकादाहाराच्च निर्मल मनो भवति, न तदा रजस्तमसी बलमादधतः । पुरुषाश्च यदा सर्वतोभावेन शारीरमानसाभ्या रोगाभ्यामनभिद्रुता भवन्ति, तदैव राष्ट्रस्य कल्याणाभिनिवेशिनो भवन्ति, तदैव च ते निर्व्यलीका आत्मसर्वस्वेन "वय राष्ट्रे जागृयाम" प्रभृति मन्त्रानुद्घोषयन्ति ।

**आहारस्य प्रयोजनम्**—शरीरयन्त्रमिदमनवरत पोषणतत्त्वमुपलभ्यैव कार्मुकं भवति । गात्राणा पोषणं समस्ते देहे हि रक्तसम्वहनकर्मणा भवति । स्वस्वस्थानेषु धातवोऽङ्गानि च रक्तपोषणमवाप्य स्वीयामावश्यकता पूरयन्ति । तेनैव रक्तेन च विभिन्नानि शरीरोपादानानि निर्मीयन्ते, सतत क्षीयमाणशक्तेश्च पूरण भवति । तच्च शोणित पाञ्चभौतिकस्य षड्रसाहारस्य पाचनकर्मणा सम्पद्यते । यदि चेदाहार न गृहीतो भवेत्तदा रक्त नोत्पद्येत, पोषणकर्म चावरुध्येत । शरीरेऽस्मिन् यान्युपादानभूतानि मौलिकद्रव्याणि सन्ति, तानि सर्वाणि किल भवन्त्याहार्यद्रव्येषु । अतश्चाहारद्रव्यैश्शरीर पोष्यते, तैरेव सम्वर्ध्यते च । प्रतिक्षण क्षीयमाणशक्तिपूर्तिश्चाहारेणैव क्रियते । आहार शरीरोष्माण रक्षति, शक्तिमुत्पादयति, शरीराणा धातूनामभिवर्धनेन पूरणेन च साम्यं स्थापयति । आहारस्य सम्यक्पाचन, क्रमेण धातूना पूरण, यथास्वञ्च शारीरेषु भावेषु परिणमन यदा नियमित भवति, तदैव शरीर धार्यते । न केवलं परिवारस्य, देहस्य, देशस्य, किमुताखिलस्य विश्वस्य स्थितिर्हि अविगीताहारविधानसौष्ठवनिर्भरा भवति, किन्तु सुस्वास्थ्य हि हिताहारमूलम् । प्राधान्येन त्रीणि प्रयोजनानि भवन्त्याहारस्य । तद्यथा—

(१) आहारो हि शरीरमभिवर्धयति यथास्थिति च शरीरं स्थापयति । यदा शरीरस्य वृद्धिरवरुध्यते, तदानीञ्च शारीरेषु भावेषु ह्रास परिवर्तन वा भवत्येव । क्षीयमाणानाञ्च धातूनां पूरणेन पुनरावृत्त्या वा पोषणक्रमेणाहार पुष्णाति कायम् ।

१—"त्रयः उपस्तम्भाः, आहार, स्वप्नो ब्रह्मचर्यमिति । एभिस्त्रिभिर्युक्तियुक्तैरुपस्तब्धमुपस्तम्भैः शरीरं बलवर्णोपचयोपचितमनुवर्तते यावदायु संस्कारात्, सस्कारमहितमनुपसेवमानस्य" । चरक० सूत्र० ११, ३५

२—भोजनेच्छाविघातात् स्यादङ्गमर्दोऽरुचि श्रमः ।
तन्द्रा लोचनदौर्बल्यं धातुदाहो बलक्षयः ॥
बुभुक्षितो न योऽश्नाति तस्याहारेन्धनक्षयात् ।
मन्दी भवति कायाग्निर्नाग्निर्वर्धेन्निरिन्धनः ॥ योगरत्नाकर.

(२) आहारो हि [1]कायाग्निमन्नपानसमिद्भिरुज्जीवयति। समानेन च वायुनाऽवधूतोग्नि: सन्धुक्षितो भवति, तदा च पाचनकर्मणि सौष्ठवमुपलभ्यते, शरीरोष्मा संरक्ष्यते, शक्तिश्च प्राप्यते। शरीर यदा शय्याया निद्राधीन भवति, तदापि श्वासकर्मणि रक्तसम्वहनकर्मणि च शरीरशक्तिः क्षीयते, तत्पूर्तिश्चाहारेणेव भवति।

(३) आहार शरीरोपादानभूताना द्रव्याणा शरीरप्रापणमाध्यमेन देहं सतत कार्मुकं विदधाति, सर्वाश्च क्रियाः सञ्चालयति। आहार शारीराणा यन्त्राणा सक्षमत्वापादनेन तेषु तथा बलमातनोति, यथातेऽनवरतं स्व-स्व-कर्मसु व्यापृता भवेयुर्न च व्याधिभिरभिभवनीया भवेयु। मानवा सर्वभक्षिणो भवन्ति। ते हि वनस्पतिभ्य: पशुभ्यश्च भोजनान्याददते। तथा चैवमाहारजातमन्तराग्नि. पचति, [2]यथास्वञ्चाहारसार धातुषु परिणतमखिलं कायमनुगृह्णाति। केदारीकुल्यान्यायेन सारभूतो रस [3]व्यानवायुना सर्वाङ्गव्यापिना प्रेरित सन् तर्पयति सर्वानेव धातून्।

**आहारतत्त्वम्**—आहारो[4] द्विप्रभव। एक स्थावरात्मकोऽपर: जङ्गमात्मक. । प्रभावभेदेनापि द्विविध। एक परिणामसुखोऽपरश्चाहितपरिणाम.। आहार्यप्रकारभेदेन चतुर्विध:–पानाशनभक्ष्यलेह्यभेदेन। मधुराम्ललवणकटुतिक्तकषायरसभेदेन षड्विधास्वाद.। आहारस्य कल्पना तु नैव सख्यातुं शक्यते, यतो हि तेषा तेषा शूकशमीप्रभृतिधान्यद्विदलफलशाकमांसादीनां तैस्तैर्मेलकै: द्रव्यै सयोगस्ततश्च तोयाग्निसन्निकर्ष शौचमन्थनदेशकालवासनभावनादिभिर्द्रव्याणामनेकविधश्च संस्कार क्रियते, न च ते ते प्रकारा: सख्येया भवितुमर्हन्ति।

**उत्तमाहारस्य लक्षणम्**—(१) यस्मिन्नाहारे समस्तानि शरीरोपकारकाणि पाञ्चभौतिकानि मूलद्रव्याणि वानस्पत्यानि जान्तवानि च वस्तुजातानि स्यु। (२) यदाहारद्रव्यं मानवाना प्रकृत्यनुगुण वायूदकदेशकालानुगुण स्वभावाविरोधि भवेत्। (३) ऋतुसम्मतं, वयोऽनुरूप, शरीरारोग्यकर, शारीरमानमपरिश्रमानुकूल, कार्श्यस्थौल्ये विचार्य जाठराग्निसन्धुक्षणमाहारद्रव्यं साधु भवति। (४) [5]मात्रावल्लघु पथ्य पाचनक्षम नातिगुरु, देहदोषादिक विचार्य प्रयुक्तं

---

१—हिताभिर्जुहुयान्नित्यमन्तरग्निं समाहित।
अन्नपानसमिद्भिर्ना मात्राकालौ विचरयन्॥ चरक० सूत्र० २७।३३७

२—यथास्वेनोष्मणा पाक शारीरा यान्ति धातव।

३—व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा।
युगपत् सर्वतोऽजस्र देहे विक्षिप्यते सदा॥ चरक० चि० १५

४—आहारत्वमाहारस्यैकविधमर्थाभेदात्। स पुनर्द्वियोनि: स्थावरजङ्गमात्मकत्वात्, द्विविधप्रभावो हिताहितोदर्कविशेषात्, चतुर्विधोपयोग पानाशनभक्ष्यलेह्योपयोगात्, षडास्वादो रसभेदत: षड्विधत्वात्, विंशतिगुणो गुरुलघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवानुगमात्, अपरिसख्येयविकल्पो द्रव्यसंयोगकरणबाहुल्यात्। चरक० सूत्र० २५, ३६

५—"पथ्यं पथोऽनपेत यत् यच्चोक्तं मनस. प्रियम्॥
मात्राकालक्रियाभूमिदेहदोषगुणान्तरम्।
प्राप्य तत्तद्धि दृश्यन्ते ते ते भावास्तथा तथा॥ चरक० सूत्र० २५।४५-४६

स्रोतोऽनपकारकं मनसश्च प्रियमाहारद्रव्यमुत्तमं व्यवस्येत् । (५) धातुसाम्यस्थापनमेव मुख्यं लक्ष्यमाहारस्य, अतश्च येनाहारेण शरीरधातवः पुष्यन्ति, न चातिबृंहिता नवतिह्रासमुपगता भवन्ति, यथास्वञ्च प्रकृतिभावे तिष्ठन्ति, वैषम्यं गताश्च साम्य[1] भजन्ते तादृशश्चाहार उत्तमाहारो भवति ।

**आहारयोग्यं स्थानम्**[2]—शुचौ, मनोरमे, सुगन्धिपुष्पामोदसुरभिते, विस्तीर्णे, सजालगवाक्षनिर्बाधे, तृणसंकरसञ्चयादिरहितेऽजनाकीर्णे, प्रवृत्तगीतवादित्रे, कथाख्यायिकाश्रवणसञ्जनितसौमनस्ये, विनयशीलानुरागदाक्षिण्यसंयतपरिजने, समवयस्कसुहृत्समृद्धे, समे, प्रिये, सुप्रकाशे, स्थानेऽशनमश्नीयात् ।

**आहारासनम्**—कस्यापि कार्यस्य सौविध्यं सौष्ठवञ्च तद्योग्योपवेशनोत्थानादिव्यापाराचारनिर्भरम् । आहारश्च जीवनस्य मूलम् । देशकालशरीरसत्त्वसात्म्यादिकञ्च सम्यगवधार्य समुचितमासनमुपकल्पनीयमाहारार्थम् । तच्च[3] तूलमयं कोमलं स्वच्छं सुन्दरं भवेत्, यद्वा साध्ववगुण्ठितमूर्णामयं कम्बलादिकं स्यात् । किं वा काष्ठपीठं मञ्चिका वा नात्युच्छ्रिता स्यात् । तत्र च सुखेन[4] पद्मासनेनोपविशेत् । न चोदरं कस्मिन्नपि पार्श्वे पीडितं स्यान्नचातिदृढं नीवीन्बधनं विधेयम् । न वा परिधानवस्त्राणि धौतादीनि वाऽतिसम्वृतानि स्युरुदरप्रदेशे । तथा प्रयतनीयं यथा नोदरं पचनयन्त्राणि वा पीडितानि स्युर्महास्रोतश्च न पीडितं स्यात् । आसीनावस्थाया मेरुदण्डं ऋजुर्भवेत् मुखं समासीना भवेदासने । एकाग्रचित्तोऽनुद्विग्नः सुमना धैर्यधरः सात्म्यज्ञश्च स्यात् ।

**आहारस्य पूर्वकर्म**—[5]स्नानादिपरिष्कृताङ्गः, कृतचन्दनाद्यपलेपनः, सुरभिसुगन्धितः, प्रसन्नचेताः, सुहृद्भिरुपास्यमानः सावहितेन मनसाऽन्नतत्परो भवेत् । हस्तौ पादौ कपोलौ च प्रक्षाल्य, नेत्रे नासिके च सुप्रक्षालिते विधायावेक्ष्य हिताहितमात्मनः, देशकालबलज्ञानपूर्वकं [6]लोभमोहेर्ष्याभयक्रोधशोकरहितोऽविषमाङ्गन्यासो वेगविधारणोदीरणाङ्गप्रदूषणादिविरहितः देवगोब्राह्मणानर्चयित्वा कृतस्वस्त्ययनप्राणायामसूर्योपस्थानगायत्रीजपः, माहानसिकवैद्यानुमतः, प्रहृष्टकरणो "ऽन्नं ब्रह्मा रसो विष्णुर्भोक्तादेवो महेश्वरः" इति सञ्चिन्त्य मनसा स्वासनमुपविशेत् ।

---

१—यदाहारजातमग्निवेश समाँश्चैव शरीरधातून् प्रकृतौ स्थापयति,
विषमाश्च समीकरोतीत्येतद्धि त विद्धि ॥    चरक० सूत्र० २५।३३

२—भोक्तारं विजने रम्ये निःसम्बाधे समे शुचौ ।
सुगन्धिपुष्परचिते समे देशेऽथ भोजयेत् ॥ सुश्रुत० सूत्र ४६।४५७

३—मृदुतूलमये स्थूले चारुवस्त्रावगुण्ठिते ।
आसने प्राङ्मुखो भोक्तोपविशेद्वाप्युदङ्मुखः ॥ क्षेमकुतूहलम् ।

४—सुखमुच्चैः समासीनः समदेहोऽन्नतत्परः । सुश्रुत० सूत्र० ४६।४६४

५—स्नातः सुधौतमृदुसुन्दरशुक्लवासास्तत्कालधौतचरणः प्रियपुत्रमित्रैः ।
स्रग्वी प्रसन्नहृदयो रसपाकवेद्या भोक्ता प्रविश्य हितसात्म्यसमानवेद्यैः ॥ क्षेमकुतूहलम्

६—ईर्ष्याभयक्रोधपरिप्लुतेन लुब्धेन रुग्दैन्यनिपीडितेन ।
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् परिपाकमेति ॥ माधवनिदानम्

माहानसिकश्च भोक्तुरासनप्ररिग्रहात् प्रागेव समाकलयेद् सम्भारान् । तद्यथा—मण्ड-पेया-विलेपी-पायस–कृशरा-भक्त–सूप–शाक-सौराव-संयाव–खानिष्क-वेशवार–राग-षाडव-मुद्गयूष-खड-काम्बलीक-दाडिमाम्ल-दध्यम्ल-तक्राम्ल-यवागू-कूतयूष'कृताकृतमास–रस–रसाला–मन्थ–शिख-रिणी-घृतपूर-शष्कुली-वटक-कूर्चिका-कुल्माष-पृथुक–मृद्वीका-परुषक-कदली-शृङ्गवेर–सैन्धव-बिम्बु-धात्री-जीरक-हिङ्गुसनाथमाकलयेन्महानसम् । पात्राणि च हैम-राजत-शैल-मार्तिक-वार्क्ष-ताम्र-पित्तल-स्टेनलेसस्टीलमयानि सङ्ग्रहणीयानि परिवेषणार्थमशनार्थञ्च । गीत-वादित्र-हास-कथा-न्निपुणा रुचिरावदातवर्णा देशकालविदोऽभिप्रायज्ञा प्रसन्नानना. स्नाताश्चन्दनचर्चितावयवा: सुवसना प्रतिपत्तिज्ञा [1]परिवेषका नियोज्या. । परिवेषिका[2] वा शीलशौचाचारदाक्ष्यसपन्ना: सुप्रणिविहितवसना स्मेरानना घनसारोशीरकेतकीसौगन्ध्यसुगन्धिताङ्गा. सवेशनोपवेशनप्रति-ग्रहव्यजनप्रयोगकुशला: श्रुतिमधुरसङ्गीतलास्यकोविदा दृष्टिसुखा. प्रियवदा. काव्यकथाप्रवीणा. प्रगल्भा. प्रहृष्टा आहारविधिज्ञा आहारविधिविशेषायतनज्ञा देशकालज्ञा हर्षप्रीतिकरा. प्रादुर्भूता-यामायदि झटिति प्रतिपत्तिज्ञा. सर्वेन्द्रियोपपन्ना सन्निवेश्या । [3]अन्ये च कर्मचारिण स्वस्वकर्मसु निष्णाता अनलसा विधेया दृढा. सयमिनो नियोज्या ।

**आहारस्योपकल्पनम्**—विमले विशाले मनोरमे स्थालीपात्रे सूपौदन पुरस्तात् स्थापयेत् । सुसंस्कृताँच लेह्यानग्रे निदध्यात् । विविधानि फलानि भक्ष्यद्रव्याणि यानि परिशुष्काणि तानि दक्षिणे पार्श्वे निदध्यात् । द्रवद्रव्याणि खड-यूष-पेया-रस-पानक-पयोपानीयादीनि वामे पार्श्वे स्थापयेत् मोदकादींश्च पुरस्तादेव । तत्र च पेयपदार्था राजते भाजने देया , फलानि व्यञ्जन-वटकादयश्च पत्रेषु देया । दध्यादिकं मृद्भाजने देयम् । कट्वर तक्र-खडादींश्च पाषाणपात्रेषु निदध्यात् । दुग्धन्तु शृतशीत ताम्रमये पात्रे दद्यात् । पेय पानीयादिक मृत्पात्रे काचस्फटिकादि-पात्रेषु वा दद्यात् ।

**भोजनवेलायां भोक्तु. कर्तव्यम्**—भोजनकाले माङ्गल्याना गोब्राह्मणाग्निहिरण्यादीना सन्दर्शनमायुष्य भवति । प्रीतिकराणा वास.स्रग्रत्नाना धारणङ्कर्तव्यम् । देवगोब्राह्मणेभ्योऽतिथि-भ्यश्चाशन प्रागेव निवेदयेत् । प्रक्षालितकरचरणकपोल. सुगन्धिर्मनोज्ञवेश. सुस्वादु रुचिकर पूजितमशन प्रशसयन् श्रुतिमुखद नूपुरकाञ्चीवलयगुञ्जितं श्राव श्राव साधुपर्यवेषितमाप्तजना-नुमतमशनमश्नीयात् ।

---

१—स्नातश्चन्दनचर्चित सुवसन स्रग्वी प्रसन्नानन ।
स्पष्टात्मा सुभग प्रसन्नहृदय श्रीकान्तपूजारत: ॥
स्वामिस्नेहपर सुपाकनिपुण प्रौढो वदान्य शुचि: ।
विप्रो वा परिवेपकश्च सुकुलश्चान्योऽपि वा भूपते. ॥

२—स्नाता विशुद्धवसनानवधूपिताङ्गी कर्पूरसौरभमुखी नयनाभिरामा ।
बिम्बाधरा शिरसि बद्धसुगन्धिपुष्पा मन्दस्मिता क्षितिभृता परिवेषिका स्यात् ॥ क्षेमकुतूहलम्

३—शुचयो दक्षिणा दक्षा विनीता प्रियदर्शना. ।
सविभक्ता सुमनसो नीचकेशनखा: स्थिरा ॥
स्नाता दृढं सयमिन: कृतोष्णीषा: सुसयता ।
तस्य चाज्ञाविधेया: स्युर्विविधा: परिकर्मिण ॥ सुश्रुत० कल्प० अ० १

**कालभेदेन आहारविधि**—बुभुक्षितो जन पूर्वं वातपित्तशमनाय मधुररसाहारमुपयुञ्जीत। स च पक्वाशयगत वात जयति। मध्ये चाम्ललवणौ रसावुपयुञ्जीत तौ हि पित्ताशयेऽग्निदीप्ति कुरुत। भोजनान्ते च कटुतिक्तकषायान् रसान् सेवेत, तेन हि कफजन्या विकारा. प्रशम व्रजन्ति। एवञ्च पूर्वं दाडिमादीनि फलानि तत राग-खाटवादीन् पेयान्, ततश्च भोज्यान् भक्तादीन् खादेत्। अनन्तरञ्च नानाप्रकारान् वेशवारवटकादीन् भक्ष्यान् खादेत्।[1]

**आहारस्य[2]षड्विधत्वम्**—१ भोज्य २ भक्ष्य ३ चोष्य ४ लेह्य ५ पेय ६ चर्व्यमिति षोढाऽऽहारो भवति। तत्र **भोज्यं** तदुच्यते, यस्य गलविलाध संयोगव्यापारे सौविध्य भवति, यदभ्यवहरणे रसनासारल्येन सञ्चरन्ती मुखगह्वरमापूरयति रसेन तद्रसास्वादचटुला, सुखञ्च भोज्य पर्येति गलमनु। न च दन्ताघातविदारणप्रयासमपेक्ष्यते तादृगाहारग्रहणे, यथा-भक्त, संयाव, पायस, कृशरा, यवागू, विविधाश्च लड्डुक-सन्देश खीरमोहन-गुलाबजामुन-केकप्रभृतय शर्कराक्षीरयोर्गाविनिर्मिता नानाविधा मधुरपदार्थाश्च। यैश्चाहारजातैश्शरीरमिद पाल्यते प्रीणाति, स्वास्थ्यञ्च लभते तद् भोज्यमिति। "भुज् पालनाभ्यवहारयो" इति धातो. भोज्यमिति रूपम्, तेन शरीरपालने यस्य वस्तुन वैशिष्टय तत्भोज्यशब्दमर्यादागम्यम्। **"भक्ष्यम्"**—भक्ष् अदने (भ्वादि.) इति धातो भक्ष्यमिति रूपम्—भक्षितु योग्य भक्ष्यम्। भक्ष्याणामाहाराणा भक्षणे दन्ताना प्राधान्येन व्यापारो भवति। यथा-शष्कुली, कर्पटिका, आपूप., पैष्टिक, बटक, अमृतफल, द्राक्षा, अक्षोट, बानाद, काजू, पिस्ताप्रभृतयो भक्ष्या भवन्ति। **"चोष्यम्"**—"चूष् पाने" (भ्वादि.) अत्रआम्र, निम्बूक, टमाटर, सन्तरा, लीची, राजादन, तिन्तिडीक आर्द्रकम् एवमादय पदार्था चूषणानन्तर गृहीता भवन्ति। **"लेह्यम्"**—"लिह् आस्वादने" (लेढु योग्य लेह्यम्) इत्यस्य रूपम्। येषामाहाराणा प्रयोजनं रसनावैषयिकमस्ति, तेषामाहरणे न च क्षिप्रता विधीयतेऽपितु ते शनै.-शनै रसास्वादनपूर्वकमभ्यवह्रियन्ते, यथा—खानिष्क:, षाडव, मन्थ, कूर्चिका, दध्यम्ल, तक्राम्ल:, च्यवनप्राशादयोऽवलेहा., कूष्माण्डखण्डादय, लप्सिका, साबूदानाप्रभृतयो लेह्या भवन्ति। **"पेयम्"**—"पा पाने" (पातु योग्य पेयम्) इत्यस्य पेयमिति रूपम्। तेन येषामाहाराणा पानेन ग्रहणं क्रियते तेऽत्र परिगण्यन्ते, यथा-मण्ड-पया-सूप-यूष-शिखरिणी-क्षीरादयो पेया। **"चर्व्यम्"**—"चर्व चर्वणे" इति धातो. रूपम्। चर्व्यं तु दन्तैर्दृढाघातेन पूर्वं जर्जरी क्रियते, ततश्च रसनारसेन सम्मेल्य गलविलव्यापारेणान्ननलिकाया प्रेष्यते, यथा—जव-गोधूम-तण्डुलप्रभृतीना भर्जनम्, पृथुक, चणक-कलायधाना ताम्बूलपूगीफलादय.।

---

१—आदौ फलानि भुञ्जीत दाडिमादीनि बुद्धिमान्।
ततः पेयान् ततो भोज्यान् भक्ष्यान् चित्रान् तत परम्॥
आदावन्ते च मध्ये च भोजनस्य तु शस्यते।
निरत्ययं दोषहरं फलेष्वामलक नृणाम्॥ सुश्रुत० सूत्र० ४६।४६१-६२

२—आहार षड्विध चोष्यं पेयं लेह्यं तथैव च।
भोज्यं भक्ष्य तथा चर्व्यं गुरु विद्याद्यथोत्तरम्॥ योगरत्नाकरः

**स्वादु भोजनम्**—यद् भोजनमेकदा भुक्तं सत् मुहुर्मुहुरभिलषितं स्यात्तत् स्वादु[1] भोजनमाचक्षते । तच्च मन [2] प्रीणाति, शरीरे बलमाधत्ते, हर्षञ्जनयति, धियं नुदति नैरुज्य-मुत्साह गात्रेषु दाढर्यञ्चापादयति । हृद्यं रोचनं समुद्गतरोमाञ्चं सौहित्योपयुक्त सुखजर जीविताभिवर्धनञ्च भवति । [3]रुचीनाञ्च वैलक्षण्यात्ते ते रसा. स्वादुभाव भजन्ते । मजीर-काण्याद्रकशृङ्गवेरसौवर्चलहिङ्गु-निम्बु-तिन्तिडीक-जम्बीराम्रातक-धान्यकादिप्लुतानि षानिष्कानि, राग-षाडव-दध्यम्लादीनि कपित्थ-तक्र-चाङ्गेरी-मरिचाजाजीचित्रकै सुपक्व खडयूषश्च कस्यापि भोजनस्य रोचकत्वजनने स्वादुत्वे च हेतुभूतम् ।

**सात्त्विक भोजनम्**—दोषधातुमलमूलस्य शरीरस्य निर्वहणे यदाहारजात समर्थं स्यात्, तत् सात्त्विकमुच्यते, तच्चायुष्य[4] मनस. प्रकर्षकर बलाधायक परिणामे तदात्वे च सुखद प्रीतिजनक रस्य स्निग्ध स्थैर्यकरं हृद्य रोचन सात्त्विकजनप्रियञ्च भोजन सात्त्विकमुच्यते ।

**आहारकाल.**—आरोग्यकरेषु भावेषु कालभोजनस्य सर्वोत्कृष्ट स्थानमास्ते । ये च काल-भोजन न समाचरन्ति, ते सदातुरा[5] भवन्ति । सामान्यतश्चाहोरात्रव्यापिकाले एककालभोजन प्रशस्तमाख्यातम्, यतो हि कृतस्य भोजनस्य प्रयोगसमसाद्गुण्य हि यथाकालपरिणतिमपेक्षते । सुखेन परिणतिश्चैककालभोजने भवतीति प्रथन्ते शास्त्राणि[6] लोकपुरुषाश्च । दृश्यन्ते किल माथुरचतुर्वेदिनो व्यायामक्षुण्णगात्रा मल्लयुद्धविशारदा यथोचितोपचितसर्वाङ्गसन्निवेशा: दृढा बलशालिनश्च, ते चैककालभोजिनो भवन्तीति दृष्टचरम् । [7]द्वादशस्वन्नप्रविचारेषु चाग्निसन्दीपनाय एककालाहारो निर्दिष्ट । शास्त्रकृद्भिर्यत्रैककालभोजनपरामर्शो विहितस्तत्र

---

१—"भुक्त्वा पुन. प्रार्थयते तदुक्त स्वादु भोजनम्"

२—सौमनस्य बल पुष्टिमुत्साह हर्षण सुखम् ।
स्वादु सञ्जनयत्यन्नम् ॥ सुश्रुत० सू० ४६।४८०

३—दधि मधुर मधु मधुर द्राक्षा मधुरा सितापि मधुरैव ।
तस्य तदेव हि मधुर यस्य मन यत्र सलग्नम् ॥ सुभाषितम्

४—आयु सत्त्वबलारोग्यसुखप्रीतिविवर्धना ।
रस्या. स्निग्धा. स्थिरा हृद्या आहारा सात्विकप्रिया ॥ "गीता"

५—सदातुरा. श्रोत्रियराजसेवकास्तथैव वेश्या सह पण्यजीविभि ।
द्विजो हि शिष्याध्ययनव्रताह्निकक्रियादिभिर्देहहित न चेष्टते ॥
नृपोपसेवी नृपचित्तरक्षणात् परानुरोधाद् बहुचिन्तनाद् भयात् ।
नृचित्तवर्तिन्युपचारतत्परा मृजाविभूषानिरता वराङ्गना ॥
सदासनादत्यनुबन्धविक्रयक्रयादिलोभादपि पण्यजीविन. ।
सदैव ते ह्यागतवेगनिग्रह समाचरन्ते न च कालभोजनम् ॥
अकालनिर्हारविहारसेविनो भवन्ति येऽन्येऽपि सदातुराश्च ते ॥
चरक० सिद्धि० ११।३० ३३

६—एककालभोजन सुखपरिणामकराणाम् ॥ चरक० सूत्र० २५।४०

७—सुश्रुत० उत्तर० ६४।५६

केवलं सुखपरिणामतामात्रमेव लक्ष्यीकृतम् । अतश्च ये नरा समाग्नयो भवन्ति, ते तु नैक-कालभोजनेन शरीरयात्रानिर्वहण कर्तुं शक्ष्यन्ति, न च सौहित्य वल निद्रादिक वा लभेरन् यथेष्टम् । एतस्माच्च कारणात् तथाविधानामुभय[1] कालभोजन युक्तम् ।

**भोजनवेला**—दिवा[2] रात्रौ वा प्रथमप्रहरान्तरे नैवाहारमाचरेत् । तदानी हि न जागर्ति बुभुक्षा, न च रसोत्पत्तिरुद्रिक्ता भवति, अपि तु द्वितीये प्रहरे भोजनमाचरेत् । स च कालः नव (९) वादनादारभ्य द्वादश (१२) वादनाभ्यन्तर एव । तदा ह्यभोजनेन शक्तिर्व्येति, करणा-सामर्थ्यमुपजायते निरिन्धनश्चाग्निर्मन्दता व्रजति ।

**दीप्ताग्नीनामन्नकालः**—ये तु [3]प्रदीप्ताग्नयो भवन्ति न ते बुभुक्षा सहन्तेऽस्तेषा कृते न कालनियमोऽस्ति, यदेव बुभुक्षिता जागृयात् तदेव ते भोजन गृहीतुमर्हन्ति । ते किलार्धरात्रेऽपि भुञ्जाना नाभिभूयन्तेऽजीर्णविकारै ।

**वास्तविकोऽन्नकाल**—विण्मूत्रे यथोचितरूपेण विसृष्टे, उद्गारशुद्धौ, अशनायापिपासाद्यु-पगमे, पूर्वाहारे सम्यग्जीर्णे, [4]रसदोपमलेषु च यथागथ पाक गतेपु भोजनकाल विद्यात् । यदा च समस्तमिन्द्रियग्राम स्वस्वविषयेपु प्रवण भवति, शरीरञ्चालस्यतन्द्राविरहित भवति न च हृत्-कण्ठदाहो धूमगन्धिता वा गलप्रदेशे, वायवश्चानुलोमभावमापन्ना , न च देहे काचित्पीडानुभूति , कुक्षिदेशश्च बुभुक्षोदयात् शिथिला भवति अन्न पति च श्रद्धा समुदीरिता चेत्तदाऽऽहारकाल[5] इति विजानीयात् । ( अयमावस्थिक काल ) ।

**ऋतुमधिकृत्य भोजनकाल**—येषु दिवसेषु [6]रजन्योऽतिदीर्घा भवन्ति, तेषु कालवलप्रवृत्त-दोषाननुगुणं भोजन सपादे यामे प्रातरेव कुर्यात्, यथा हेमन्ते शिशिरे च । येषु च ऋतुषु दिवसा[7] दीर्घा भवन्ति, तेषु ऋतुपु तु तत्कालोचित द्रवस्निग्धमधुरप्रायमशनमपराह्णे एव सार्धतृतीययामानन्तर विदध्यात् । यथा-ग्रीष्मे प्रावृषि च । येषु च ऋतुपु रात्र्यो दिवसाश्च समप्रमाणा.

१—समाग्नये तथाहारो द्विकालमपि पूजित । सुश्रुत० उ० ६४।६२

२—याममध्ये न भोक्तव्य यामयुग्म न लङ्घयेत् ।
याममध्ये रसोत्पत्तिर्युग्मेऽतीते बलक्षय ।। योगरत्नाकर

३—अर्धरात्रेऽपि भुञ्जान. परमार्थं बुभुक्षित. ।
क्षुधी वैद्यपरित्यागी व्याधिभिर्नाभिभूयते ।। वृन्दमाधव

४—क्षुत्संभवति पक्वेषु रसदोपमलेषु च ।
काले वा यदि वाऽकाले सोऽन्नकाल उदाहृत. ।। योगरत्नाकर.

५—विसृष्टे विण्मूत्रे विशदकरणे देहे च सुलघौ
विशुद्धे चोद्गारे हृदि सुविमले वाते च सरति ।
तथान्नश्रद्धाया क्लमपरिगमे कुक्षौ च शिथिले
प्रदेयस्त्वाहारो भवति भिषजा काल स तु मत ।। सुश्रुत० सूत्र० उ० ६४।८४

६—अतीवायतयामास्तु क्षपा येष्वृतुषु स्मृता. । तेषु तत्प्रत्यनीकाढ्य भुञ्जीत प्रातरेव तु ।।

७—येषु चापि भवेयुश्च दिवसाभृशमायताः । तेषु तत्कालविहितमपराह्णे प्रशस्यते ।।
सुश्रुत० सूत्र० ४६।४६८-६९

( शरदि वसन्ते च ) तेषु द्विकालभोजनविधानानुमतेन कालेन भोजनं कुर्वीत। दिवा नव ( ९ ) वादनादारभ्य द्वादश ( १२ ) वादनाभ्यन्तरे रात्रावपि नव ( ९ ) वादनादारभ्य द्वादश ( १२ ) वादनाभ्यन्तरे भोजनं [1]समकालविभागेनाहोरात्रस्य प्रशस्यते। अयमार्तव आहारकाल उक्तो भवति।

**अकालभोजने हानिः**—पूर्वकृते भोजनेऽजीर्णे देहेऽलघौ आहारकालात्पूर्वमेव यो भोजन करोति स नरोऽजीर्णजन्यैस्तैस्तैर्व्याधिभिरभिभूयतेऽथवाऽलसक-विलम्बिका-विशूकादिभिरुपद्रुत' प्रत्याख्येयता व्रजतिमरण वानियच्छति।[2] भोजनकालमतिक्रम्य[3] विलम्बेन भोजने कृते तु वायुरुपहन्ति जाठरमनलम्। मार्दवमुपगते चाग्नौ जाठरे, कृतस्याशनस्य न सम्यग्भवति पाक। तथा हि चतुर्विधस्याजीर्णस्यायतनत्व भजतेऽतीतकालाहार, आलस्याध्मानाङ्गसादादयश्च जायन्ते, न च द्वितीये काले जागर्ति बुभुक्षा।

**आहारविधिविशेषायतनानि**—नहि सर्वाणि शरीराणि समानाहारविहारसात्म्यानि भवन्ति, न च सर्वस्याहारस्य हितत्वमहितत्वं वा आहारयत्तमेव। तत्र हि विधिविनिर्मितस्याप्याहारस्य हितत्वेऽहितत्वे वाऽष्टौ कारणानि भवन्ति, तानि किल आहारविधिविशेषायतनानि कथ्यन्ते तद्यथा—प्रकृति-करण-सयोग-राशि-देश-काल-उपयोगसस्थोपयोक्तार।

**तत्र "प्रकृतिः"**—आयुर्वेदे सर्वाणि द्रव्याणि पाञ्चभौतिकान्यभिमतानि। तत्र पृथ्वीसोमगुणबहुलानि गुरूणि वाय्वग्निगुणबहुलानि च लघूनि भवन्ति। यैश्च भूतैर्येषामाहारद्रव्याणामुद्भव, तानि द्रव्याणि स्वजनकभूतानुगुणान्येव भवन्ति। एव हि द्रव्याणामुत्पत्तिसमये येनांशेन यद्भूतसंसर्गो भवति, तदनुसारेण द्रव्येषु तेते गुणा जायन्ते। यथा—माषे गुरुत्व, मुद्गे लघुत्व, शूकरे गुरुत्वमेणे लघुत्वम्, स एष द्रव्याणा स्वाभाविको गुरुत्वादिर्गुण प्रकृतिशब्दवाच्य.।

**"करणम्"**—द्रव्येषु ये स्वाभाविका (प्राकृता.) गुर्वादयो गुणा भवन्ति, तेषा गुणानामन्यथाकरणम्—प्राकृतगुणमुपहृत्य गुणान्तरोपजननम्—[4]करणमित्युच्यते। गुणान्तरोत्पत्तिश्च जलेन, वह्निना, प्रक्षालनेन, आलोडनेन, देशभेदेन, वासनेन भावनया, कालयापनेन, पात्रविशेषेण च क्रियते। तद्यथा—जलप्रक्षालनादग्निसंयोगाच्च तण्डुलस्य गौरवमपनीय तत्र (ओदने) लघुत्वं जायते। शोथकृदपि दधिआलोडनेन शोथघ्नं जायते। रसायनौषधेषु भस्मराशेरध.स्थापनेन तत्र गुणान्तर समुत्पद्यते। जलस्य सुगन्धिपुष्पयोगात् सौगन्ध्यमुपजायते वासनेन।

---

१—रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः।
कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम्॥

२—अप्राप्तकाल भुञ्जान. शरीरे ह्यलघौ नरः।
तास्तान् व्याधीनवाप्नोति मरण वा नियच्छति॥

३—अतीतकालं भुञ्जानो वायुनोपहतेऽनले।
कृच्छ्राद्विपच्यते भुक्तं द्वितीयं च न काङ्क्षति॥ सुश्रुत० सूत्र० ४६।४७०-७२

४—करणं पुन' स्वाभाविकाना द्रव्याणामभिसंस्कारः, संस्कारो हि गुणान्तराधानमुच्यते, ते गुणाश्च तोयाग्निसन्निकर्षशौचमन्थनदेशकालवासनभावनादिभि. कालप्रकर्षभाजनादिभिश्चाभिधीयन्ते। चरक० विमान० १।२७

गोमूत्रभावनया तुत्थस्य वामकत्वादि दोषा अपह्रियन्ते। आसवा. मासाज्जातरसा भवन्ति कालयापनेन। चित्रककल्कलिप्ते मृत्पात्रे जात दधिग्रहणीदोषहर भवति पात्रवैशिष्ट्यात्। एवमेव स्वेदनमर्दनमूर्च्छनपेषणादिभि' कर्मभिर्द्रव्याणा दोषा दूरी क्रियन्ते गुणाश्चाधीयन्ते। एव कस्मिन्नपि द्रव्ये यथास्वगुणापादनार्थं सस्करण करणशब्देनोच्यते।

**"संयोगः"**—द्वयोर्द्रव्ययोरनेकेषा वा द्रव्याणामेकत्र मेलन सयोग[1] इत्युच्यते। स च सयोग. सयुज्यमानद्रव्येषु किमपि विशिष्ट गुणमुत्पादयति, यच्च न हि तेष्वेव द्रव्येष्वसंयुज्यमानेषु लक्ष्यते। सयोगस्तु संयुज्यमानद्रव्याणा प्राधान्येन मेलको भवति। अत एव स्वगुणातिरिक्त किमपि नवीनं गुणं समुत्पादयति।

**"राशिः"**—राशि[2]शब्देन प्रमाणमुच्यते, तच्च प्रमाणं द्विधा गृह्यते–प्रथमतस्तावद् यथा-भक्त-सूप-व्यञ्जन-मोदक-फल-क्षीराद्याहार्याणा मध्ये कस्य वस्तुन. कियती मात्राऽपेक्ष्यते इत्यविचार्यैव समुदायादेवाहारमात्राया ग्रहणम्। एतस्यामवस्थाया हि न चिन्त्यते पृथक्पृथङ्मान भोजनद्रव्याणामपि तु एकपिण्डेन ग्रहण भवति। स च सर्वग्रह उच्यते—येन केनाचिदाहारेण सम्पूर्णाहारमात्राग्रहणमिति यावत्। परिग्रहस्त्वपरो यत्र नियतमानेन सम्पूर्णाहारावयवेन भोजनमात्रानियमनं, यथाभक्तस्य २०० ग्रामा, सूपस्य १०० ग्रामा, व्यञ्जनस्य ५० ग्रामा, घृतस्य २० ग्रामाः, दध्नः १०० ग्रामा., क्षीरस्य २५० ग्रामा। राशिविचारप्रयोजनञ्च-आहारमात्रायाः शुभाशुभपरिणामज्ञापनार्थम्। मात्रापूर्वक सर्वस्याहारस्य प्रत्येकावयवग्रहण सर्वरसाभ्यसनं शरीरारोग्याय कल्पते।

**देशः**[3]—स च द्विविधो भूमिर्भोक्ता च, भूमिविचारेण च द्रव्याणा गुणागुणविचार क्रियते। यथा-प्रशस्तदेशोत्पन्नमौषध गुणवद् भवति। एवञ्च वल्मीककुत्सितानूपादिदेशजमौषधं हीनगुण भवति। जाङ्गलाना बहुप्रचरणशीलाना प्राणिना मास लघु भवति आनूपजाना तु गुरु भवति। देशगुण विपरीतश्चाहार. सात्म्यो भवति, यथा–आनूपे उष्णरूक्षादि, जाङ्गले शीतस्निग्धादि। भोक्तुश्च जन्मस्थानवशेनौकसात्म्य भवति, किञ्च तस्योपशेते, किञ्च नोपशेते इति विचारणार्थं देशविचार. क्रियते।

**कालः**[4]—स चापि द्विविध—एकोऽहोरात्रादिरूपोऽपरश्च बाल्य-यौवन-वार्धक्य-रोगित्वादिरूप.। आहारविधौ द्विविध एव कालोऽवश्यमेव विचारणीयो भवति। तत्राहोरात्रादिरूपकालविचारे ऋतुचर्योदिताहारविधिर्विधेय., आवस्थिककालविचारे तु–"बाल्ये विवर्धते

---

१—संयोगस्तु द्वयोर्बहूना वा द्रव्याणा संहतीभावः, स विशेषमारभते यं नैकैकशो द्रव्याण्यारभन्ते, तद्यथा-मधुसपिषोर्मधुमत्स्यपयसा च सयोगः। च० वि० १।२८

२—राशिस्तु खलु सर्वग्रहपरिग्रहौ मात्रामात्रफलविनिश्चयार्थ.। तत्र सर्वस्याहारस्य प्रमाणग्रहणमेकपिण्डेन सर्वग्रह', परिग्रह' पुन. प्रमाणग्रहणमेकैकत्वेनाहारद्रव्याणाम्। सर्वस्य हि ग्रहः सर्वग्रह', सर्वतश्च ग्रह परिग्रह उच्यते। चरक० विमान० १।२९

३—देश पुन स्थानम्, स द्रव्याणामुत्पत्तिप्रचारौ देशसात्म्यञ्चाचष्टे।

४—कालो हि नित्यगश्चावस्थिकश्च, तत्रावस्थिको विकारमपेक्षते नित्यगस्तु ऋतुसात्म्यापेक्षः। चरक० विमान० १।३०-३१

श्लेष्मा यौवने पित्तमेव च" तथा ज्वरादिरोगप्रसङ्गानुरूपं पथ्यकल्पनं क्रियते। एवञ्चाहार-नियमनार्थमृतुसात्म्यमवस्थासात्म्यञ्च विचार्यम्, उभयत्रापि दोषरसभेदकल्पनमपरिहार्यमस्ति।

**"उपयोगसंस्था"**[1]—आहारग्रहणे प्राधान्येन परिहरणीयमध्यशनम्। विषमाशनञ्च सर्वापत्कारणमुपजायते। जीर्णे च पूर्वाहारे हित मित मात्रावद्यथाकाल तन्मना भूत्वा बुभुक्षितोऽन्नमश्नीयात्। एवञ्चोद्गारशुद्ध्यादिजीर्णाहारलक्षणे जाते चाहारोपयोगो विधेय इत्यादिनियम एवोपयोगसस्थाशब्दार्थ ।

**"उपयोक्ता"**[2]—भोक्तृजनस्याभ्याससात्म्यमपेक्ष्यैव तत्कृते भोजनोपकल्पन विधेय भवति। केचिदभ्यसनध्रुवा वर्तन्ते ये क्षीराशिन. फलाशिन मधुराशिन सात्विकाहारा वा भवन्ति केचिच्च लवणसात्म्या केचिदलवणाहारभोजिनो भवन्ति। अतश्च सामान्यनियमेन तत्तन्मानवानामुपशयमनुसृत्यैवाहारविधिर्विधेय , यतो हि पथ्यमपि भोजनमनभ्यासादपथ्यमिव भवति कस्यचनोपभोक्तु.। एवञ्चाहारस्य हिताहितज्ञानार्थमावश्यक प्रकृत्यादिज्ञानम्[3]। न चाज्ञानत: प्रमादाद्वा तदात्वमात्रप्रिय परिणामेऽजीर्णविभ्रमकरमहितमाहार कथञ्चिदपि ग्राह्यम्।

**आहारविधिविधानम्**[4]—आत्मनोऽग्निबल समीक्ष्य, हितमहितञ्च सम्यगवधार्य, आहारविधिविशेषायतनानि परीक्ष्य, दोष-देश बल-काल-शरीर-सात्म्य-सत्त्व-प्रकृति-वयासि, द्रव्याणा च रसगुणवीर्यादीनि च सम्यगवेक्ष्य, उष्ण स्निग्ध प्रशस्तमात्र, कुक्षिभागद्वयपूरण-मविरुद्धवीर्यं, मनोरमे स्थाने मनोऽनुकूलोपकरण नातिशीघ्रेणाब्रुवन्नहसन्, तन्निविष्टचेता., सुप्रसन्न , प्रियै. वयस्यै सहित , सुवेष , सुसुरभि , दधिसर्पिर्युत सञ्चार्यमाणव्यजनानिलं, वाद्यमानविविधवाद्ययन्त्र, जेगीयमानमानसोल्लासमस्र मधुरमधुर गीत कमनीयकान्ताकरोपन्यस्तं सौमनस्योपहृतमाहारमुपसेवेत।

**उष्णं** हि भोजन जाठर वह्निमुद्दीपयति, शीघ्र विपच्यते, न चाध्मानादिकर भवति, वातानुलोमकत्वादुष्णाहारस्य। स्निग्ध भोजन सुस्वादु वातानुलोमनञ्च भवति, शरीरे च बल-वर्णोपचयकर भवति। मात्रावद्भुञ्जीत-आहारमात्रा च प्रतिव्यक्ति भिद्यते। एकस्य वा व्यक्ति-विशेषस्य ऋतुभेदेन वयोभेदेन च हेमन्ते यौवने चाग्निर्विवृद्धो भवति, वर्षासु वार्धक्ये च वह्निर्मन्दता व्रजति, तेन कस्यापि जनस्य मात्रा न नियता, अपि तु नित्यगमावस्थिकञ्च कालम-पेक्ष्य तत्कालकृतमग्निबल च ज्ञात्वा मात्राया निर्धारण विधेयम्।

**मात्रावदाहारस्य लक्षणम्**—यावन्मात्रेणाहारेण नचामाशयपीडा भवेत्, हृदयगतिबाधा-नोत्पद्यते, पार्श्वयोर्भारवृद्धि न स्यात्, उदरेऽतिगौरव न प्रतीयेत, इन्द्रियाण्यर्थग्रहणसमर्थानि स्यु:, क्षुधापिपासे तृप्ते स्याताम्, उत्थाने गमने शयनोपवेशनयो. प्रश्वासोच्छ्वासयो , वार्तालापे हासे च

१—उपयोगसंस्था तूपयोगनियम , स जीर्णलक्षणापेक्ष.।

२—उपयोक्ता पुनर्यस्तमाहारमुपयुङ्क्ते, यदायत्तमोकसात्म्यम्।

३—एषा विशेषा शुभाशुभफला परस्परोपकारका भवन्ति तान् बुभुत्सेत्। बुद्ध्वा च हितेप्सुरेव स्यात्, न मोहाद्वा प्रमादाद्वा प्रियमहितमसुखोदर्कमुपसेव्यमाहारजातमन्यद्वा किञ्चित्।
चरक० विमान० १।३२-३४

४—उष्णं स्निग्ध मात्रावज्जीर्णे वीर्याविरुद्धमिष्टे देशे इष्टसर्वोपकरणं नातिद्रुत नातिविलम्बित-मजल्पन्नहसंस्तन्मना भुञ्जीतात्मानमभिसमीक्ष्य सम्यक्। चरक० विमान० १।३८

निर्बाधं प्रवृत्तिर्भवेत्, सायमशने कृते प्रातः, प्रातश्च भुक्ते सायं क्षुधानुवृत्तिर्भवेत्, शरीरे बलवृद्धिर्भवेत्, एवञ्च यावता भोजनेन एते समुदिताः गुणा उपलभ्यन्ते तावदेवाहारपरिमाण साधु विजानीयात् । हीनमात्रं भोजन धातूना ह्रासकरं बलवर्णाद्युपघातकं भवति, सर्वविधानाञ्च वातरोगाणा कारणम् । अतिमात्रभोजन तु सर्वानेव दोषान् प्रकोपयति । प्रदुष्टापक्वाहाररसबद्धमार्गाश्च तिर्यग्गच्छन्तो दोषा विसूचिकामलमक दण्डालसक बिलम्बिका वा जनयन्ति, रोगानीकस्य च पृष्ठभूमिमुपस्थापयन्ति ।

पूर्वाहारे जीर्णो पुनर्भोजनमाचरेत्, नो चेद् भोजनमपरिपक्वेन पूर्वाहारेण मिश्रीभूय सर्वानेव दोषान् प्रकोपयति, धातूंश्च दूषयति । वातादीनाञ्च प्रातिलोम्यादुदरावर्तादिविभ्रमा जायन्ते, अतो हि जीर्ण एवाश्नीयात्, तदा हि बुभुक्षा स्यादग्निश्चोदीर्णोभवेद् वातश्चानुलोमः स्यात् । दोषाश्च स्वस्थानेषु तिष्ठेयुः । तथा च—

**प्रसृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे**
**विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति ।**
**तथाग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ**
**प्रयुञ्जीताहार विधिविनियतः कालः स हि मतः ॥** अष्टाङ्गहृदयम् सूत्र० ८

**अविरुद्धमन्नं भुञ्जीत**—वातादिदोषाणा रसादिधातूनाञ्च विपरीतानि द्रव्याणि शारीरधातुभिर्विरोधमापद्यन्ते । विरोधश्च विरुद्धगुणसयोगाद्भवति, यथा—मत्स्यपयसो सहोपयोगो विरुद्धः । कानिचिच्च द्रव्याणि सयोगाद् विरुद्धानि जायन्ते । कानिचित् सस्कारादभूमिभेदाद्देहभेदात् कालभेदान्मात्राभेदात् स्वाभाविकरूपेण वा विरुद्धभाव भजन्ते । विरुद्धद्रव्याणि च नानाविधैरामयैरुपतापयन्ति, तस्मान्न विरुद्धमन्न गृह्णीयात् । सुरुचिपूर्णे जनासकीर्णे मनोज्ञे स्थाने सर्वतश्च सुरक्षिते स्थानेऽशन कुर्वीत ।

**नातिद्रुतमश्नीयात्**—शीघ्रतया भोजनेन भोजनस्योन्मार्गगमनमचर्वणमामाशये च न सम्यगधिष्ठानमाहारस्य भवति । भोजनस्यास्वादोऽपि न सम्यगनुभूयते । भोज्यगताना विजातीयद्रव्याणा शर्करामृत्केशकाष्ठकणादीना मुखगह्वरगतानामपसारण न शक्यते कर्तुं द्रुताशनस्थितौ ।

**नातिविलम्बितमश्नीयात्**—विलम्बेन शनैः-शनैर्भोजनं यदि क्रियेत, तदा शीतीभवति भोजनम् । कदाचिच्चान्ने श्वासपथे प्रसृते प्राणसकटो जायते । अन्यमनस्कतायाञ्च त एव दोषा भवन्ति, तस्मात्तन्मना भुञ्जीत । भोजनकाले च न जल्पेत्, न हसेत्, न वा प्रव्रजनमाचरेत् ।

एवञ्च पूर्वोक्तेषु सन्दर्भेषु नातिविस्तरेण शरीरागारधारणोपस्तम्भभूतस्याहारस्य विषये जिज्ञास्यं ज्ञानजात प्राकाश्यमानीतम् । वर्णितदिशा युक्तियुक्तैराहारैरुपस्तब्धमिद शरीर यावदायुर्बलवर्णोपचयोपचितमनुवर्तते । अतश्च "शरीरमाद्यं खलु धर्मसाधनम्" । इति कविकुलगुरोर्कालिदासस्य सुभाषितं हृदयङ्गम विधाय—

**नगरीनगरस्येव रथस्येव रथी यथा ।**
**स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ॥**

विशेषतश्चाहारविधिविधाने ।



लघुग्रन्थमाला-२१

श्रीनित्यनाथविरचिता

# सिद्धसिद्धान्तपद्धतिः



सम्पादकः

श्रीजनार्दनशास्त्री पाण्डेयः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वै० सं० २०३१

# विषयानुक्रमणिका

## प्रथमोपदेशः



## द्वितीयोपदेशः—पिण्डविचारः

## तृतीयोपदेशः–पिण्डसाधनम्





श्रीः

# प्रस्तावना

'सिद्धसिद्धान्तपद्धति'नामकग्रन्थस्य रचयिता श्रीगोरक्षनाथः सर्वप्रसिद्धः, ब्रिग्स महाशयेन नित्यानन्दविरचितोऽयमिति लिखितम्, 'गोरक्षसिद्धान्तसंग्रहस्य' सम्पादनकाले मयावलोकितं यत् तत्र नित्यनाथविरचितायाः सिद्धसिद्धान्तपद्धतेर्ये श्लोका उद्धृतास्ते गोरक्षनाथविरचितायां नोपलभ्यन्ते, एतत्प्रसङ्गेनान्वेषणे सरस्वतीभवनग्रन्थालये पुस्तकद्वयमुपलब्धं नित्यनाथविरचितायाः सिद्धसिद्धान्तपद्धत्याः। तदेव सपाद्य लघुग्रन्थमालाया प्रकाश्यते, गोरक्षनाथविरचितायामस्यां च कियान् भेद इति तत्र तत्र टिप्पण्या प्रदर्शितम्।

अयञ्च नित्यनाथो भारतीयपरम्पराया तेषु परमसिद्धेषु परिगण्यते ये इममेव देहं योगसाधनया रससाधनया वाऽजरममरं च विधाय कालदण्डं सर्वथा विनिर्जित्याणिमाद्यष्टैश्वर्यसम्पन्ना भूत्वा सर्वदा लोकेषु विचरन्ति, यथाचोक्तं हठयोगप्रदीपिकायाम्—

"श्री आदिनाथमत्स्येन्द्रसागरानन्दभैरवाः" इत्यारभ्य
काणेरी पूज्यपादश्च नित्यनाथो निरञ्जनः।
इत्यादयो महासिद्धा हठयोगप्रसादतः
खेदयित्वा कालदण्डं ब्रह्माण्डेषु चरन्ति ते॥ इति
(हठ० प्रदी० १-६)

अयमेव सुप्रसिद्धस्य "रसरत्नाकरा"ख्यस्य रसशास्त्रीयग्रन्थस्यापि प्रणेतेति न तिरोहितं विपश्चिताम्, यद्यपि श्रीगोरक्षनाथेन ये ये विषया स्वीयसिद्धसिद्धान्तपद्धतौ प्रतिपादितास्त एवानेनापि संक्षेपेण विवेचितास्तथाप्यत्र किंचिद्वैशिष्ट्यमिति तु विचक्षणैरधीत्यावधेयमिति निवेदयति।

—जनार्दनशास्त्री पाण्डेयः

श्रीः

श्रीनित्यनाथविरचिता

# सिद्धसिद्धान्तपद्धतिः

**सम्पादकः, श्रीजनार्दनशास्त्री पाण्डेयः**

**सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयसरस्वतीभवनग्रन्थालयस्थः**

**श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः। श्रीगुरुभ्यो नमः।**

ॐ पिण्डोद्धारण वेदार्थशास्त्रार्थं योगकर्म कथ्यते, कर्मखण्ड ज्ञानखण्ड तत्त्वखण्डं निरञ्जन [ चेति ] चतुर्विधोऽष्टाङ्गयोग ।

**न ब्रह्मा विष्णुरुद्रा न सुरपतिसुरा नैव पृथ्वी न चापो**
**नाग्निर्वायुर्न च गगनतलं नो दिशा [ शो ] नैव काल ।**
**नो वेदा नैव यज्ञा न च रविशशिनो नौषधिर्नैव कल्पः**
**स्वं ज्योतिः सत्यमेकं जयति तव पदं सच्चिदानन्दमूर्ते ॥ १ ॥**

आदिदेवं महादेवं शक्तियुक्तं जगद्गुरुम् ।
तं वन्दे नित्यतो वक्ष्ये सिद्धान्तं[१]च्चानुभावत ॥ २ ॥
आदिनाथं महासिद्धं शक्तियुक्तं जगद्गुरुम् ।
तं वन्दे नित्यतो वक्ष्ये सिद्धसिद्धान्तपद्धतिम्[२] ॥ ३ ॥

पिण्डोत्पत्त्या [दय ] सिद्धमते सम्यक् प्रसिद्धा । पिण्डोत्पत्ति , पिण्डविचार , पिण्डसमति [ संवित्ति ], पिण्डाधार , पिण्डपरमपदसमरसभूतत्वम्, नित्यावधूताना राजयोगादिरनुभाव ।

**अथ कर्मखण्डम्**

**यदा नास्ति स्वयं कर्ता कारणं द्वयमद्वयम् ।**
**अव्यक्तं च परं ब्रह्म अनाम विद्यते तदा ॥**
**यदा नास्ति स्वयं कर्ता कारणं न कुलाकुलम् ।**
**अव्यक्तं तत्परं ब्रह्म अनाम विद्यते तदा ॥**

अनामेति स्वयं ब्रह्मानादिससिद्धमेव सिद्धसिद्धान्ते प्रसिद्धम् । तस्येच्छामात्रं धर्माधर्मौ निजा शक्ति प्रसिद्धा, तत उन्मेषमात्रेण पराख्या शक्तिरुत्थिता । ततः स्पन्दनमात्रेणापरा शक्तिरुद्गता । ततोऽहंतार्थवृद्धिमात्रेण सूक्ष्मा शक्तिरुत्पन्ना ततो वेदनशीलाया कुण्डलिनी [शक्ति] रुद्गता ।

---

१. सिद्धः = निश्चितः ( न तु केनचित् प्रमाणेन साधनीय ) अन्तः = चरम ( यतोऽनन्तर न किमप्यन्यन्निर्णेयं भवति ) यस्य तम् ।

२. सिद्धानाम् = ऋतम्भरा प्रज्ञामधिरूढाना सिद्धान्तः, तस्य पद्धतिः = सरणिः, ताम् ।

अथ पञ्चगुणा निजा शक्ति —१. नित्यता, २. निराकारता[1], ३. निष्पन्दता, ४. निराभासता, ५. निरुत्थानता । इति ।

अथ पञ्चगुणा परा शक्ति —१ अस्तिता, २ अमेयता, ३ अभिन्नता, ४ अनन्तता, ५ अव्यक्ता [अव्यक्तता] । इति ।

अथ पञ्चगुणा अपरा शक्ति· –१ स्फुरता, २. स्फुटता, ३. स्फूर्यता, ४. स्पन्दता[2], ५. स्फूर्तिता । इति ।

अथ पञ्चगुणा सूक्ष्मा शक्ति.—१ निरस [श] ता, २ निश्चेतनता[3], ३. निश्चलता, ४. निर्विकल्पता, ५ निश्चयता । इति ।

अथ पञ्चगुणा कुण्डलिनी शक्ति —१. पूर्णता, २ प्रतिबिम्बिता, ३ प्रबलता, ४. प्रचलता, ५. प्रत्यङ्मुखता । इति ।

एवं शक्तिमत्त्व [तत्त्व] पञ्चविशतिगुणम् । योगात्परपिण्डोत्पत्ति । उक्तञ्च—

**निजा पराऽपरा सूक्ष्मा कुण्डलिनी च पञ्चधा ।**

**तासु शक्तिक्रमेणोक्तो जात पिण्ड पर शिव ॥ इति ।**

[स च पञ्चधा] १. महात्मा[4], २ परमात्मा, ३ परमपदम्, ४. शून्यम्, ५. निरञ्जनञ्च । इति ।

अथ पञ्चगुणो महात्मा[5]—१ अकारत्वम्, २ अनुपमत्वम्, ३ अपरत्वम्[6], ४. अमूर्तत्वम्, ५. अनुदयत्वम् । इति ।

अथ पञ्चगुण. परमात्मा[7]—१ निष्कलत्वम्, २. अगोचरत्वम्[8], ३ अचलत्वम्, ४. अक्षरत्वम्[9], ५. असङ्ख्यत्वम् । इति ।

अथ पञ्चगुण शून्यम्—१. लीनता, २. पूर्णता, ३ उन्मनी, ४ मूर्च्छा, ५. कल्पना[10] । इति ।

अथ पञ्चगुण निरञ्जनम्—१. सत्यत्वम्, २ समरसत्वम्, ३ सावधानत्वम्, ४. सर्वगतत्वम्, ५. सर्वव्यापकत्वम्[11], इति ।

अथ पञ्चगुण परमपदम्[12]—१. अक्षयत्वम्, २. अभेद्यत्वम्, ३ अच्छेद्यत्वम्, ४. अविनाशित्वम्, ५. अदाह्यत्वम् । इति ।

इत्यनादिपिण्डस्य पञ्चतत्त्व-पञ्चविशतिगुणाः । अनादित· परमानन्द , परमानन्दात्प्रबोध , प्रबोधाच्चिदुदय , चिदुदयाच्चित्प्रकाश , चित्प्रकाशात्सोऽहंभाव. ।

---

१. निरञ्जनता–इति गोरक्षनाथ । २. स्फारता, स्फोटता चेति–गोरक्ष. । ३. निरन्तरता–इति गोरक्षः । ४. अपरम्परं परमपद शून्यं निरञ्जन परमात्मा चेति—गोरक्षः । ५ अकलङ्कत्वम्—इति गोरक्ष । ६ अपरम्परम्—इति गोरक्ष । ७ परमपदम्—इति गोरक्षः । ८. अणुतरत्वम् । ९ अनाधारत्वम्—इति गोरक्ष· । १० लोलता—इति गोरक्ष । ११. सर्वगतत्वम्—गोरक्ष· । १२. परमात्मा—इति गोरक्षः ।

अथ पञ्चगुण परमानन्द —१ सादन,[1] २ हर्ष, ३. उन्माद, ४. निष्पन्द, ५ नित्यमुखत्वम् । इति ।

अथ पञ्चगुण प्रबोध —१ उदय, २ उल्लास, ३. अवभास, ४. विकास, ५. प्रभा । इति ।

अथ पञ्चगुणश्चिदुदय —१ सद्भाव, २ विचार, ३. कर्तृत्वम्, ४ स्वतन्त्रत्वम्, ५ निस्पृहत्वम्[2] । इति ।

अथ पञ्चगुण प्रकाश —१ निर्विकारत्वम्, २ निष्कलत्वम्, ३. सबोधत्वम्,[3] ४. समता, ५ विश्रान्ति । इति ।

अथ पञ्चगुण सोऽहभाव —१. अहन्ता, २ अखण्डैश्वर्यम्, ३ स्वात्मता, ४ अनुभवसामर्थ्यम्,[4] ५ सर्वज्ञता इति ।

परमानन्द प्रबोधश्चिदुदयश्चित्प्रकाश सोऽहमित्यन्त ।
मध्यपिण्डो महातत्त्वैर्गुणैरुक्त समुत्थित ॥

अथ आद्यान्महाकाश, महाकाशान्महावायु, महावायोर्महातेज, महातेजात् [तेजसो] महासलिलम्, महासलिलान्महापृथ्वी ।

अथ पञ्चगुणो महाकाश —१ अवकाश, २ अच्छिद्र, ३ अस्पर्श, ४ नीलवर्ण, ५ शब्द । इति ।

अथ पञ्चगुणो महावायु —१ सचार, २. चलनम्[5], ३. स्पर्शनम्, ४. शोषणम्, ५. धूम्रवर्णत्वम् । इति ।

अथ पञ्चगुण महातेज —१. दाहकत्वम्, २. पाचकत्वम्, ३ उष्णत्वम्, ४. प्रकाशकत्वम्, ५. रक्तवर्णत्वम् । इति ।

अथ पञ्चगुणं महासलिलम्—१ प्रवाह, २. आप्यायनम्, ३. द्रव, ४. रसत्वम्, ५ श्वेतवर्णत्वम् । इति ।

अथ पञ्चगुणा महापृथ्वी—१ स्थूलत्वम्, २. नानाकारत्वम्, ३. काठिन्यम्, ४. गन्धत्वम्, ५. पीतवर्णत्वम् । इति ।

इति महासाकारपिण्डस्य पञ्चमहातत्त्वेषु पञ्चविंशतिगुणा, [6]स एव शिव, शिवाद्भैरव., भैरवाच्छ्रीकण्ठः, श्रीकण्ठात् सदाशिव, सदाशिवादीश्वर., ईश्वरादिन्द्र.[7], इन्द्राद्विष्णुः, विष्णोर्ब्रह्मा एवं साकारपिण्डस्य मूर्त्यष्टकम् ।[8]

तस्य ब्रह्मण[9] त्रिगुणात्मकस्वरूपस्य सच्चिदानन्दस्वरूपेण शक्तिशिवयोर्भवति सान्निध्यम्, साक्षाद्बिन्दुनादसंयोग, तन्मध्यान्नानाचित्रो [ चित्राण्यु ] त्पद्यन्ते, स्वेदजाण्डजजरायुजोद्भिज्जं

---

१. स्पन्द —इति गोरक्ष । २ ज्ञातृत्वम्—इति गोरक्ष । ३ निर्विकल्पत्वम्—इति गोरक्ष । ४. विश्वानुभवसामर्थ्यम्—इति गोरक्ष । ५ सचालनम्—इति गोरक्ष । ६ स एव = महासाकारपिण्ड एवेत्यर्थ । ७ रुद्र—इति गोरक्ष । ८. एतेन देवसृष्टिर्निरूपितेति विभाव्यम् । ९. अयमशो गोरक्षकृते ग्रन्थे नास्ति ।

बुद्बुदाकार सकलजीवादिधातुमूलखेचर-भूचर-जलचरादि, एकेन्द्रिय द्वीन्द्रिय-त्रीन्द्रिय-चतुरिन्द्रिय-पञ्चेन्द्रियप्रकारेण नादशिवशक्तिः प्रणवबीज सकल लोक[1] नर-नारीभूत प्रकृतिपिण्डमुत्पन्नम्, तच्च पञ्चपञ्चात्मक शरीरम् ।

अथ पञ्चगुणा पृथ्वी—१ अस्थि, २ मासम्, ३ त्वक्, ४. नाड्य, ५. रोमाणि । इति ।

अथ पञ्चगुणा आप —१ लाला, २ मूत्रम्, ३ शुक्रम्, ४ शोणितम्, ५ स्वेद । इति

अथ पञ्चगुण तेज —१. क्षुधा, २ तृषा, ३. निद्रा, ४ कान्ति, ५ आलस्यम् । इति

अथ पञ्चगुणो वायु —१. चलनम्, २ वलनम्[2], ३ आकुञ्चनम्, ४ प्रसारणम्, ५. निरोधनम् । इति

अथ पञ्चगुणमाकाशम्[3]—१ राग, २ द्वेष., ३ भयम्, ४ लज्जा, ५ मोह । इति

इति प्रकृतिपिण्डे पञ्चतत्त्वाना पञ्चविंशतिगुणा ।

१. मन, २ बुद्धिः, ३ अहङ्कार, ४ चित्त, ५ चैतन्यञ्चेत्यन्त करणपञ्चकम् ।

अथ पञ्चगुण मन.—१ सकल्प, २. विकल्प, ३. मूर्च्छना, ४ जडता, ५ मननम् । इति ।

अथ पञ्चगुणा बुद्धि —१. विवेक, २ वैराग्यम्, ३ शान्ति, ४. सन्तोष, ५ क्षमा । इति ।

अथ पञ्चगुणोऽहङ्कार —१ अभिमान, २. मदीयम्, ३ मम सुखम्, ४. मम दु खम्, ५. ममेदम् । इति ।[4]

अथ पञ्चगुण चित्तम्—१. धृति, २ प्रीति[5], ३. त्याग, ४. चञ्चलत्वम्[6], ५. स्वीकार । इति ।

अथ पञ्चगुण चैतन्यम्—१ विमर्श २. शीलम्, ३. धैर्यम्, ४. विनयम्[7], ५. नि स्पृहत्वम् । इति ।

इत्यन्त करणपञ्चकस्य पञ्चविंशति गुणा. ।

अथ १ सत्त्वम्, २. रज, ३. तम, ४ काल., ५. जीव, इति कुलपञ्चकम्[8] ।

अथ पञ्चगुण सत्त्वम्—१. दया, २. धर्म., ३. क्रिया, ४ भक्ति ५. श्रद्धा । इति ।

---

१. एतेन पञ्चीकरणप्रक्रियानिर्देश । २. धावन भ्रमणञ्चेति—गोरक्ष. । ३. यद्यपि रागादयोऽन्तःकरणस्य धर्मास्तथापि हृदयाकाशाश्रितान्तःकरणाश्रितत्वेन आकाशगुणा उक्ता । ४. अहङ्कारगुणेषु—मदीयमिति शरीरेन्द्रियाद्याध्यात्मिकेषु संबन्धज्ञानम्, मम सुखमनेन सुखविषयको राग, मम दु खमनेन दु.खविषयको द्वेष., ममेदमित्यनेन बाह्यवस्तुषु सम्बन्धज्ञानमिति कृत्वा न पौनरुक्त्यम् । ५. ६. मतिः स्मृतिश्चेति—गोरक्षः । ७. चिन्तनम्—इति गोरक्ष । ८. एतेषा प्राधान्येन सृष्टिसचालने कारणत्वमुपलक्ष्य 'कुलपञ्चकम्' इति रूढितया व्यपदेशो योगशास्त्रे ।

अथ पञ्चगुणं रज —१. दानम्, २. भोग., ३. श्रद्धा,[1] ४. स्वार्थम्, ५. वस्तुसंग्रह । इति ।

अथ पञ्चगुण तम.—१ विवाद, २ कलह, ३ शोक (सन्ताप), ४. वध, ५ वञ्चनम् । इति ।

अथ पञ्चगुण काल —१ कलना, २. कल्पना, ३. भ्रान्तिः, ४ प्रमाद, ५. अनर्थः । इति ।

अथ पञ्चगुणो जीव —१ जाग्रत् २ स्वप्न, ३. सुषुप्ति, ४ तुरीया, ५. अतीता । इति कुलगुणा ।

१ इच्छा, २ क्रिया, ३ माया, ४. प्रकृति, ५ वाक्, इतिव्यक्तशक्तिपञ्चकम् ।

अथ पञ्चगुणा इच्छा—१ उन्माद, २. वाञ्छा, ३. वासना, ४. चिन्ता, ५ भवेच्छा[2] । इति ।

अथ पञ्चगुणा क्रिया १ स्मरणम्, २ उद्यमः, ३ उपदेश.[3], ४. कार्यम्, ५. निश्चय. । इति ।

अथ पञ्चगुणा माया—१ मद, २ मात्सर्यम्, ३ दम्भ, ४. क्रोध.[4] ५. अस्मित्वम् । इति ।

अथ पञ्चगुणा प्रकृति—१. आशा, २. तृष्णा, ३ स्पृहा, ४ काङ्क्षा, ५ मिथ्या । इति ।

अथ पञ्चगुणा वाक्—१ परा, २ पश्यन्ती, ३. मध्यमा, ४. वैखरी, ५. मात्रिका । इति ।

इति व्यक्तशक्तिगुणपञ्चकम् ।

अथ १. कर्म, २ काम, ३. चन्द्र, ४ सूर्य, ५. अग्निरिति प्रत्यक्षकरणपञ्चकम् ।

अथ पञ्चगुण कर्म—१. शुभम्, २. अशुभम्, ३. यश, ४. अपयश ५. अदृष्टफलसाधनम् । इति ।

अथ पञ्चगुण काम—१ रति, २. प्रीतिः, ३. क्रीडा, ४. कामना, ५ आतुरता । इति ।

अथ षोडशकलश्चन्द्र —१. कल्लोलिनी, २ उच्चलन्ती, ३. उन्मादिनी, ४. तरङ्गिणी, ५. पोषयन्ती[5], ६. लम्पटा, ७. प्रतिः [प्रवृत्ति.], ८. लौल्या [लोला], ९. लहरी, १०. प्रसरन्ती, ११. स्रवन्ती[6], १२. प्रवाहा, १३. सौम्या, १४. प्रसन्ना, १५. प्रशमना, १६. प्लवन्ती । इति ।

सप्तदशी निवृत्ति. । सा अमृतकला ।

---

१. शृङ्गार.—इति गोरक्षः । २. चेष्टा—इति गोरक्षः । ३. स्वकुलाचार—इति गोरक्षः । ४. कृत्रिमत्वम्, असत्यत्वम् च—इति गोरक्षः । ५. शोषणी—इति गोरक्षः । ६. उल्लोला—इति गोरक्षः ।

अथ द्वादशकलः सूर्य—१. तापिनी, २. ग्रासिका, ३. उग्रा, ४ आकुञ्चनी, ५. शोषिणी, ६ प्रबोधिनी, ७. स्मरा, ८ आकर्षणी, ९. तुष्टिवर्धिनी, १० ऊर्मिरेखा, ११. किरणवती, १२ प्रभावती । इति ।

त्रयोदशी प्रकाशरूपा निजा कला ।

अथ दशकलोऽग्नि –१ दीपिका, २ जारका,[1] ३. ज्वाला, ४. विस्फुलिङ्गा, ५ प्रचण्डा, ६. पाचिका, ७. रौद्री, ८ दाहिका, ९ राविणी,[2] १०. शिखावती । इति । एकादशी निजकला ज्योतिरिति ।

अथ दशनाडीना दश कलाद्वाराणि ।

इडा पिङ्गला—नासाद्वारे [द्वारयो ] वहत ।

सुषुम्णा—ब्रह्मदण्डमार्गेण ब्रह्मद्वारपर्यन्त वहति ।

सरस्वती—मुखद्वारे वहति ।

गान्धारी हस्तिजिह्वा [च]—कर्णद्वार [यो ] वहत ।

पूषा अलम्बुषा [च]—चक्षुर्द्वारे [रयो ] वहत· ।

कुहू·—गुदाद्वारे वहति ।

शङ्खिनी—लिङ्गद्वारे वहति । इति ।

अथ दशवायव सर्वाङ्गे व्यापका ।

हृदये प्राणवायु·—श्वासनि:श्वासकारक· आहारकारकश्च ।

गुदेऽपानवायु —मलमूत्रनि:सारक· रेचककुम्भकपूरकश्च ।

नाभौ समानवायु·—दीपन पाचकश्च ।

कण्ठे उदानवायु —ग्रसनवमनजल्पनकर· ।

सर्वाङ्गे व्यानवायु —सर्वनाडीना शोधक ।

नाग:—चालक कम्पकश्च ।

कूर्म —चक्षुरुन्मेष-निमेषकारक ।

कृकल:—उद्गारक्षुतिकारक: ।

देवदत्त:—मुखजृम्भक: ।

धनञ्जय:—नादघोषक: ॥ इति दशवायव: ॥

अथ [गर्भाली] पिण्डोत्पत्ति , नरनारीसंयोगे ऋतुकाले रजोविन्दुयोगे स जीवः प्रथमदिने कलल भवति । सप्तरात्रे बुद्बुदाकारम् । मासमात्रे काठिन्यम्, मासद्वयेनाण्डाकारम् । तृतीयमासे शिरोहस्तपादादिकम् चतुर्थमासे चक्षु·कर्णनासिकामुखमेढ्रगुदादीनि भवन्ति । पञ्चमे मासे पृष्ठग्रीवोदरा: भवन्ति । षष्ठे मासे नखकेशान्तराणि भवन्ति, सप्तमे मासे सर्वचेतनासंयुक्तो

१. रजिका—इति गोरक्षः । २. रागिणी—इति गोरक्षः ।

भवति। अष्टमे मासे सर्वलक्षणसंपन्नो भवति। नवमे मासे सर्वतत्त्वसंयुक्तो भवति, गर्भज्ञानं च भवति, दशमे मासे योनिस्पर्शनं भवति ततोऽज्ञानी बालको भवति।

शुक्रेऽधिके पुरुषो भवति, रक्तेऽधिके कन्या, समशुक्ररक्ताभ्यां बालो नपुंसको भवति। अम्लाहारेण बह्लि [ बधिर ] अन्ध कुब्जो वामन पङ्गुलोऽङ्गहीनो वा भवति। तत्त्वाधिको तत्त्वशब्दसवर्णो भवति। द्विरतित द्विदले बीजस्यैकत्वात् द्विगर्भो भवति। नाडीमध्ये पुष्टो भवति। आप्यायनी च वर्धते। त्वग्बीजे व्योमखण्ड भवति। महातत्त्वाधिक्ये तदेव पञ्चबलमाधिक्य-स्थानम्। तस्यात्मवर्णतिलकमत्स्यादिचिह्नं दृश्यते। "आत्मा वै पुत्रनामासि" इतिश्रुतिवचनात् पितृमातृस्वभावज पुत्र। तद्विपरीतगुणे मातापित्रोरन्यवासेन पुत्रचरित विपरीत भवति। परस्पराङ्गपीडनकारणगुणैस्तत्पिण्ड गर्भाश्रित भवति। स्त्रीपुरुषयो सर्वेन्द्रियबल पुत्राणा भवति। परमायुर्भवति रतिकाले परस्पराङ्गनिष्पीडनकारणगुणै शुक्रस्य द्वित्रिबिन्दव. पतन्ति तदा द्वित्रिबालका भवन्ति।[1]

[2]सार्द्धपलत्रय शुक्रम्, विंशतिपल रक्तम्, द्वादशपलं जिह्वा, [3]दशपल मेद, द्विपल मज्जा, शतपल मास, दशपल पित्तम्, विंशतिपल श्लेष्मा, षष्ट्यधिक शतत्रयमस्थीनि, अस्थिप्रमाणाः सन्धय, सार्द्धकोटित्रय रोमाणि। वातपित्तश्लेष्मेति धातुत्रयसयोगो भवति। एव त्रयोदशधातवः पितामातृवीर्याद्भवन्ति। इति गर्भावलीपिण्डोत्पत्ति।

इतिश्रीनित्यनाथसिद्धविरचिताया सिद्धसिद्धान्तपद्धतौ
पड्विधपिण्डोत्पत्तिर्नाम प्रथमोपदेश ॥ १ ॥

## द्वितीयोपदेश

**एतदेव परं ज्ञानमेतदेव पर पदम्।**
**नृणां विवेकयुक्ताना यद्भवेन्मोहविग्रह ॥**

अत पर पिण्डविचार कथ्यते। पिण्डे नवचक्राणि भवन्ति।

१ आधारे ब्रह्मचक्रम्। त्रिधावर्तं भगमण्डलाकारं तत्र मूलकन्दं [ न्दे ] मध्ये शक्ति पावकाकारां ध्यायेत्। तत्र कामरूपपीठ सर्वकामफलप्रद भवति।

२. द्वितीयं स्वाधिष्ठानचक्रम्। तत्र षड्दलकमल तन्मध्ये पश्चिमाभिमुखं लिङ्ग प्रवाला-ङ्कुरसदृशं ध्यायेत्। तत्रैवोड्डीयाणपीठं जगदाकर्षणसिद्धिदं भवति।

---

१. रतिकाले परस्पराङ्गमर्दनादिव्यापारविशेषादिगुणवशात् विच्छिद्य विच्छिद्य शुक्रे पतिते गर्भाशयस्थवायुना च विभाज्यमाने सत्येकाधिकसन्तानोत्पत्तिर्भवतीति भावः। २. गर्भस्थ-बालशरीरे धातूना परिमाण निर्दिशति–सार्द्धमित्यादि। ३. दशपलं मज्जा द्वादशपलं च मेद.–इति गोरक्षनाथ.।

३ तृतीय नाभिचक्र पञ्चावर्त सर्पवत्कुटिलाकार तन्मध्ये बालार्ककोटिसन्निभा मध्यमाशक्ति ध्यायेत् । सा शक्ति सर्वसिद्धिप्रदा भवति ।

४ चतुर्थं हृदयचक्र तत्राष्टदलकमलमूर्ध्वमुख तन्मध्ये कुण्डलिनी, कार्णिका [ या ] लिङ्गाकार ज्योति च ध्यायेत्[1], सर्वेन्द्रिय सर्वलोक च वश्य भवेत् ।

५ पञ्चम कण्ठचक्र धातुरङ्गुलम् । तत्र [ वामे ] इडा चन्द्रनाडी दक्षिणे पिङ्गला सूर्यनाडी मध्ये सुषुम्णा श्वेतवर्णा ध्यायेत् । सैवानहद [ अनाहत ] कला सिद्धिदा भवति ।

६ षष्ठ तालुचक्रम् । तत्रामृतधाराप्रवाह । घण्टिकालिङ्ग मूलरन्ध्र राजदन्त शङ्खिनीवीवर दशद्वार तत्र शून्य ध्यायेत् । चित्तलयो भवति ।

७ सप्तम भ्रूचक्रम् । अङ्गुष्ठमात्रम् । तत्र द्वीप [ दीप ] शिखाकार ध्यायेत् । वाचा सिद्धिर्भवति ।

८ अष्टमं ब्रह्मरन्ध्रे निर्वाणचक्रम् । तत्र सूचिकाग्रभेद्य धूमशिखाकार ध्यायेत् । तत्र जालन्धरपीठ मोक्षद भवति ।

९ नवममाकाशचक्रम् । तत्र षड्दलकमलमूर्ध्वमुख तन्मध्ये कर्णिका [-या ] त्रिकूटाकारामूर्ध्वशक्ति परमशून्या ध्यायेत् । तत्र पूर्णगिरिपीठ सर्वेच्छासिद्धिद भवति ।

इति नवचक्रविचार

अथ षोडशाधारा ।

१ प्रथम पादाङ्गुष्ठाधारमग्रतस्तेजोद्भावयेद् । दृष्टि स्थिरा भवति ।

२ द्वितीय मूलाधार पाद [ वाम ] पार्ष्णिपीठे स्थातव्यम् । अग्निदीपन भवति ।

३ तृतीय गुदाधार विकाससकोचनेनाकुञ्चयेत् । अपानवायु स्थिरो भवति ।

४ चतुर्थं मेढ्राधार लिङ्गसकोचनेन पश्चिमदण्डमार्गेण वज्रगर्भनाम्नि [ नाड्या ] पवनं प्रवेश्य ब्रह्मग्रन्थित्रय भित्त्वा भ्रमरगुहाया विश्राम्य तत ऊर्ध्वमुखे विन्दुस्तम्भो भवति । एषा वज्रनाडी प्रसिद्धा ।[2]

५ पञ्चममुड्डियाणाधार यत्र तान दत्त्वा[3] मलमूत्रजारण भवति ।

६ षष्ठे नाभ्याधारे ॐकारमेकचित्तेनोच्चार्य नादलयो[4] भवति ।

७. सप्तमे हृदयाधारे प्राण नित्य निरोधयेत्,[5] कमलविकासो भवति ।

८. अष्टम कण्ठाधारम्, कण्ठमूले चिबुकेन पीडयेत्, इडापिङ्गलयो वायुप्रवाहः स्थिरो भवति ।

९ नवम घण्टिकाधार जिह्वाग्रेण च सन्धयेत्,तत्रामृतकला स्रवति ।

---

१ सैव हृसकला—इति गोरक्ष । २. अस्या क्रियाया सिद्धाया विन्दुस्तम्भाद्योगिन शरीरं वज्रसदृशं दृढं भवतीति वज्रोली नाम्नेयं प्रसिद्धा । ३ तानं दत्त्वा=बन्धनं कृत्वेत्यर्थः । ४. नाद.=मूलाधारस्थविन्दुरूपपराशक्तिसमुद्भूत. सूक्ष्म. शब्दः, तस्य लयः=वृत्त्यभावः । तत्फल च दूरश्रवणादि । ५. हृदयस्थितमष्टदलं कमलं विकसितं भवतीति भावः ।

१०. दशम ताल्वाधारं गर्भे[1] लम्बिका चालनदोहनाभ्यां दीर्घा कृत्वा विपरीतेन प्रवेशयेत् काष्ठिको[2] भवति ।

११. एकादश जिह्वाधार जिह्वाग्रेण मथन कुर्यात् । अमृतस्वादो[3] भवति ।

१२. द्वादशमूर्ध्वदन्ताधार[4] तत्र जिह्वाग्रेण धारयेत् । सर्वरोगनाशो भवति ।

१३. त्रयोदश नासाधार तस्याग्रे लक्षयेत् । मनः स्थिर भवति ।

१४. चतुर्दशं नासामूलाधार कपाट तत्र दृष्टि धारयेत् । षण्मासाज्ज्योति पुञ्ज पश्यति ।

१५ पञ्चदशं भ्रू [मध्या] धार[5] मूर्ध्वचक्षुषा पश्येत् । किरणाकारं पश्यति । तत्रैव पञ्चदशाधारे ललाटस्थाने तत्त्वाकाश पश्यन् [त·] मनोलयं भवति ।

१६. षोडशं नेत्राधारम् । तत्रोर्ध्वभागमङ्गुल्या चालयेत् अपाङ्गे ज्योति पुञ्ज पश्यति । तदेव सदावलोकयेत्[6] । इति षोडशाधारा ।

अथान्तर्लक्षत्रयम् । [मूल-] कन्दाद्दण्डलग्ना ब्रह्मनाडी श्वेतवर्णा ब्रह्मरन्ध्रपर्यन्त [गता] सस्मरेत् । तन्मध्ये कमलतन्तुसदृशी विद्युत्कोटिनिभामूर्ध्वगामिनी मध्येनास लक्षयेत् । सर्वसिद्धिदा भवति । अथवा ललाटोर्ध्वं गोल्लाटमण्डले स्फुरत्तारकाकारं लक्षयेत् । अथवा भ्रमरगुहामध्य आरक्त भ्रमराकार लक्षयेत् । अथवा नासाग्रे षोडशाङ्गुल वायुस्तेजस्तत्त्व धूम्रवर्णं लक्षयेत् । कर्णद्वय तर्जनीभ्या निरुन्धेत । तत शिरोमध्ये श्रीलहर घू घू कारं नाद शृणोति । अथवा चक्षुर्मध्ये पुत्तलिकाकार नीलं ज्योतीरूप लक्षयेत् ॥ इत्यन्तर्लक्ष्यम् ॥

अथ बहिर्लक्ष्यम् । नासाग्राद्बहिरङ्गुलचतुष्टयेन नीलज्योतिः प्रकाशं लक्षयेत् । अथवा नासाग्राद्बहिःषडङ्गुलं वायुतत्त्वं धूम्रवर्णं लक्षयेत् । अथवा नासाग्राद्बहिरष्टाङ्गुले आरक्तवर्णं तेजस्तत्त्व लक्षयेत् । अथवा नासाग्राद्दशाङ्गुले अन्तराले आपस्तत्त्वं लक्षयेत् । अथवा नासाग्राद्द्वादशाङ्गुले पीतवर्णं पृथ्वीतत्त्व लक्षयेत् । अथवा आकाशसम्मुख स्थिरदृष्ट्या लक्षयेत् । आकाशसदृश चित्तं भवति । अथवा ऊर्ध्वं द्वादशाङ्गुले वा सप्तदशाङ्गुले वा निराधारे ज्योति पुञ्ज लक्षयेत् मुक्तिप्रदं भवति । अथवा दृष्ट्यग्रे तप्तकाञ्चना भूमिं लक्षयेत् दृष्टिः स्थिरा भवति । इति बहिर्लक्ष्यम् ।

अथ मध्यलक्ष्यम् । श्वेतवर्ण रक्तवर्णं धूम्रवर्ण नीलवर्ण वा अग्निशिखाकार वा ज्योतिःपुञ्जं वा विद्युदाकारं वा यथेष्ट पिण्डप्रमाण स्थानवर्जितं मनसा लक्षयेत् । इति मध्यलक्ष्यम् । अथ व्योमपञ्चकम् । आकाश परमाकाशं महाकाशं तत्त्वाकाशं सूर्याकाशं चेति पञ्चकम् । बाह्याभ्यन्तरेऽत्यन्तनिर्मल निराकारमाकाशमवलोकयेत् । अथवा अत्यन्धकारसदृश परमाकाशं लक्षयेत् । अथवा बाह्याभ्यन्तरे कोटिकालानलसदृश महाकाशं विलोकयेत् । अथवा बाह्याभ्यन्तरे प्रकाशमयं तत्त्वाकाश विलोकयेत् । अथवा बाह्याभ्यन्तरे कोटिसूर्यसदृशं सूर्याकाशं विलोकयेत् । एवं पञ्चव्योमावलोकनेन व्योमसिद्धः पुरुषो भवति । इति व्योमपञ्चकविचारः ।

---

१. गर्भे = ताल्वन्तरित्यर्थः । लम्बिका = जिह्वा । २ काष्ठवद्भवतीत्यर्थः । जडसमाधिरयम् । ३ सर्वरोगनाशो भवति—इति गोरक्ष । ४ भ्रूमध्याधारम्—इति गोरक्ष । ५ ललाटाधारम्—इति गोरक्षः । ६. षोडशे ब्रह्मरन्ध्रे आकाशचक्रं तत्र गुरुचरणाम्बुजयुग्म सदावलोकयेत् आकाशवत्पूर्णो भवति—इति गोरक्ष ।

नवचक्रं षोडशाधारं त्रिलक्ष्यं व्योमपञ्चकम् ।
सम्यग्वै यो न जानाति स योगी नामधारकः ॥

अतः परमष्टाङ्गयोगः कथ्यते । यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधिरित्यष्टाङ्गो योगः । अत्र यम इत्युपशम. । तथा सर्वेन्द्रियनिग्रह , आहारजय निद्राजयं शीतादिजयमेवं शनै शनैः साधयेदात्मनिरोधनमिति यमलक्षणम् ।

अथ नियमः । नियम इति मनोवृत्तीना नियमनम् । तदा एकान्तवास', औदासीन्यम्, वैराग्यम्, यथाप्राप्तसन्तुष्टि., गुरुवचनारूढता । इति नियमलक्षणम् ।

अथासनम् । उपविश्य शम. । आसनमिति सदा स्वरूपेणासना । तथा [यथा] सुखासन सिद्धासनमिति, एतेषा मध्ये यथेष्टमासनमेक कृत्वा सावधानेन स्थातव्यम् । इत्यासनलक्षणम् ।

अथ प्राणायामः । प्राणायाम इति प्राणस्य स्थिरता । तथा च पूरककुम्भकरेचक सपुटीकरणमिति[1] प्राणायामलक्षणम् ।

अथ प्रत्याहार. । प्रत्याहार इति चैतन्यतुरगाणा प्रत्याहारणम्, नानाविकारग्रसनमुत्पन्नविकाराणा [च] निवृत्तिरिति प्रत्याहारलक्षणम् ।

अथ ध्यानम् । ध्यानमिति अस्ति कश्चित्परमात्माऽद्वैतस्वभाव स एवात्माराम । तथा यत्स्फुरति तत् तत्स्वरूपमेवेति भावयेत् । सर्वभूतेषु सहृद्दृष्टिश्च [स्यात्] इतिध्यानलक्षणम् ।

अथ धारणा । धारणेति वाह्याभ्यन्तरे एकमेव निजतत्त्व [इति] अन्त.करणे धारयेत्, यद्यदुत्पद्यते तत्तन्निराकारे धारयेत् । स्वात्मान निर्वातदीपवत्सध्यायेत् । इति धारणालक्षणम् ।

अथ समाधि. । समाधिरिति सर्वतत्त्वाना समावस्था, तथा निरुद्यमत्वम्, अनायासाविष्कारत्वम्, आध्यात्मिकाधिदेविकाधिभौतिकम् [इति] अवस्थात्रय त्यजेत् । मनोलयो भवति । इति समाधिलक्षणम् । इत्यष्टाङ्गो योग. ।

इति श्रीनित्यनाथविरचिताया सिद्धसिद्धान्तपद्धतौ
पिण्डविचारो नाम द्वितीयोपदेश. ।

## तृतीयोपदेशः

अथ पिण्डस्य साधनं कथ्यते, पिण्डमध्ये सचराचरं यो जानाति स योगवित्, स एव पिण्डसवित्तिर्भवति[2] । कूर्म पादतले वसति, पाताल पादाङ्गुष्ठमूले वसति । तलातलमङ्गुष्ठाग्रे

---

१. पूरक. = बाह्यवायुमाकृष्यान्त स्थापनम्, रेचक = अन्त.स्थवायोर्बहिर्नि.सारणम् । कुम्भक. = उभयवाय्वोर्गतिनिरोध , सपुटीकरणम् = प्राणापानादीना सर्वेषा मेलनम्, इति चतुर्विधः प्राणायाम. । २. पिण्डस्य सवित्तिर्यस्येति व्यधिकरणबहुव्रीहि. । अस्मिन् पिण्डमध्ये = स्वशरीर एव सर्वं चराचरमस्तीति यो जानातीत्यर्थः ।

वसति, महातलं पादपृष्ठे वसति । रसातलं गुल्फान्तं वसति । सुतलं जङ्घाया वसति, वितल जान्वो· वसति, अतलमूर्वोः वसति, एव सप्तपातालाना कालाग्निरुद्रो देवता ।

अथ लोकत्रयम् । भूर्लोको लिङ्गाग्रे वसति । भुवर्लोको लिङ्गमध्ये वसति । स्वर्लोको लिङ्गमूले वसति[1] । एव लोकत्रयस्येन्द्रो देवता सर्वेन्द्रियाणा नियामक ।

अथ लोकचतुष्टयम् । दण्डाङ्कुरे महर्लोको वसति । दण्डकुहरे जनोलोको वसति । दण्डनाले तपोलोको वसति, मूलकमले सत्यलोको वसति । एव लोकचतुष्टयस्य ब्रह्मा देवता अनेकमानाभिमानरूपस्तिष्ठति ।

अथैकविंशतिब्रह्माण्डविचार । विष्णुलोक कुक्षौ तिष्ठति । तत्र विष्णुर्देवता पिण्डमध्ये तिष्ठति । अनेक [धा] व्यापको भवति । हृदये रुद्रलोकस्तिष्ठति तत्र रुद्रदेवता पिण्डमध्ये तिष्ठति, वक्ष स्थले ईश्वरो लोकस्तिष्ठति । तत्र ईश्वरदेवता पिण्डमध्ये तिष्ठति । कण्ठमध्ये सदाशिव-लोकस्तिष्ठति तत्र सदाशिवदेवता पिण्डमध्ये तिष्ठति सौम्यरूप । मूलमध्ये नीलकण्ठलोकस्तिष्ठति तत्र नीलकण्ठदेवता पिण्डमध्ये नीलतत्त्वे तिष्ठति । तालुद्वारे शिवलोकस्तिष्ठति तत्र शिवोदेवता उपशमरूपस्तिष्ठति । लम्बिकामूले भैरवलोकस्तत्र भैरवो देवता सर्वात्तमरूपस्तिष्ठति । ताल्वभ्य-न्तरे महासिद्धलोक. तत्रादिमहासिद्धो देवता पिण्डमध्ये प्रबोधरूपस्तिष्ठति । ललाटमध्येऽ-नादिलोकस्तत्रानादिदेवता पिण्डमध्ये आनन्दपरो हसरूपस्तिष्ठति । शृङ्गारे कुललोकः तत्र कुलेश्वरो देवता पिण्डमध्ये निरभिमानावस्थस्तिष्ठति । ब्रह्मरन्ध्रे ब्रह्मलोकस्तत्र परब्रह्मदेवता पिण्डमध्ये पूर्णवत्तिष्ठति, ऊर्ध्वकमले परापरो निजलोकस्तत्र परमेश्वरो देवता पिण्डमध्ये आस्तिकस्वरूपस्तिष्ठति,[2] त्रिकुटीस्थाने शक्तिलोक , तत्र पराशक्तिर्देवता सर्वसामर्थ्य सर्वकर्तृत्वा-वस्था तिष्ठति । एवं सप्तपाताललोकाना [कै सह] एकविंशति ब्रह्माण्डविचार ।

सदाचरन् वै ब्राह्मणो वसति, शौर्ये क्षत्रिय., व्यवसाये वैश्य , दुर्दण्डत्वे शूद्र, । इति चत्वारो वर्णा. ।

अथ सप्तद्वीपावलि सप्त समुद्राश्च कथ्यन्ते । मज्जाया जम्बूद्वीपो वसति । अस्थिषु शाकद्वीप । शिरासु औषधिद्वीप.[3], मासे कुशद्वीप[4] । त्वचि क्रौञ्चद्वीप , नखेषु श्वेतद्वीपः । रोमसु गोमयद्वीप., इति सप्तद्वीपा पृथिवी ।

अथ सप्तसमुद्राः । मूत्रे क्षारसमुद्रः, लालाया क्षीरसमुद्र', कफे दधिसमुद्र , मेदसि धृतसमुद्रः, वसाया मधुसमुद्र., रक्ते इक्षुसमुद्र । इति सप्तसमुद्रा. ॥

नवखण्डा नवद्वारेषु वसन्ति । १. भारतखण्ड', २. काश्मीरखण्ड , ३. काफरखण्ड., ४. श्रीमित्रखण्ड., ५. एकपादखण्डः, ६. राक्षसखण्ड[5], ७. गान्धारखण्डः, ८. कैवर्तखण्ड., ९. गर्भखण्ड[6] । इति नवखण्डाः नवद्वारेषु वसन्ति ।

---

१. भूर्लोकं गुह्यस्थाने भुवर्लोक लिङ्गस्थाने, स्वर्लोक नाभिस्थाने-इति गोरक्ष' । २. परापर-रूप —इति गोरक्षः । ३. सूक्ष्मद्वीप —इति गोरक्ष. । ४. प्लक्षद्वीप —इति गोरक्षः । ५. शखखण्ड.—इति गोरक्षः । ६. महामेरुखण्डः—इति गोरक्षः ।

अथाष्टपर्वतानामङ्गे वास., मेरुपर्वत मेरुदण्डे वसति। कैलाश: ब्रह्मकपाले वसति। हिमाचल पृष्ठे वसति, विन्ध्याचल[1] दक्षिणस्कन्धे वसति, मन्दराचल· वामस्कन्धे वसति। मैनाक. दक्षिणकर्णे वसति। श्रीपर्वतः वामकर्णे वसति। द्रोणगिरिर्ललाटे वसति। एवमष्टकुल-पर्वता.। अथोपपर्वता सर्वाङ्गुलीषु वसन्ति। चित्ताम्ला[2], गङ्गा, यमुना, सरस्वती, चन्द्रभागा, वितस्ता[3], शतरुद्रा, ऐरावती[4], नर्मदा एव नद्योपनद्य· रोमकूपेषु वसन्ति।

सप्तविंशतिनक्षत्राणि, द्वादश-राशय, नवग्रहा, नवतारा पञ्चदश तिथय, द्विसप्तति कोष्ठेषु वसन्ति। गन्धर्वकिन्नरकिंपुरुषाप्सरोगणा उदरे वसन्ति। चतु षष्टियोगिन्यो दन्तमूलेषु दन्तपंक्तौ च वसन्ति। अनेकदेवतारश्मयो नवचक्रेषु वसन्ति, खेचरा भूचरा जलचरा मातरा शक्तय उग्रदेवता वायुवेगे वसन्ति। अनेकतीर्थानि मर्मस्थानेषु वसन्ति। मेघा अश्रुपाते वसन्ति। अनेकसिद्धा मतिप्रकाशे वसन्ति। चन्द्रसूर्या नेत्रद्वये वसत। अनेकवृक्षलतागुल्मतृणानि स्फिगू-जङ्घाया रोमकूपेषु वसन्ति, अनेककृमिकीटपतङ्गा पुरीषे वसन्ति।

यत्सुख तत्स्वर्गम्, यद्दु ख तन्नरकम्, यत्कर्म तद् बन्धनम्, यन्निर्विकल्प तन्मुक्ति·। स्वस्वरूपदृशा निद्रादौ [ स्वात्म ] जागर शान्ति। एव सर्वदेवेषु विश्वरूप· परमेश्वरोऽखण्ड-परिपूर्णस्वभावेन घटे घटे चित्प्रकाशस्वरूपेण तिष्ठति। एव पिण्डसवित्तिर्भवति।

इति श्रीनित्यनाथपार्वतीपुत्रविरचिताया
सिद्धसिद्धान्तपद्धतौ पिण्डसवित्तिर्नाम
तृतीयोपदेश

[ श्रीगुरु, सद्गुरुचरणाभ्या नम, सम्वत् १८४७ शके १७१२ दुर्मतिनामसंवत्सरे द्वितीयायामधिकआषाढशुक्लपक्षे सौम्यवासरे तद्दिने लिखित शुभं

**यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया।**
**यदि शुद्धमशुद्धं वा मम दोषो न विद्यते ॥**

**तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबन्धनात्।**
**मूर्खहस्ते न दातव्यम् एवं वदति पुस्तकम् ॥**

नगर्करोपनामक रामकृष्णभटस्य सुतेन जगन्नाथभटेन लिखितं स्वार्थं परमार्थं च।

**श्रीपरानन्दपदद्वन्द्वं परं ब्रह्म नराकृति।**
**आनन्दसारसर्वस्वं वन्दे तं परमं गुरुम् ॥ ]**

●●●

---

१. मलयो वामकन्धरे, मन्दरो दक्षिणकन्धरे, विन्ध्याद्रिर्दक्षिणकर्णे, मैनाको वामनकर्णे, श्रीपर्वतो ललाटे–इति गोरक्ष.। २. पीनसा, ३. पिपासा, ४. श्रीरात्रि.—इति गोरक्ष।

रजिस्टर्ड न्यूजपेपर्स एक्ट के अन्तर्गत

## विज्ञप्ति

| | |
|---|---|
| १ प्रकाशन का नाम | सारस्वती सुषमा |
| २ प्रकाशन की तिथि | त्रैमासिक |
| ३ प्रकाशक का नाम | विश्वम्भरनाथ त्रिपाठी |
| राष्ट्रियता | भारतीय |
| पता | सम्पूर्णानन्द सस्कृत विश्वविद्यालय, वाराणसी |
| ४ सम्पादक का नाम | विश्वम्भरनाथ त्रिपाठी |
| राष्ट्रियता | भारतीय |
| पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ५ मुद्रक का नाम | श्री रमाशंकर पंड्या |
| राष्ट्रियता | भारतीय |
| पता | तारा प्रिंटिंग वर्क्स, कमच्छा, वाराणसी |
| ६ स्वामित्व | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |

मै विश्वम्भरनाथ त्रिपाठी घोषित करता हूँ कि उल्लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर
विश्वम्भरनाथ त्रिपाठी
गवेषणालय-संचालक
सं० सं० वि० वि०, वाराणसी—२२१००२.

पञ्जीकरण सङ्ख्या—६६८१।५७

# सारस्वती सुषमा

## सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका ।

२. अस्याः प्रकाशन प्रतिवर्ष ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति ।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति ।

४. अस्यां सम्पूर्णानन्द-सस्कृतविद्यालयस्थानामन्येषां च विदुषा स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते ।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिस्तदीयो निबन्धः प्रकाशितो भवति ।

६. अस्यां पत्रिकाया विशिष्टानां हिन्दीसंस्कृताङ्गलग्रन्थानां समालोचनाः प्रकाश्यन्ते । तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये ।

७. कुलसचिव, सम्पूर्णानन्द सस्कृत विश्वविद्यालय, वाराणसी-२' इति सकेतेन ('बैंकड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम् ।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी—२" इति सङ्केतेन विधेयः ।



**प्रकाशक :**—सञ्चालकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी-२
**मुद्रक :**—तारा प्रिंटिंगवर्क्स, कमच्छा, वाराणसी ।

# सुसंग्राह्याः केचन व्याकरणशास्त्रीया ग्रन्थाः

क्रमसंख्या—ग्रन्थनाम — मूल्यम्

१. वाक्यपदीयम्—[ द्वितीयकाण्डम् ] ग्रन्थरत्नमिदं श्रीपुण्यराजविरचितया वृत्त्या श्रीरघुनाथशर्मकृतया अम्बाकर्त्रीव्याख्यया च समलङ्कृतम्— २८-००

२. वाक्यपदीयम्—[ तृतीयकाण्डम्—जाति-द्रव्य-सम्बन्धसमुद्देशत्रयात्मकम् ] काण्डमिदं श्रीहेलाराजविरचितया प्रकाशाख्यव्याख्यया, श्रीरघुनाथशर्मकृतया अम्बाकर्त्रीव्याख्यया च विभूषितमस्ति— २५-००

३. बृहच्छब्देन्दुशेखरः—[ भागत्रयात्मक ] महामहोपाध्यायनागेशभट्टविरचित, विदुषा सम्पादकेन विमर्शप्रधानया विस्तृतभूमिकया च सनाथितोऽस्ति। भागत्रयस्य मूल्यम्— ४५-००

४. लघुकाशिका—[ भागद्वयात्मिका ] ग्रन्थोऽयं पाणिनीयाष्टाध्याय्या. काशिकावृत्ते. सक्षेपीकरणेनाथचाभिनवैरुदाहरणैः समुल्लसितोऽस्ति। संस्कृताध्येतॄणा छात्राणां कृते महोपकारकमिदं ग्रन्थरत्नम्। भागद्वयस्य मूल्यम्— १९ + १९.२५ = ३८.२५

५. पाणिनीयप्रबोध.—ग्रन्थोऽयं पण्डितप्रवरेण श्रीमता गोपालशास्त्रिदर्शनकेसरिणा विरचितः। लेखकेन पाणिनीयव्याकरणस्य सारभूतानि समस्तानि प्रक्रियाशतत्त्वानि सन्निवेशितानि लघुग्रन्थेऽस्मिन्। विविधैः सक्षिप्तधातुपाठ–गणपाठ–अनुबन्धविचारादिच्छात्रोपयोगिपरिशिष्टैरलङ्कृतो वर्ततेऽयं लघुग्रन्थ.— ४-५०

६. प्रक्रियाकौमुदी—[ प्रकाश्यमाना ] पण्डितमूर्द्धन्येन श्रीकृष्णाचार्येण विरचिता प्रबोधसुकरा प्रकाशाख्यव्याख्यायुतेयं प्रक्रियाकौमुदी साम्प्रतं मुदितप्रायैव। अचिरादेवास्या. प्रकाशनं सम्भविष्यति—

७. प्राकृतप्रकाश·—[ वररुचिविरचितः ] प्राकृतभाषाव्याकरणेषु मूर्द्धन्यतमोऽयं ग्रन्थः सञ्जीवनी-सुबोधिनी-मनोरमा-प्राकृतमञ्जरीति टीकाचतुष्टयसुसमेधितोऽस्ति। विदुषा सम्पादकेन श्रीबलदेवोपाध्यायेन विमर्शगभीरया भूमिकया, गवेषणाप्रधानटिप्पण्यादिभिर्विभिन्नैस्तथ्यपूर्णै. परिशिष्टैश्च हिन्दीभाषानुवादेनास्य ग्रन्थस्य श्रीवृद्धिः कृता— ३७-७५

प्रकाशकः—निदेशकः अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः वाराणसी–२

मुद्रक—तारा प्रिंटिंग वर्क्स, वाराणसी।

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]





२९ वर्षे
२ अङ्कः

भाद्रपदपूर्णिमा, वै० सं० २०३१
सितम्बर, १९७४ ई०

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]


प्रधानसम्पादकः

**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

सह-सम्पादकः

**डॉ० हरिश्चन्द्रमणित्रिपाठी**






२९ वर्षे
२ अङ्कः

वार्षिकमूल्यम् १० रूप्यकाणि
प्रत्यङ्कमूल्यम् ३ रूप्यकाणि

## विषयानुक्रमणी

# सारस्वती सुषमा

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

२९ वर्षः | भाद्रपदपूर्णिमा, वि० सं० २०३१ | २ अङ्कः

## चन्द्रमसः पौराणिकं स्वरूपम्

डॉ० श्रीकृष्णमणित्रिपाठी

व्याकरण-साहित्य-पुराणेतिहास-साङ्ख्ययोगाचार्य , साहित्यरत्नम्,

एम० ए०, पुराणेतिहासविभागाध्यक्षचरः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

प्राय प्रतिपुराण भूगोल-खगोलसम्बन्धिना विषयाणा विवेचन विद्यत एव, परन्तु श्रीमद्भागवते, भविष्यपुराणे, कूर्मपुराणे, ब्रह्माण्डपुराणे च भूगोल-खगोलयोस्सविशेषं वर्णन वर्तते। पुराणेषु सूर्य-चन्द्रादिग्रहोपग्रह-नक्षत्रमण्डल-राशिचक्र-शिशुमार-ध्रुवतारादीनामुत्पत्ति-गति-विगति-परिवर्त्तनादीना रहस्य विवेकपूर्णपद्धत्याऽङ्कितमस्ति। केषा ग्रहाणा क्रियत् परिमाणमस्ति, कस्को ग्रह पृथिवीत' कियति दूरे वर्तते, कश्च ग्रह कया गत्या कियता कालेन केन मार्गेण कथं भ्रमति, कस्य च ग्रहस्य कुत्र कदा कीदृश प्रभाव. प्रजायते ? इत्यादीना मौलिकविषयाणा तर्कसङ्गतमुत्तर पुराणेषु वर्तते।

अखिललोकस्रष्टुर्भगवन्नारायणनाभिह्लदसमुद्भवसरोजजन्मनो ब्रह्मणो मानस पुत्रो महर्षिरत्रिमुनिर्जात । स च पित्रा विधात्रा सृष्ट्यर्थं समादिष्टो लोककल्याणकामनया मनोवाक्कायकर्मभिः शुभान्याचरन् काष्ठ-कुडय-शिलासन्निभ ऊर्ध्वबाहु सन् दिव्यत्रिशत्सहस्रवर्षपर्यन्तमनुत्तम नाम सुदुश्चर तपस्तेपे।[1] तेनानन्दमयं सकलक्लेशनिवारक ब्रह्मविष्णुमहेशानामान्तरिक तेज प्रकाशितम्। तप.प्रभावात् सञ्जातनिर्मलकान्तेर्निर्निमेष पश्यतस्तस्य मुनेर्नेत्राभ्या तेजोबिन्दु सहसा प्रास्रवत्, यस्य ज्योत्स्नया समस्ते विश्वस्मिन् प्रकाशो जात.।[2]

१. आदिष्टो ब्रह्मणा पूर्वमत्रि सर्गविधौ पुरा।
अनुत्तम नाम तप. सृष्ट्यर्थं तप्तवान् प्रभु ॥
कर्मणा मनसा वाचा शुभान्येव समाचरन्।
काष्ठकुडचशिलाभूत ऊर्ध्वबाहुर्महाद्युति.॥
(ब्र० पु० ६५।२-३)

२. अधः सुस्राव नेत्राभ्या धाम तच्चाम्बुसम्भवम्।
दीपयद्विश्वमखिलं ज्योत्स्नया सचराचरम्॥
(म० पु० २३।२)

लोकपितामहस्य विधेरादेशात् तत्तेजोबिन्दु पुत्रेच्छया स्त्रीरूपेण दिशो धारयामासु., किन्तु तत्तेजोबिन्दोर्दुर्धर्षतया ताश्चिर धर्तुमसमर्था सत्यो भूमौ प्राक्षिपन् । ततो वेधा वसुधाया पतन्तं तमादाय पुरुषाकार च विधाय स्ववेदमये रथे संस्थाप्य तेन सागरपर्यन्ताया वसुन्धराया एकविंशतिवार प्रदक्षिणा कारयित्वा त स्व धाम नीतवान् ।[1] तत्र देवर्षिभि· सोमदैवत्यैर्मन्त्रै. सस्तूयमान त भगवानब्जयोनिरशेषौषधि-द्विज-नक्षत्राणामाधिपत्येऽभ्यषेचयत् ।

वायुपुराणस्यानुषङ्गपादे चाधिपत्याभिषेकसमये प्रजापतिरेव द्विजातीना वीरुधा ग्रहनक्षत्राणा यज्ञाना तपसाञ्चाधिपत्ये सोममभिषिक्तवान् ।

मत्स्यपुराणानुसार तु राज्ञ पृथो पृथिव्या आधिपत्येऽभिषेकानन्तर तेनैवौषधि-यज्ञ-व्रत-तपसामधिपतिश्चन्द्र कृतः ।[2]

श्रीमद्भागवतेऽपि भगवान् व्यासदेवस्तदेव समर्थयति ।[3]

चन्द्रमसो यत्तेज पृथिव्यामपतत् तदौषधिरूपेण परिणतम् । अतोऽद्यत्वेऽपि तत्तेजसा रात्रौ जाज्वल्यमाना भवन्त्योषधय । एव चन्द्रमा ओषधिभिरद्यापि प्रजाना पालन करोति । तेन स ओषधीशो द्विजराजश्च कथ्यते ।[4] अत एव कोषकारा —"ओषधीशो निशापति·, द्विजराज. शशधरो नक्षत्रेश. क्षपाकर·" इत्यादि चन्द्रपर्यायमाहु । अत एव सोमोऽस्माक ब्राह्मणाना राजेति सगच्छते ।

---

१. आशास्त मुमुचुर्गर्भम शक्ता धारणे तत ।
समादायाथ तं गर्भमेकीकृत्य चतुर्मुख ।।
युवानमकरोद् ब्रह्मा सर्वायुधधरं प्रभुम् ।
( म० पु० २३।८ )
स तेन रथमुख्येन सागरान्ता वसुन्धराम् ।।
त्रि सप्तकृत्वोऽतियशाश्चकाराभिप्रदक्षिणम् ।।
( ब्र० पु० ६५।१४ )

२ द्विजातीना वीरुधा च नक्षत्राणा ग्रहै. सह ।
यज्ञाना तपसा चैव सोम राज्येऽभिषेचयत् ।।
( वा० पु० ७०।३ )
यदाभिषिक्त. सकलाधिपत्ये पृथुर्धरित्र्यामधिपो बभूव ।
तदौषधीनामधिप चकार यज्ञव्रताना तपसा च चन्द्रम् ।।
( म० पु० ८।२ )

३. सहस्रशिरस पुसो नाभिह्रदसरोरुहात् ।
जातस्यासीत् सुतो धातुरत्रिः पितृसमो गुणै· ।।
तस्य दृग्भ्योऽभवत् पुत्र सोमोऽमृतमयः किल ।
विप्रौषध्युडुगणाना ब्रह्मणा कल्पित पतिः ।।
( श्रीम० भा० ९।१४।२-३ )

४. तद्दीप्तिरधिका तस्माद् रात्रौ भवति सर्वदा ।
तेनौषधीश सोमोऽभूद् द्विजेशश्च निगद्यते ।।
( म० पु० २३।१३ )

एवं प्राप्ताधिपत्यः स भुवनत्रयं पालयन् विष्णुध्यानैकतत्परो दशपद्मवर्षपर्यन्तं तीव्रं तपः समाचरन् भगवन्तं विष्णुं प्रसाद्य तेन वरं वृणुष्वेत्युक्तः शक्रलोकजिगीषाया., करिष्यमाणे स्वराजसूये यज्ञे प्रत्यक्षीभूय फलभोक्तृत्वस्य च वरं ययाचे[1]। ततो भगवता विष्णुना तथास्त्वित्युक्त्वाऽन्तर्हिते तस्मिन्नयं तपसो विरम्य महतोत्साहेन ससम्भारं राजसूयं नाम महायज्ञमाजह्रे, यत्र महर्षिरत्रिर्होता, भृगुरध्वर्युः, हिरण्यगर्भ उद्गाता, स्वयं ब्रह्मैव ब्रह्मा, उपद्रष्टा साक्षाद्धरिः, सदस्याश्च सनकादयो मुनयोऽभूवन्[2]।

ईदृशस्यापूर्वस्य राजसूययज्ञस्य सम्पादनप्रभावात्स्वकृतदिग्विजयाधिष्ठातृत्वाच्चैनं मद आविवेश। मदावलेपाच्चासौ भ्रान्तचित्तो दुर्बुद्ध्या विक्षिप्तः सन् देवगुरोः पत्नीं तारां बलाज्जहार। बृहस्पतिना तदनुरोधेन देवैर्भूयो याच्यमानो देवर्षिभिश्च प्रेर्यमाणोऽपि स तत्सुखपाशबद्धो न तां प्रत्यावर्तयत्[3]। तन्त्र-मन्त्र-यन्त्राद्यभिज्ञोऽपि वाक्पतिर्न तस्मै शापं प्रदातुं प्राभवत्, न वा कैरप्युपायैस्तस्यापकारं कर्तुं समर्थो जातः[4]।

देवगुरुं बृहस्पतिं प्रति द्वेषकारणाद् देवविद्वेषिणामसुराणामाचार्यः शुक्राचार्यश्चन्द्रमसः पार्ष्णिग्राहोऽजायत। उशनसः सहयोगाच्च दैत्यदानवनिकाया अपि तत्पक्षे महान्तमुद्योग

---

१ ततो वव्रे वरान् सोमः शक्रलोकं जयाम्यहम्।
प्रत्यक्षमेव भोक्तारो भवन्तु मम मन्दिरे॥
राजसूये सुरगणा ब्रह्माद्याः सन्तु मे द्विजाः।
(म० पु० २३।१८-२०)

२ होतात्रिर्भृगुरध्वर्युरुद्गाताऽभूच्चतुर्मुखः।
ब्रह्मत्वमगमत्तस्य उपद्रष्टा हरिः स्वयम्।
सदस्याः सनकाद्यास्तु राजसूयविधौ स्मृताः॥
(म० पु० २३।२१-२२)

३ तदा तत्प्राप्य दुष्प्रापमैश्वर्यमृषिसंस्तुतम्।
सविभ्रममतिर्विप्रा विनयोऽविनयाहृतः॥
बृहस्पतेः स वै भार्यां तारां नाम यशस्विनीम्।
जहार सहसा सर्वानवमत्याङ्गिरःसुतान्॥
स याच्यमानो देवैश्च तथा ब्रह्मर्षिभिश्च ह।
नैव व्यसर्जयत् तारां तस्मायाङ्गिरसे तदा॥
(वा० पु० ९०।२७-२९)

४ शशाक शापं न च दातुमस्मै न तन्त्रशस्त्राग्निविषैरशेषैः।
तस्यापकर्तुं विविधैरुपायैर्नैवाभिचारैरपि वागधीशः॥
(म० पु० २३।३३)

उशनास्तस्य जग्राह पार्ष्णिमङ्गिरसो भवः।
स हि शिष्यो महातेजाः पितुः पूर्वं बृहस्पतेः॥
(ब्र० पु० ६५।३१)

चक्रुः। बृहस्पतिपक्षे सकलदेवसेनासहायः शक्रोऽपि सहायकोऽभवत्। बृहस्पतेः पितुरङ्गिरसः सकाशादुपलब्धविद्यस्तत्स्नेहपाशबद्धो रुद्रोऽपि तत्साहाय्यकामनया प्रमथगणैः साकं स्वकीयमाजगवं धनुरादाय सोमेन सह योद्धुमुपस्थितः[1]। श्रीमद्भागवतमप्येतत्सर्वं समर्थयति[2]।

ततो रुद्रपुरोगा इन्द्रादिदेवा असुरेषु असुराश्चोशनसा समन्विता देवेषु सरोषं शस्त्रास्त्राणि मुमुचुः। एवमुग्रतीक्ष्णैरायुधैः परस्परं युद्ध्यमानयोर्बाणांश्च प्रक्षिपतोर्द्वयोर्दलयोरतीवोग्रो भयङ्करस्तारानिमित्तस्तारकामयः सङ्ग्रामः समारब्धः, येन भूम्यन्तरीक्षयोर्महती भीतिरुत्पन्ना। ईदृशेन सकलक्षोभकरेण महाहवेन क्षुब्धहृदयमशेषं जगद् ब्रह्माणं शरणमुपेत्य तन्निवारणाय प्रार्थयाञ्चकार। ततो लोकपितामहेन ब्रह्मणा विश्वविनाशाय प्रवृत्ते तस्मिन् तारकामये सङ्ग्रामे सहसा कथञ्चित् प्रविश्य भगवन्तं पिनाकपाणिमुग्रमुशनसं देव-दैत्य-दानवगणांश्च निवारयन् सोममुवाच—सोम्य! परस्त्रीहरणादकार्यात् त्वं सोम्योऽपि ग्रहेषु पापीयान् गणयिष्यसे, बृहस्पतेर्भार्यां तारां प्रत्यावर्तय, परस्वप्रत्यर्पणेऽपमानं न सम्भवति।[3] ओमित्युक्त्वा युद्धाद्विरतेऽशुमालिनि स्वयमेव विधाता गुरवे तां तारां प्रत्यावर्तयत।[4]

तामन्तःप्रसवामालोक्य देवगुरुः—नैष मम क्षेत्रे भवत्यन्यसुतो ग्राह्यः, तस्मादेनमुत्सृजेति तामुवाच। सा चैवमुक्ता पत्युश्छन्दानुसारिणी सोमेन बलादाहितं तं गर्भं तृणगुच्छे उत्ससर्ज। स चोत्पन्नमात्र एवातितेजसा समेषां देवानां तेजांस्यभिभूतवान्।[5] ततः कनकप्रभस्य कुमा-

---

१. ततः सशिष्यो गिरिशः पिनाकी बृहस्पतिस्नेहवशानुबद्धः।
धनुर्गृहीत्वाजगवं पुरारिर्जगाम भूतेश्वरसिद्धजुष्टः॥
युद्धाय सोमेन विशेषदृप्तस्तृतीयनेत्रानलभीमवक्त्रः।
( म० पु० २३।३७-३ )

२. सोऽयजद् राजसूयेन विजित्य भुवनत्रयम्।
पत्नीं बृहस्पतेर्दर्पात् तारां नामाहरद् बलात्॥
यदा स देवगुरुणा याचितोऽभीक्ष्णशो मदात्।
नात्यजत् तत्कृते यज्ञे देवदानवविग्रहः॥
( श्री० भा० ९।१४।४–५ )

३. तदस्त्रयुग्मं जगतः क्षयाय प्रवृद्धमालोक्य पितामहोऽपि।
अन्तः प्रविश्याथ कथं कथञ्चिन्निवारयामास सुरैः सहैव॥
यस्मात् परस्त्रीहरणाय सोम! त्वया कृतं युद्धमतीव भीमम्।
पापग्रहस्त्वं भविता जनेषु शान्तोऽप्यलं नूनमथासितान्ते॥
भार्यामिमामर्पय वाक्पतेस्त्वं न चावमानोऽस्ति परस्वहारे।
( म० पु० २३।४४-४६ )

४. ततो निवार्योशनसं रुद्रं ज्येष्ठं च शङ्करम्।
ददावाङ्गिरसे तारां स्वयमेव पितामहः॥
( वा० पु० ९०।३५ )

५. जातमात्रः स तेजस्वी सर्वाण्येवाजयद् बली।
( म० पु० २४।४ )

रस्यातितेजस्वितया चारुतया च गुरुमिन्दुञ्च साभिलाषौ[1] दृष्ट्वा समुत्पन्नसन्देहाः सन्तो देवाः 'माता भस्त्रा पितु पुत्र' इत्यादिवचनात् पितुरेव पुत्र, मातैव पुत्रजनकं वेत्ति, इत्यतोऽस्य को जनक इति निश्चेतु तारामेव पप्रच्छु.—कथय सुभगे? कस्यायमात्मज कुमारः सोमस्य गुरोर्वा?

इत्येव बहुश पृष्टाऽपि सा यदा ह्रिया न किञ्चिदुक्तवती[2], तदा कुमार क्रोधाविष्टः प्राह—दुष्टे अम्ब! कस्मान्न मम तातमाख्यासि। साम्प्रतमेवाहमलीकलज्जावत्यास्ते शास्तिं करोमि।[3]

अथ प्रपितामहो ब्रह्मा त कुमारमपवार्य स्वयमेवाप्राक्षीत्—वत्से! सत्य ब्रूहि, कस्यायमौरस कुमार., सोमस्याथ बृहस्पते? तत. सा लज्जावशाच्छनै प्राह—सोमस्येति। तत स्फुरदुच्छ्वसितामलकपोलकान्तिरुडुपति कुसुमशरसुन्दर त सुकुमार कुमार प्रेमनिर्भरमालिङ्ग्य साधु वत्स! साधु! प्रज्ञासम्पन्नोऽसीत्युच्चार्य बुध इति तस्य नाम चक्रे[4]। ततो विधाता तस्याभिषेकं विधाय युवान कृत्वा तस्मै ग्रहसाम्य प्रदाय पश्यत्सु च देवेषु ब्रह्मर्षिभिः सह स्वक धाम जगाम[5]। एव सोमोऽत्रिमुनेरात्मजो बुधस्य पिता पुरूरवसश्च पितामहो निगद्यते[6]।

---

१ स्पृहामङ्गिरसश्चक्रे कुमारे कनकप्रभे।
ममाय न तवेत्युच्चैस्तस्मिन् विवदमानयो ॥
(श्री० भा० ९।१४।११)

२ अपृच्छस्ते सुरास्तत्र केन जात कुमारक।
अथ सा लज्जिता तेषा न किञ्चिदवदत्तदा ॥
(म० पु० २४।५)

३ ह्रीयमाणा यदा देवान्नाह सा साध्वसाधु वा।
तदा ता शप्तुमारब्ध कुमारो दस्युहन्तमा ॥
(वा० पु० ९०।४०)

४. सा प्राञ्जलिरुवाचेद ब्रह्माण वरदं प्रभुम्।
सोमस्येति महात्मानं कुमारं दस्युहन्तमम् ॥
तत सुतमुपाघ्राय सोमो धाता प्रजापतिः।
बुध इत्यकरोन्नाम तस्य पुत्रस्य धीमत. ॥
(वा० पु० ९०।४२-४३)

५. अभिषेक तत कृत्वा युवानमकरोद्विभु।
ग्रहसाम्य प्रदायाथ ब्रह्मा ब्रह्मर्षिसंयुत ॥
पश्यता सर्वदेवाना तत्रैवान्तरधीयत ॥
(म० पु० २४।८½)

६ अत्रे पुत्रोऽभवत् सोम सोमस्य तु बुधः स्मृतः।
बुधस्यैको महेन्द्राभः पुत्र आसीत् पुरूरवा ॥
(महाभा०, द्रो० प० १४४।४)

प्राक्षापूर्वाधिपत्यमाह्लादजनक सर्वानन्दकर सोम समवेक्ष्य दक्षप्रजापतिना रूपलावण्य-सम्पन्ना सुयोग्या स्वकीया सप्तविंशति कन्यकाश्चन्द्रमसे पत्नीत्वेन समर्पिता । एता सर्वा दक्षात्मजाश्चन्द्रपत्न्य कालविभागज्ञापने नियुक्ता लोकव्यवहारनिर्वाहाय नक्षत्रनाम्ना ज्यौतिष-शास्त्रेषु व्यवहृता विद्यन्ते ।[1]

यद्यपि चन्द्रमस: सर्वा भार्या समानरूपवत्य सर्वाङ्गसुन्दर्यश्चासन्, तथापि तासु रोहिणी सर्वातिशायिनी चन्द्रमसो मनोरमा बभूव[2] । अतोऽन्या उपेक्ष्य स रोहिण्यामेव प्रीतिमानभूत् । तदिदमनुचितं मत्वा ता सर्वा ईर्ष्यावत्य पितु समीपमुपेत्याममुमर्थं शशसु —तात ! अस्मासु तुल्यप्रभावासु सतीष्वपि ते जामाता रोहिणीमेवाधिक मन्यतीति । ततो दक्ष सर्वासु समान-भावेन व्यवहाराय सोममादिश्य ता पत्यावर्तयत । अथापि तदादेशमवहेत्य स पूर्ववद् रोहिण्यामेवासक्तो बभूव ।

पुनस्तच्छ्रुत्वा दक्षेण रोषात् तदर्थ राजयक्ष्माणमुत्पाद्य तच्छरीरे प्रवेशित । तत शनै शनै क्षीयमाणे चन्द्रे यदा ओषधय प्रजाश्च क्षीणतामुपगता , तदा देवानामनुरोधेन दक्षस्तद्-रोगनिर्वृत्तये उपायं निर्दिशन्नुवाच – सोमो हि सर्वासु भार्यासु समान व्यवहरतु, अपि च पश्चिमसमुद्रे सरस्वतीसङ्गमे हिरण्मयतीर्थे स्नान च कुर्यात् । तत्रैव भगवतो महादेवस्या-राधनया तस्य कान्ति प्रागिव निर्मला भविष्यति[3] ।

अथ पञ्चदशदिनपर्यन्त क्षीणो भविष्यति, तथा पञ्चदशदिनानि यावद् वर्द्धिष्यते । तदनुसारं सोऽमावस्याया तत्र तीर्थे स्नात्वा तत्तीर्थप्रभावात् पूर्ववत् स्वकीयानि प्रकाशवन्ति प्रभायुक्तानि शीतलानि किरणान्यवाप्य पुन समस्त जगत् प्रकाशयितुमारब्धवान् । अतस्तत्कालादेव

---

१. ता सर्वास्त्वनवद्याङ्गा. कन्या कमललोचना ।
कालस्य नयने युक्ता सप्तविंशतिमिन्दवे ॥
( महाभा०, आ० प० ७५।९ )
सप्तविंशत्तु या कन्या दक्ष. सोमाय ता ददौ ।
सर्वा नक्षत्रनाम्न्यस्ता ज्यौतिषे चैव कीर्तिता. ॥
( वा० पु० ६६।५२ )

२. तास्तु सर्वा विशालाक्ष्यो रूपेणाप्रतिमा भुवि ।
अत्यरिच्यत तासा तु रोहिणी रूपसम्पदा ॥
( महाभा०, शा० प० ३५।४७ )

३. सम वर्ततु सर्वासु शशी भार्यासु नित्यश ।
समुद्रं पश्चिम गत्वा सरस्वत्यब्धिसङ्गमम् ।
आराधयतु देवेश तत. कान्तिमवाप्स्यति ॥
( तत्रैव. ३५।७७ )

तत्तीर्थं प्रभाप्राप्त्या प्रभासतीर्थं नाम्ना प्रसिद्ध जातम्[1]। तेनैव शापेनाद्यापि चन्द्रमा कृष्णपक्षे प्रतिपदमारभ्य क्रमश· प्रत्यहं क्षीयते, तथा शुक्लपक्षे प्रतिपदमारभ्य पूर्णिमापर्यन्त-मेकैकाभि कलाभिर्वर्द्धते। पीयूषपिण्डमय तस्य मण्डलाकार स्वरूप मेघस्य श्यामया रेखयाऽऽच्छन्नमिव दृश्यते, तथा तस्य शरीरमध्ये मेघश्यामल शशकचिह्न स्पष्ट विलोक्यते इति महाभारतीया कथाऽत्रानुसन्धेया ( शान्तिपर्वणि ३४२।५७-५८ )

वायुपुराणानुसार तु राजयक्ष्मणा प्रतिदिन क्षीयमाण. सोम. स्व पितरमत्रिमुनिसमीप-मुपेत्य तन्निवृत्तये प्रार्थयाञ्चकार। तदनु तेन स्वतपोबलप्रभावेण तस्य शमन विधाय स स्वस्थीकृत.।

अपि च शीतलरश्मि सूर्य इव तेजस्वी प्रकाशमय· प्रसन्नात्मा चन्द्रमा समुद्रमन्थन-समये मध्यमानात् क्षीरसमुद्रान्निर्गतेषु चतुर्दशरत्नेष्वन्यतम रत्नमप्युक्तमस्ति महाभारते पुराणेषु च[2]। पूर्णिमाया चन्द्रोदयसमये ताम्रपात्रे मधुमिश्रितपक्वान्नैर्युक्तस्य बलेश्चन्द्रमसे समर्पणेन चन्द्रसमुद्रयोर्वृद्धिर्जायते। साध्य-रुद्रादित्यविश्वेदेव-मरुद्गणाश्विनीकुमारादीना च महती तृप्ति-र्भवति। अत एव च चन्द्रार्घ्यप्रदानसमये सोमस्यात्रिनेत्रसमुद्रसम्भवत्व सम्यक् सघटते।

किञ्च धर्मपुत्रेषु अष्टवसुषु अन्यतमोऽपि सोम प्रोक्तो विद्यते। वसुरूपेणाय मनस्विन्या गर्भजोऽस्ति। अस्य मनोहरनामिकाया पत्न्या चत्वारस्तनया अजायन्त—वर्चा., शिशिरः, प्राण., रमणश्च। सोम· स्वं ज्येष्ठं पुत्र वर्चस देवकार्यसिद्धिनिमित्त षोडशवर्षपर्यन्तं भूतले स्थातु प्रणीकृत्य प्रेषितवानासीत्। योऽभिमन्युरूपेणार्जुनात् सुभद्रायामुत्पन्न आसीत्[4]। अत एव मत्स्यपुराणेऽपि द्युतिमत सोमस्य वसुत्वमुक्त सगच्छते।[5]

---

१. विमुक्तशाप पुनराप्य तेज सर्वं जगद् भासयते नरेन्द्र।
एव तु तीर्थप्रवर पृथिव्या प्रभासनात् तस्य तत प्रभास ॥
( महाभा०, शा० प० ३५।४२ )
अतश्चैतत् प्रजानन्ति प्रभासमिति भूमिप।
प्रभा हि परमा लेभे तस्मिन्नुन्मज्ज्य चन्द्रमा ॥
( तत्रैव ३५।८५ )

२ तत शतसहस्रांशुर्मथ्यमानात्तु सागरात्।
प्रसन्नात्मा समुत्पन्नः सोम शीतांशुरुज्ज्वल. ॥
( महाभा०, आ० प० १८।३४ )

३. अत्रिनेत्रसमुद्भूत! क्षीरोदार्णवसम्भव।
गृहाणार्घ्यं मया दत्तं रोहिण्या सहित शशि ॥

४ यस्तु वर्चा इति ख्यात· सोमपुत्र. प्रतापवान्।
सोऽभिमन्युर्बृहत्कीर्तिरर्जुनस्य सुतोऽभवत् ॥
ततः षोडश वर्षाणि स्थास्यत्यमरसत्तमा ॥
( महाभा०, आ० प० ६७।११२ )

५. द्युतिमान् धर्मयुक्तश्च सोमो देवो वसु. स्मृत।
( म० पु० २७।४८ )

पीयूषपिण्डस्य सोमस्यामृतमय्य पोडशकला सन्ति । तत्र कृष्णपक्षे प्रतिपदमारभ्यामावस्यापर्यन्त प्रत्यह पितृदेवा क्रमश एकैका कला पिबन्ति । दर्शपर्यन्त पञ्चदशसु कलासु पितृभिः पीतासु षोडश्या कलाया अवशिष्टत्वादेककल चन्द्रमस भगवान् भास्कर. स्वकीयेन सुषुम्णाख्येन रश्मिना पुन पूर्णिमापर्यन्तमेकैकामेव कलामाप्याययति[1] । एव सुधास्राविकिरणस्य सोमस्यामावास्या यावदेकैका कला पितर पिबन्ति । पितृभि. पीतसुध कलामात्रावशिष्ट सोम सूर्यदेव स्वै. प्रकाशमयै किरणै· पुन. पोपयति । येन क्रमेण पितरश्चन्द्रमसोऽमृत पिबन्ति, तेनैव क्रमेणादित्य. शुक्लपक्षीयप्रतिपत्तिथित. पूर्णिमापर्यन्त प्रतिदिन निशाकरं पुष्णाति ।[2]

इत्थ पञ्चदशभिर्दिनै. सञ्चितं सोमामृत सुधाहारा पितर. पुनः पातुमारभन्ते, यतस्ते मृत्युभेषजरूपायाः सुधाया नियमेन पानात् कल्पान्तकालपर्यन्तं जीवन्ति । अतस्ते सुधाहारा देवा अमरा अप्युच्यन्ते ।[3]

तथा च जन्यभावमात्रस्य नियमेन ध्वसप्रतियोगित्वात् पितृदेवानाममरत्वमनुपपन्नमित्याक्षेपो निरस्त , प्रलये भावभूताना तेषा पितृदेवाना विनाशे सत्यपि तत्पूर्वकाल यावत् स्थितिरूपस्यामरत्वस्य निर्बाधात् ।

यस्मिन् समये द्विकलामात्रावशिष्टश्चन्द्रमा सूर्यमण्डले प्रविश्य तस्यामानामके किरणे तिष्ठति, स कालोऽमावस्यातिथि· कथ्यते ।[4] अमावस्याया रात्रौ सोम क्रमशः प्रथम जले प्रविशन् वृक्षलतादिषु निवसन् सूर्ये प्रविशति । अतोऽस्मिन् समये यो वृक्षादि छिनत्ति, पत्रादिक वा

---

१ क्षीणं पीत सुरै सोममाप्याययति दीप्तिमान् ।
मैत्रेयैककल सन्त रश्मिनैकेन भास्कर ॥
येन क्रमेण पीतोऽसौ देवैस्तेन निशाकरम् ।
आप्याययत्यनुदिन भास्करो वारितस्कर ॥
( वि० पु० २।१२।४–५ )

२. पीतं पञ्चदशाहञ्च रश्मिनैकेन भास्कर ।
आपूरयन् ददौ तेन भाग भागमह क्रमात् ॥
इत्येवं सूर्यवीर्येण चन्द्रस्याप्यायिता तनु· ।
पूर्णमास्या प्रदृश्येत शुक्ल सम्पूर्णमण्डल· ॥
( म० पु० २५।५५-५७ )

३. सम्भृतश्चार्द्धमासेन तत् सोमस्थं सुधामृतम् ।
पिबन्ति देवा मैत्रेय ! सुधाहारा यतोऽमरा ॥
( वि० पु० २।१२।६ )

४. कलाद्वयावशिष्टस्तु प्रविष्ट सूर्यमण्डलम् ।
अमाख्यरश्मौ वसति अमावस्या ततः स्मृता ॥
( तत्रैव २।१२।८ )

त्रोटयति तस्य ब्रह्महत्याया पातक भवति।[१] तदेवं दर्शाहोरात्रेऽप्सु वीरुत्सु च प्रवेशादुपक्षीण-प्राये कलात्मके पञ्चदशभागे किञ्चिदवशिष्टे सति अपराह्णे पितृगणा पानार्थं चन्द्रमसं पर्युपासते। द्विकल सोम पर्युपास्य तस्येन्दो. शिष्टा पञ्चदशी कलामेव द्विलवपरिमितं कालं निभृत पितर पिबन्ति, न तु षोडशी कलाम्। इत्थममावस्याया सोमस्य गभस्तिभ्यो नि सृत सुधामृत पीत्वा सौम्या बर्हिषद अग्निष्वात्ताश्च पितरो मासपर्यन्त परमा तृप्तिमाप्नुवन्ति।[२] "सोमाच्चैवामृतप्राप्ति' पितृणा तर्पणं तथा" इत्यादिवचनानुसारममावस्याया कुहूकाले सोमामृतेन तर्पणस्य महन्महत्त्वमस्ति। अत एव बुधस्य पुत्र पुरूरवा कुहूमात्रे पितॄन् तर्पयितु प्रत्यमावस्य दिवमुपतिष्ठते स्म[३]।

एव चन्द्रमा शुक्लपक्षे देवगणान् कृष्णपक्षे च पितॄन् तथाऽमृतमयै शीतलै रश्मिभि-र्वृक्षलतौषधीश्चाह्लादयन् मनुष्य-पशु-पक्षि-कीट-पतङ्गादीन् समस्तान् प्राणिनो निरन्तर पुष्णाति।[४]

एव विष्णुशक्त्यधिष्ठितस्य रवेरपि पित्रादितर्पकत्वमुक्तमस्ति। शुक्लप्रतिपदमारभ्या-पूरित पोडशकल: सन् कृष्णपक्षीयप्रतिपदादिप्रत्यहमेकैककलांशेनामरे पीयते। एवममरैरेकैक-

---

१ छिनत्ति वीरुधो यस्तु वीरुत्सस्थे निशाकरे।
पत्र वा पातयत्येक ब्रह्महत्या स विन्दति॥
(वि० पु० २।१२।१०)

२. नि सृत तदमावस्या गभस्तिभ्य सुधामृतम्।
मास तृप्तिमवाप्याग्र्या पितर' सन्ति निर्वृता.॥
सौम्या बार्हषदश्चैव अग्निष्वात्ताश्च ते त्रिधा।
(तत्रैव २।१२।१३)

३. ऐल पुरूरवा विद्वान् मासि श्राद्धचिकीर्षया।
तत स दिवि सोम वै ह्युपतस्थे पितॄनपि॥
द्विलव कुहूमात्र च वसस्तेषा च तृप्तये।
स्वधामृतेन सौम्येन तर्पयामास वै पितॄन्॥
(म० पु० ४०।७–१२)

४. एव देवान् सिते पक्षे कृष्णपक्षे तथा पितॄन्।
वीरुधश्चामृतमयै शीतैरप्परमाणुभिः॥
वीरुधौषधिनिष्पन्ना मनुष्यपशुकीटकान्।
आप्याययति शीतांशु. प्रकाशाह्लादनेन च॥
(वि० पु० २।१२।१४।१५)

कलायामशेन पीताया चतुर्दश्यन्ते द्विकलमवशिष्ट सन्त कृष्णपक्षक्षये दर्शे पितरः किञ्चित् पिबन्ति, तेन चन्द्रतर्पणप्रकारेण भास्करात् तेषा देवपितॄणा तर्पण भवति[1]।

खेचरचक्रसञ्चालननिमित्तमस्य स्थितिरन्तरीक्षे वर्ण्यते। पृथिवीतो लक्षयोजनोपरि भागे सूर्य्यमण्डल विद्यते। तथा सूर्य्यमण्डलत उपरि लक्षयोजनदूरे चन्द्रमण्डमप्यस्ति। चन्द्रमण्डलतो लक्षयोजनदूरे उपरि नक्षत्रमण्डल वरीवर्ति। ततो नक्षत्रमण्डलतो लक्षद्वययोजनोपरि बुधमण्डल वर्तते। ततोऽप्युपरि लक्षद्वययोजने शुक्रोऽस्ति। ततो लक्षद्वययोजनोपरि मङ्गललोको विद्यते। मङ्गलतो द्विलक्षयोजनदूरे उपरि बृहस्पते स्थानं वर्तते। ततो लक्षयोजनोपरि शनिस्तिष्ठति। शनितो लक्षयोजनदूरे सप्तर्षिमण्डलमस्ति। तत शतसहस्रयोजनोपरि ज्योतिश्चक्रस्य नाभिरूपो ध्रुवो वर्तते। स एवास्ति भगवतो विष्णो परमं पदम्। तथाहि[2]—

१ पितृदेवमनुष्यादीन् स सदाऽऽप्याययन् प्रभु।
परिवर्त्तत्यहोरात्रकारण सविता द्विज॥
सूर्यरश्मि सुषुम्णो यस्तर्पितस्तेन चन्द्रमा.।
कृष्णपक्षेऽमरै. शश्वत् पीयते वै सुधामय॥
पीत तद् द्विकल सोम कृष्णपक्षक्षये द्विज।
पिबन्ति पितर शेप भास्करात्तर्पण तथा॥
(वि० पु० २।११।२१-२३)

२. भूमेर्योजनलक्षे तु सौर मैत्रेयमण्डलम्।
लक्षाद्दिवाकरस्यापि मण्डल शशिन स्थितम्॥
पूर्णे शतसहस्रे तु योजनाना निशाकरात्।
नक्षत्रमण्डल कृत्स्नमुपरिष्टात् प्रकाशते॥
द्वे लक्षे चोपरि ब्रह्मन् बुधो नक्षत्रमण्डलात्।
तावत्प्रमाणभागे तु बुधस्याप्युशनाः स्थित॥
अङ्गारकोऽपि शुक्रस्य तत्प्रमाणे व्यवस्थितः।
लक्षद्वयेन भौमस्य स्थितो देवपुरोहित.॥
शौरिर्बृहस्पतेश्चोर्ध्वं द्विलक्षे सम्यगास्थितः।
सप्तर्षिमण्डल तस्माल्लक्षमेक द्विजोत्तम॥
ऋषिभ्यस्तु सहस्राणा शतादूर्ध्वं व्यवस्थित।
मेधीभूत समस्तस्य ज्योतिश्चक्रस्य वै ध्रुव।
(वि० पु० २।७।५-१०)

| | | | | | |
|---|---|---|---|---|---|
| भूमे | १ | लक्षयोजनोपरि | दूरे | सूर्यमण्डलं | वर्तते |
| सूर्यमण्डलत | १ | ,, | ,, | चन्द्रमण्डलम् | ,, |
| चन्द्रमण्डलत | १ | ,, | ,, | नक्षत्रमण्डलम् | ,, |
| नक्षत्रमण्डलत | २ | ,, | ,, | बुध· | ,, |
| बुधात् | २ | ,, | ,, | शुक्र | ,, |
| शुक्रात् | २ | ,, | ,, | मङ्गललोक· | ,, |
| मङ्गलात् | २ | ,, | ,, | बृहस्पति | ,, |
| बृहस्पते | २ | ,, | ,, | शनि | ,, |
| शनित | १ | ,, | ,, | सप्तर्षिमण्डल | ,, |
| सप्तर्षित. | १ | ,, | ,, | ध्रुवलोकः | ,, |
| | १५ | एवं पञ्चदशलक्षयोजनपरिमिता समस्ता त्रिलोकी | | | ,, |

तथा चोच्छ्रायेन पञ्चदशलक्षयोजनेन यज्ञादिफलस्य भोग्यभूमिरेतत् त्रैलोक्यमित्युच्यते। अत एवोक्तम् "यतो हि कर्मभूरेषा इतोऽन्या भोगभूमय।" अतो भारतवर्षे लब्धजन्मना पुसा नित्य नून यज्ञादिधर्मे प्रयतितव्यम्, यतो हीज्याविधानस्यात्रैव व्यवस्था विद्यते[1]।

तत्र ग्रहेषु सर्वेभ्योऽधस्तात् सूर्योऽस्ति। तत ऊपरि चन्द्रमा विराजते[2]।

ग्रहरूपेण चन्द्रमसो वर्णनप्रसङ्गे विष्णुपुराणे प्रोक्तमस्ति यच्चन्द्रमसो रथे त्रीणि चक्राणि वर्तन्ते। तत्र वामदक्षिणयो पार्श्वयो कुन्दकुसुमसमश्वेतवर्णा दश वाजिनो युक्ता विद्यन्ते। ध्रुवस्याधारे स्थितेन तेन वेगशालिना रथेन चन्द्रमा नागवीथ्याश्रयाणि अश्विन्यादीनि नक्षत्राणि उपभुङ्क्ते। सूर्यवदेवास्यापि समुद्रगर्भसमुद्भवा अश्वा. सकृद् युक्ता रथमाकल्पान्त वहन्ति।[3]

---

१. त्रैलोक्यमेतत् कथितमुत्सेधेन महामुने।
इज्याफलस्य भूरेषा इज्या चात्र व्यवस्थिता॥
(वि० पु० २।७।११)

२. सर्वेषा तु ग्रहाणा वै सूर्योऽधस्तात् प्रसर्पति।
विस्तीर्णं मण्डलं कृत्वा तस्योर्ध्वं चरते शशी॥
(म० पु० २२।७२)

३. रथस्त्रिचक्र· सोमस्य कुन्दाभास्तस्य वाजिन.।
वामदक्षिणतो युक्ता दश तेन चरत्यसौ॥
अर्कस्येव हि तस्याश्वाः सकृद् युक्ता वहन्ति ते·
कल्पमेक मुनिश्रेष्ठ! वारिगर्भसमुद्भवा॥
(वि० पु० २।१२।१-३)

चन्द्रमण्डलस्य व्याम एकादशसहस्रयोजनम्, परिधिर्विस्तारस्त्रयस्त्रिंशत्सहस्रयोजनम्, तस्य स्थौल्यञ्चोनपष्टिशतयोजन विद्यते ।[1] एप नक्षत्रै सह मेरु परिक्रमन् पर्वसन्धिसमये विभिन्नान् मासाश्च विभजन् सूर्य इव मेरुमुल्लङ्घ्य मन्दराचलमाश्रयते ।[2]

मेरो पूर्वस्यामिन्द्रस्य देवधानी, दक्षिणस्या यमस्य सयमनी, पश्चिमस्या वरुणस्य निम्लोचा, उत्तरस्याञ्च चन्द्रमसो विभावरीनाम्नी पुरी वर्तते । आसु पुरीसु यथासमय सूर्योदय-मध्याह्न-सायाह्न-निशीथा भवन्ति । ये सुमेरौ निष्ठन्ति तेषा कृते सर्वदा मध्याह्न एव भवति । यस्या पुर्या सूर्योदयो जायते तद्विपरीताया पुर्या सूर्योऽस्त गच्छन् प्रतीयते । सूर्यो हीन्द्रपुरीत पञ्चदशपरिक्रमाभिर्यमपुरीमुपतिष्ठते । एतावति समये स सपादकोटिद्वययोजनाना सार्द्धलक्ष-द्वययोजनानि मार्गानुल्लङ्घते । एव क्रमशो वरुण-चन्द्रमसो पुर्यावतिक्रम्य स पुनरैन्द्रीमुपतिष्ठते ।

एव चन्द्रादयो ग्रहा अपि ज्योतिश्चक्रेऽन्यैर्नक्षत्रै साकमुदयन्तेऽस्तञ्च गच्छन्ति । एकेन मुहूर्त्तेन चतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिकानि सौरो रथस्त्रयीमयोऽसौ चतसृषु परिवर्तते[3] ।

भूमण्डलतो लक्षयोजनपर्यन्तमुपरिभागे सूर्यमण्डल व र्तते । पृथ्वीतो लक्षद्वययोजने दूरे उपरि चन्द्रमण्डले चन्द्रमा विद्यते । तस्य गतिर्महती वेगवती वर्तते । अथ सूर्यस्य सवत्सरगति-मेकस्मिन् मासे, मासस्य गति सार्द्धद्वयदिने, एकस्य पक्षस्य गतिमेकस्मिन् दिने पूरयति । एप कृष्णपक्षे क्षीयमाणाभि कलाभि पितृणा शुक्लपक्षे वर्द्धमानाभि कलाभिर्देवाना च रात्रिन्दिव विभजते, तथा त्रिंशद्भिर्मुहूर्तैरेकैक नक्षत्रमतिक्रामति । पोडशकलोऽय सोमो मनोमयत्वादमृत-मयत्वादन्नमयत्वाच्च देव-पितृ-मनुष्य-पशु-पक्षि-सरीसृप-वीरुधा प्राणाप्ययनशीलत्वाच्च समस्ते-भ्यो जीवेभ्य· प्राणान् जीवनं च प्रददाति । अत एवाय सर्वमय प्रोच्यते[4] ।

केचन शिशुमारसस्थानेन भगवतो वासुदेवस्य, ककुदि बृहस्पति , वक्षसि सूर्यस्य, हृदये नारायणस्य, मनसि चन्द्रमस , नाभ्यामुशनसो वास इति वर्णयन्ति—बृहस्पति ककुदि, वक्षस्या-

---

१. षष्टिमाहु शतान्यस्य बुधा पौराणिकास्तथा ।
चन्द्रमास्तु सहस्राणि राजन्नेकादश स्मृत. ॥
विष्कम्भेण कुरुश्रेष्ठ ! त्रयस्त्रिंशत्तु मण्डलम् ।
एकोनषष्टिर्विष्कम्भ शीतरश्मेर्महात्मन. ॥
( महाभा०, व० प० १२।४२–४३ )

२ स मासान् विभजन् काले बहुधा पर्वसन्धिषु ।
तथव भगवान् सोमो नक्षत्रैः सह गच्छति ॥
एवमेत त्वतिक्रम्य महामेरुमतन्द्रित. ।
भगवान् सर्वभूतानि पुनर्गच्छति मन्दरम् ॥
( महाभा०, व० प० १६३।३१–३२ )

३. श्रीमद्भागवते ५ । २१ । ७-१२ ।

४. तत्रैव ५ । २२ । ८-१० ।

दित्यो, हृदये नारायणो, मनसि चन्द्रमा, नाभ्यामुशना[1]। अतश्चन्द्रमा मनसो जात इति सगच्छते।

केषाञ्चिन्मते सूर्याद्दशयोजनमधस्तान्नक्षत्रवद्राहु परिभ्रमति। असुराधमत्वादयं सैंहिकेय एतत्पदयोग्यो नासीत्, किन्तु भगवतो विष्णो कृपया अमरत्व ग्रहत्व चाभि लब्ध्वा ग्रहेषु गण्यते। सूर्यस्य देदीप्यमान मण्डल दशसहस्रयोजनम्, चन्द्रमसो मण्डलं द्वादशसहस्रयोजन राहोश्च मण्डल त्रयोदशसहस्रयोजन विस्तीर्णमुक्तमस्ति। समुद्रमन्थनानन्तरममृतपानावसरे राहुर्देववेषेण सोम-सूर्ययोर्मध्ये समुपविष्टस्तयो सङ्केतेन भगवता तच्छिरस्तत्काल चक्रेण छिन्नम्। तत्कालादेव शिरो राहु कायश्च केतुरिति प्रोच्यते। अमृतपानात् प्राप्तामरत्वो राहुस्तदेव वैर स्मार स्मार समये समये अमावस्याया सूर्यं पूर्णिमायाञ्च पूर्णं चन्द्रमसमाक्राम्यति। तयोरेतादृश शाश्वतिक भयमालोक्य भगवता विष्णुना तयो रक्षार्थं स्वकीय प्रियतममस्त्र सुदर्शन नाम चक्र नियुक्त यत्तयो पार्श्वयोर्निरन्तर परिभ्रमति। अत आक्रमणकाले राहुस्तस्यासह्येन तेजसा समुद्विग्न-हृदय सन् मुहूर्तमात्र कथञ्चित् सम्मुखे स्थित्वा परावर्तते। यावत्काल स तयो समक्ष तिष्ठति, तावज्जना ग्रहणकाल इति कथयन्ति[2]। यत् पार्थिव जगत् पादसञ्चरणयोग्यमस्ति तद् भूलोको निगद्यते। पृथ्वीसूर्ययोर्मध्ये यत् सिद्ध-मुनिगणादिसेवित स्थान वर्तते तद् भुवर्लोक कथ्यते। सूर्यध्रुवयोर्मध्ये यच्चतुर्दशलक्षयोजनस्यान्तर विद्यते तदेव लोकस्थितिविशेषज्ञैः स्वर्लोक· कथ्यते। एव त्रयो भूर्भुव स्वर्लोकास्त्रैलोक्य कृतक च कथ्यते[3]।

भगवत सूर्यस्याधारो ध्रुवोऽस्ति, ध्रुवस्याधार· शिशुमारो विद्यते, शिशुमारस्य चाश्रयोऽस्ति श्रीनारायण, यतस्तस्य हृदयकमले सर्वेषा प्राणिना पालक आदिभूत सनातन स महापुरुषो विराजते[4]।

---

१. श्रीमद्भागवते ५। २३। ७।

२. तत्रैव ५। २४। १-३।

३ पादगम्य तु यत् किञ्चिद् वस्त्वस्ति पृथिवीमयम्।
स भूलोक समाख्यातो विस्तारोऽस्य मयोदित ॥
भूमिसूर्यान्तर यच्च सिद्धादिमुनिसेवितम्।
भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तम ॥
ध्रुवसूर्यान्तर यच्च नियुक्तानि चतुर्दश।
स्वर्लोक· सोऽपि गदितो लोकसंस्थानचिन्तकै· ॥
त्रैलोक्यमेतत् कृतक मैत्रेय परिपठ्यते ॥
(वि० पु० २।७।१६-१८)

४. आधारभूत सवितुर्ध्रुवो मुनिवरोत्तम।
ध्रुवस्य शिशुमारोऽसौ सोऽपि नारायणात्मक ॥
हृदि नारायणस्तस्य शिशुमारस्य सस्थित।
बिभर्ता सर्वभूतानामादिभूत सनातन ॥
(तत्रैव २।९।२४-२५)

अयं भाव —नक्षत्राणामयनं दिवि शिशुमाराकृति यद्रूपं प्रोक्तं तस्य हृदि स्थितः स्वयं नारायण एव तस्याधारः ।

ध्रुवलोको भगवतो विष्णोः परमं पदमुच्यते । ध्रुवस्याश्रयेण प्रवहवायुप्रेरणया कालचक्रे नियुक्ता ग्रहोपग्रहनक्षत्रज्योतिर्गणाः स्वस्वकार्यानुसारं स्वस्यां स्वस्यां कक्षायां कल्पान्तं यावन्निरन्तरं चक्रमन्ते, न पृथिव्यां केचिदपि च्यवन्ते । सर्वे स्वासु स्वासु कक्षासु स्थिराः सन्तः स्वानि कर्तव्यान्यनुतिष्ठन्ते ।

केचित्तु ज्योतिश्चक्रं शिशुमारचक्ररूपेण वर्णयन्ति । यस्य पुच्छभागे ध्रुवोऽवस्थितोऽस्ति । सोऽयं ध्रुवः स्वयं भ्रमन् चन्द्रमसं सूर्यमन्यान् ग्रहांश्च भ्रामयति । तेन भ्रमणशीलेन ध्रुवेण सह नक्षत्रगणोऽपि चक्रवत् परिभ्रमति । चन्द्र-सूर्य-तारा-नक्षत्राणि अन्यान्यग्रहैः समं वायुमय्या रज्ज्वा ध्रुवेण सह बद्धानि भूमौ न पतन्ति ।[1]

भगवतो विष्णोर्वामनावतारे पादत्रयभूम्यर्थं बलेर्निग्रहावसरे उपरि प्रसारितवामचरणनखनिर्गतायाः जलकेलिनिमित्तं समवेतदेवाङ्गनाङ्गरागपाण्डुवर्णायाः सर्वविधदुरितक्षयकारिण्याः पतितोद्धारिण्याः मनोहारिण्याः भगीरथप्रार्थनया कपिलक्रोधभस्मीभूतान् सगरात्मजानुद्धर्तुकामनया पूततमं वसुधातलमागन्तुमुत्कण्ठितायाः भगवत्या गङ्गायाः निर्मलेन जलेनाप्लावितं चन्द्रमण्डलमधिकं कान्तिमद् भवति । चन्द्रमण्डलान्निर्गत्य स्वर्णमयस्य सुमेरोः रम्ये शिखरे निपतन्ती एकैव सा समस्तं संसारं पवित्रयितुं चतुर्भिर्धाराभिश्चतुर्दिशमजस्रं प्रवहति ।[2]

भगवान् भास्करो हि अष्टभिर्मासैः स्वैः रश्मिभीः रसस्वरूपं जलमाकृष्य चतुर्भिर्मासैर्वर्षति, येनान्नादिः समुत्पद्यते । तेनैवान्नादिना समस्तस्य जीवनिवहस्य पालनं पोषणं च जायते ।

अयं भाव —सूर्यो हि स्वकीयैः किरणैः संसारे स्थितं जलमाकृष्य चन्द्रमसं पोषयति । स चाकाशे वायुमण्डलनालिकाद्वारा तज्जलं धूमाग्निवायुषु प्रापयति । चन्द्रद्वारा प्राप्तं जलं मेघे

---

१. तारामयं भगवतः शिशुमाराकृति प्रभो ।
दिविरूपं हरेर्यत्तु तस्य पुच्छे स्थितो ध्रुवः ॥
सैव भ्रमन् भ्रामयति चन्द्रादित्यादिकान् ग्रहान् ।
भ्रमन्तमनु तं यान्ति नक्षत्राणि च चक्रवत् ॥
सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः समम् ।
वातानीकमयैर्बन्धैर्ध्रुवे बद्धानि तानि वै ॥
(वि० पु० २।९।१-३)

२. वार्योघैः सन्ततैर्यस्याः प्लावितं शशिमण्डलम् ।
भूयोऽधिकतमां कान्तिं वहत्येतदुपक्षयम् ॥
मेरुपृष्ठे पतत्युच्चैर्निष्क्रान्ता शशिमण्डलात् ।
जगतः पावनार्थाय या प्रयाति चतुर्दिशम् ॥
सीता चालकनन्दा च चक्षुर्भद्रा च संस्थिता ।
एकैव या चतुर्भेदा दिग्भेदगतिलक्षणा ॥
(तत्रैव २।८।१०९-११२)

तत्काल न भ्रश्यति, अतस्तदभ्रमुच्यते। कालजनितसस्कारद्वारा तदभ्रस्थ जलं निर्मल भूत्वा वातप्रेरणया भूतले वर्षति। तेन वृष्टिजलेन पुष्टा ओषधय, फलानि अन्नादिकानि च शरीर-पोषणहेतवो भवन्ति। एव सूर्य-चन्द्र मेघादिद्वारा विसृष्ट वृष्टिजलमोषधादिपुष्टिपूर्वक सर्वषा प्राणिना जीवनायामृतकल्प भवति।[1] अभ्राणा धूमज्योतिर्वायुमयत्वम्—

**"न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्यतः।"**

इत्यनेन सलिलमयत्वमपि प्राप्तम्। अत एव कविकुलकलाधरेण कालिदासेन प्रोक्तं स्वकीये मेघदूते—

**"धूमज्योतिस्सलिलमरुतां सन्निपात क्व मेघः।" इति**

स्पष्टतया सगच्छते। एव भगवान् सविता स्वकीयकिरणद्वारा भूमिसस्थ यज्जल गृह्णाति तदेव जल पुन प्राणिना पुष्ट्यर्थं शस्यवृद्धिनिमित्तञ्च समुत्सृजति।[2] अत एव कविवर कालिदासो रघुवशे महाकाव्ये प्रोक्तवान्—

**"सहस्रगुणमुत्स्रष्टुमादत्ते हि रस रविः।" इति**

अनिष्टपरिहाराय, इष्टसिद्धिप्राप्तिहेतवे च पुराणेषु ग्रहाणा शान्तिविधान निर्दिष्टमस्ति। पुराणानुसार नवग्रहा मन्यन्ते। यथा—सूर्य, चन्द्रमा, मङ्गल, बुध, बृहस्पति, शुक्र, शनैश्चर, राहु केतुश्च।[3] नवग्रहाणा विभिन्नरूपेण निर्माण-स्थापन-पूजनप्रार्थनादीना पुराणेषू-ल्लेखो विद्यते। तत्तद्ग्रहाणा कृतेऽनेकविधपूजनसामग्र्या वर्णन विद्यते। तेषा होमार्थं विभिन्ना समिधोऽपि प्रोक्ता सन्ति। नवाना ग्रहाणा नवविधाना समिधा निर्देशो।[4] स्वरूपञ्च भिन्न भिन्न वर्णितमस्ति। शशिन स्वरूपनिर्माणवर्णन पुराणेषूक्तम्।[5]

१. विवस्वानष्टभिर्मासैरादायापो रसात्मिका।
वर्षत्यम्बु ततश्चान्नमन्नादप्यखिल जगत्॥
विवस्वानशुभिस्तीक्ष्णैरादाय जगता जलम्।
सोम पुष्यत्यथेन्दुश्च वायुनाडीमयैर्दिवि॥
नालैर्विक्षिपतेऽभ्रेषु धूमाग्न्यनिलमूर्तिषु।
न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्यत॥
(वि० पु० २।९।८-१०)

२ आदत्ते रश्मिभिर्यत्तु क्षितिसस्थ रस रवि।
तमुत्सृजति भूताना पुष्ट्यर्थं शस्यवृद्धये॥
(तत्रैव २।११।२४)

३. सूर्य सोमस्तथा भौमो बुधजीवसिताकजा।
राहु. केतुरिति प्रोक्ता ग्रहा लोकहितावहा॥
(म० पु० ९२।१०)

४. अर्क पलाश: खदिरो ह्यपामार्गोऽथ पिप्पल.।
औदुम्बर. शमी दूर्वा कुशाश्च समिध क्रमात्॥
(तत्रैव ९२।२७)

५. श्वेत: श्वेताम्बरधर. श्वेताश्व. श्वेतवाहन:।
गदापाणिर्द्विबाहुश्च कर्तव्यो वरद. शशी॥
(तत्रैव ९३।२)

मत्स्पुराणेऽङ्कितमस्ति यत्—आयुरारोग्यपुष्टि-श्री-शान्तिकामेन पुसा ग्रहयज्ञोऽवश्य विधातव्य [१]। श्रुति-स्मृति-पुराणादिविद्भिर्विपश्चिद्भिर्ग्रहयज्ञस्त्रिविध प्रोक्तो विद्यते—एकोऽयुतहोम , द्वितीयो लक्षहोम., तृतीयश्च सर्वकामप्रद कोटिहोम [२]। तत्रायुतहोमो विवाहोत्सव-यज्ञेषु प्रतिष्ठाकर्मणि च विधेय , येन सर्वा बाधा दूरीभवेत् । अयुतहोमेनाश्वमेधयज्ञफलप्राप्ति-र्भवति । कोटिहोमात् सर्वयज्ञफल भवति, भुक्तिर्मुक्तिर्वा लभ्यते । एव यथा गावो राजानो ब्राह्मणाश्च सत्कृता. सन्तो विशेष फल प्रददति, अनादृताश्चानिष्टमपि कुर्वन्ति, तथैव ग्रहा अपि पूजिता इष्ट प्रददति, नापूजितास्तु न[३]। अतो ग्रहशान्तिरवश्य कर्त्तव्या, तया सर्वोपद्रवाणा निवारण जायते नूनम्[४]। अपि च यस्मिन् गृहे त्रयाणामेषा ग्रहयज्ञानामङ्कित चित्र स्थाप्यते तत्र विशेषतो बालाना काऽपि ग्रहजन्यपीडा न भवति, न च कश्चन रोगो जायते, न वा किञ्चित् कष्टमुपतिष्ठते । अतो बालकानामारोग्यार्थं ग्रहबाधानिवृत्तये च ग्रहयज्ञाना चित्रस्थापनमत्या-वश्यकमस्ति[५]। पाश्चात्त्यज्योतिर्विद्भिर्मङ्गलग्रहस्य नामकरण मार्स ( MARS) इति कृतमस्ति, यस्य तात्पर्य युद्धकालीनमार्सल(MARSHAL)शब्देनास्ति । एव मङ्गलग्रहस्य विशेषदशाया-मनिष्टफलोत्पत्तिस्तैरपि स्वीक्रियते । भारतीयज्योतिषशास्त्रेण तु मङ्गलशनैश्चरादीना दुष्टग्रहाणा कुप्रभावतो रक्षायै अनेके उपाया निर्दिष्टा सन्ति, तथा तेषा विशेषमन्त्रैः स्नानेन दानेन होमेन बलिना च तत्प्रसन्नता प्रदर्शिताऽस्ति । तथा च—

स्नानैर्दानैर्हवनबलिभिस्तत्र तुष्यन्ति खेटाः ।

**उपसंहारः**

प्राय सर्वेषु शास्त्रेषु परिभाषिकशब्दाना भवत्यावश्यकता, या हि तस्य शास्त्रस्य विशेषताऽस्ति । एतदनुसारमेव पुराणेष्वपि पारिभाषिकशब्दाना महान् प्रयोगोऽस्ति । यथा सर्ग-प्रतिसर्ग-मन्वन्तर युग-कल्प-पर-परार्द्ध-सन्धि-सन्ध्यंशादय शब्दाः । व्याकरणनियमव्युत्पत्य-

१. श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ।
वृद्ध्यायु पुष्टिकामो वा तथैवाभिचरन् पुन ॥
( वि० पु० ९२।२ )

२. ग्रहयज्ञस्त्रिधा प्रोक्त पुराणश्रुतिकोविदै ।
प्रथमोऽयुतहोमास्याल्लक्षहोमस्तत परम् ।
तृतीय कोटिहोमस्तु सर्वकामफलप्रदः ॥
( तत्रैव ९२।५३ )

३. ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषत ।
पूजिता पूजयन्त्येते निर्दहन्त्यवमानिताः ॥
( तत्रैव ९२।७९ )

४. यथा बाणप्रहाराणा कवच वारक भवेत् ।
तद्वद्दैवोपघाताना शान्तिर्भवति वारिका ॥
( तत्रैव ९२।८० )

५. ग्रहयज्ञत्रयं गेहे लिखितं यत्र तिष्ठति ।
न पीडा तत्र बालाना न रोगो न च बन्धनम् ॥
( तत्रैव ९२।१५६ )

नुसार लोकव्यवहारे सामान्यरूपेण योऽपि अर्थ. सम्भवेत्, परन्तु पुराणेषु प्रयुक्तानामेषा शब्दाना स एवार्थोऽभिमतो भविष्यति, यो हि व्यासपरिभाषया निश्चितो भवेत्। अत पुराणानामनुशीलनसमये तेषा यथार्थेष्वर्थेषु अवश्य ध्यान प्रदेयम्, अन्यथा वैपरीत्यभ्रमोऽनिवार्यतया सम्भवेत्। एवञ्च कस्यापि ग्रन्थस्य वास्तविकमभिप्राय व्यञ्जयितु तद्ग्रन्थे प्रदत्तपारिभाषिकशब्दानामावश्यकता भवति। भूगोल-खगोलयोस्तु पारिभाषिकशब्दानामधिकं मूल्य महत्त्वमावश्यकता च वरीवर्ति, यतो हि तत्सम्बन्धिनं प्रत्येक भाव व्यक्तीकर्तुं भूयो भूय पारिभाषिकशब्दाना भवति प्रयोग आवश्यक। पारिभाषिकशब्दानामर्थसीम्नो निर्द्धारण ग्रन्थकारस्येच्छायामस्ति निर्भरम्। स य शब्द यावद् व्यापक कर्तुं वाञ्छति, तं तावत् स्वेच्छापूर्वक करोति। अस्मिन् विषयेऽन्यस्य कस्यचिद् विचारस्तस्मिन् नियन्त्रण कर्तुं न प्रभवति। अत. पौराणिकभूगोलविषयकपारिभाषिकशब्दानामर्थसीमा पौराणिकभाषानुसारमेव मन्तुं शक्य। लोकव्यवहारे भूमण्डलशब्दस्यार्थं काम पृथ्वीमण्डल भवेत्, किन्तु पुराणेषु भूमण्डलशब्दस्य परिभाषा कृताऽस्ति यत् सूर्यो यावद्दूर स्वकीय तापमुपस्थापयितु शक्नोति, तथा ताराभि. सह चन्द्रमा वा यावत्पर्यन्त दृश्यते तावद् विस्तृत स्थानं भूमण्डलमुच्यते। तथाहि–श्रीमद्भागवते **भूमण्डलायाम**विशेषो यावदादित्यस्तपति यत्र चासौ ज्योतिषा गणैश्चन्द्रमा वा दृश्यते ( ५।१६।१ ), विष्णुपुराणेऽप्युक्तमस्ति यत् सूर्यकिरणाना यावत् प्रकाशो जायते तथा चन्द्रमसो रश्मयो यावत्पर्यन्तमुपतिष्ठन्ते तावत्प्रदेशस्य नाम पृथ्वी वर्तते। स च समुद्र-नद-नदी-पर्वत पर्यन्त कथ न स्यात्। अनयैव दृष्ट्या पृथिव्या दैर्घ्यविस्तारौ पञ्चाशत्कोटियोजनपरिमितावुक्तौ स्तस्तथा सप्तसमुद्राणा वर्णनमप्यनयैव दृष्ट्या कृतमस्ति[1]।



१ रविचन्द्रमसोर्यावन्मयूखैरवभासते।
ससमुद्रसरिच्छैला तावती पृथिवी स्मृता॥ (वि० पु० २।७।३)

●●●

# गतिभक्षणार्थकः √चर् [चर] : अर्थविज्ञानम्

डॉ० भागीरथप्रसादत्रिपाठी 'वागीश. शास्त्री'
अनुसन्धानसंस्थाननिदेशक सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

√चर् ( चर ) १।५५८ गत्यर्थं, भक्षणेऽपि ( प )। वोपदेवस्तु त्रिष्वर्थेषु पठति धातुमिमम्—'गमनेऽदने आचारे' इति। एवमाचारार्थोऽधिकोऽन्यवैयाकरणानामर्थनिर्देशनात्। वस्तुतस्तु चर्धातोर्गतिभक्षणरूपावर्थाविव मुख्यौ। गतेर्व्यापकत्वादाचारादीना तत्रैवान्तर्भाव, अन्यथाऽऽचारार्थवद् अनन्तानामर्थानामिहोल्लेखेन गौरवादिति धातुपाठेष्वर्थद्वयस्यैव सकेत। चुरादौ (२०५) सशयार्थकश्चर्धातुर्दृश्यते। रलयोरभेददर्शनाच्चल्धातुरस्यैव भेद।

१ ऋ० (१, २४, ६) 'नेमा आपो अनिमिषं चरन्ती' इत्यत्र चर्धातो प्रवाहरूपेण गमनमर्थं, अपा गमन नाम प्रवाह इतीह जलशब्दसनिधानात् सामान्यगत्यर्थकश्चरधातुविशिष्टगत्यर्थको जात'। चल्धातु कम्पनरूपेऽर्थे पठित.। चर्धातुस्तस्यार्थमभिव्यनक्ति—'चरत् पतत्रि' ( ऋ० ३, ५४, ८ ) इत्यत्र 'चरत् = चञ्चल पशुजातम्, पतत्रि = पक्षिजातम्' इति सायण। सरीसृपकर्तृकस्य चर्धातोरिङ्गणमर्थ —वा० रा० (२, २८, १९)।

२. गगने गमनमुड्डयनम्। अयमर्थ सचरणशब्देनापि प्रकटीक्रियते, सम्यक् चरणेन तथार्थाभिव्यक्तेः। ऋ० (६, ५८, ३) 'यास्ते पूषन्नावो अन्त समुद्रे हिरण्ययीरन्तरिक्षे चरन्ति' इत्यत्र समुद्रान्तरिक्षयोरुभयोश्चरण नाम सचरणम्। ऋ० (१०, १०२, ८) 'शुनमष्ट्राव्यचरत् कपर्दी' इत्यत्र, ऋ० (१०, ५४, २) 'यदचरस्तन्वा वावृधान' इत्यत्र च सचरणरूपोऽर्थश्चर्धातो'। आख्यातचन्द्रिकाया भट्टमल्लेन चर्धातो सचाररूपोऽर्थो दर्शित (२, ३, १२१)।

३ 'गावो यव प्रयुता अर्यो अक्षन् ता अपश्य सहगोपाश्चरन्ती' इत्यृग्वेदे (१०,२७,८) 'सहगोपाः = पशुपालकेन सहिता, चरन्ती = घासं भक्षयन्ती' इत्यर्थ. सायणेन कृत., यवादिपदसनिधानात्। वा० रा० (१, ४०, २६)—

ते तु सर्वे महात्मानो भीमवेगा महाबलाः।
ददृशुः कपिलं तत्र वासुदेवं सनातनम्॥
हयं च तस्य देवस्य चरन्तमविदूरत।
प्रहर्षमतुलं प्राप्ता सर्वे ते रघुनन्दन॥

इत्यत्र कपिलस्याविदूरतो हयस्य चरण नाम घासभक्षणम्। पशवो घासं भक्षयन्त. शनैः शनैरग्रेसरन्त्यपीति तेषा चरणेन भक्षणरूपोऽर्थो गृह्यते, मनुष्याणामिव तेपामविचरणत्वात्। पशूनामेतादृश्या प्रवृत्त्या जातस्य चर्धातोर्भक्षणार्थस्य मनुष्येष्वप्यारोप। वा० रा०(२,२०,५)–

अबुद्धिर्बत नो राजा जीवलोकं चरत्ययम्।
यो गतिं सर्वभूतानां परित्यजति राघवम्॥

इत्यत्र सर्वभूताना गते राघवस्य परित्यागो हि जीवलोकस्य भक्षणमेवेत्यन्तः-पुरस्त्रीणामाशय । वा० रा० (२, २०, ५)—

**अद्य त्विदानी रजनी पुत्र मा गच्छ सर्वथा ।**
**एकाह दर्शनेनापि साधु तावच्चराम्यहम् ॥**

दशरथस्योक्तिरिय राम प्रति । 'त्वया सह साधु भोक्ष्यामि' इति तदाशय । त्रिष्वेव स्थलेषु तिलकटीकायामपि भक्षणरूपोऽर्थ. प्रतिपादितश्चरधातो. । चरति ( ४, ४, ८ ) इति पाणिनीये सूत्रे चर्धातोर्गतिभक्षणरूपावर्थौ । अत एव हस्तिना चरति हास्तिक , शकटेन चरति शाकटिक इतिवद् दध्ना चरति = भक्षयति दाधिक इति प्रयोगेऽपि ठग् जायते । णिच्यपि भक्षणार्थे चर्धातोः प्रयोगो दृश्यते । वा० रा० ( २, ४५, ३३ )—

**तत सुमन्त्रोऽपि रथाद् विमुच्य**
**श्रान्तान् हयान् संपरिवर्त्य शीघ्रम् ।**
**पीतोदकास्तोयपरिप्लुताङ्गम्**
**अचारयद् वै तमसाविदूरे ॥**

इत्यत्र सुमन्त्र पीतोदकास्तोयपरिप्लुताङ्गान् हयान् तमसाविदूरेऽचारयत् = भक्षिततृणान् अकारयद् इत्यर्थ । महाभारते ( १२, ९, २१ )—

**अल्प वास्वादु वा भोज्यं पूर्वालाभेन जातुचित् ।**
**अन्येष्वपि चरंल्लाभमलाभे सप्त पूरयन् ॥**

इति वानप्रस्थभिक्षुवद् जीवनयापननिश्चये युधिष्ठिरस्य 'अल्प वास्वादु वा भोज्यम्' इत्युक्त्या चर्धातो सुस्पष्ट भक्षणमर्थ । हिन्दीभाषाया 'चरना' 'चराना' इत्युभयत्र भक्षणरूपोऽर्थः । तत्रापि पशूना घासादिभक्षणप्रसङ्गे धातोरस्य प्रयोगो जायते, न तु मनुष्याणा भोजनप्रसङ्गे । शनै. शनैर्बहुभक्षणमुद्दिश्य बहुभोजिन प्रत्यपीदृश. प्रयोगो दृश्यते क्रियमाण । हरिवंशपुराणेऽपि द्रष्टु शक्यते ( द्र० २, ५५, ३२ ) ।

४ ऋ० ( १, ५७, ४ )—

**'इमे त इन्द्र ते वय पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसः'**

इत्यत्र 'प्रभूतधन ! अत एव बहुभिर्यजमानै स्तुत ! हे इन्द्र ! ये च वय त्वामारभ्य = आश्रयतयावलम्ब्य चरामसि = चराम. = यागे वर्तामहे' इति शब्दार्थ. । इह चर्धातोर्वर्तनमर्थ. । मनसा सह प्रयुज्यमानस्य चर्धातोरपि वर्तनमर्थ. ( ऋ० ७, १०४, ८ ) 'यो मा पाकेन मनसा चरन्तम्' = शुद्धेन मनसा वर्तमानम् इत्यर्थ । 'अन्वग्र चरति क्षेति बुध्न.' इत्यृग्वेदे ( ३, ५५, ७ ), यज्ञेषु सम्यग् राजमानोऽग्निरन्वग्रम् = दिवि सूर्यभूतस्तत्र वर्तत इति सायणः । 'अग्रं मुख्य मार्गं चरति = भक्षयति' इत्यर्थमप्याह स. । ऋ० ( ७, ४६, ३ )—

**'या ते विद्युदवसृष्टा दिवस्परि क्ष्मया चरति ।'**

इत्यत्र दिवस्परि = अन्तरिक्षसकाशाद् अवसृष्टा = विमुक्ता विद्युत् = अशनिरूपा हेतिः, क्ष्मया = क्षित्या क्षितौ वा चरति = 'वर्तते' इति वर्तनरूपोऽर्थश्चर्धातो । नैषध० (१८,११०)–

**'भुज्यमाननवयौवनाऽमुना पारसीमनि चचार सा मुदाम्'**

इत्यत्र भुज्यमाननवयौवना दमयन्ती मुदाम् = आनन्दाना पारसीमनि = चरमावस्थायाम् अवर्ततेति वर्तनरूपोऽर्थश्चर्‌धातो । वस्तुत कर्माभावे चर्‌धातु‍ स्थाधातुवदर्थं प्रकटयति । किन्तु स्थाधात्वर्थे तथा स्वारस्य नास्ति यथा वर्तने । अत एव वृत्तचरित्रयो पर्यायवाचकता ।

५ ऋ० ( १,५२,६ ) 'परी घृणा चरति तित्विषे' इत्यत्र चर्‌धातुर्व्याप्त्यर्थक, घृणाया शत्रुजयलक्षणाया दीप्तेस्तथात्वेनौचित्यात् ।

६ यत्रान्तर्भूता अनेका क्रिया भवन्ति, तत्र क्रियासामान्यवाचकेन कृधातुना भावाभिव्यञ्जना । एतादृशेषु स्थलेषु टीकाकारैः 'यथा स्यात् तथा' इति लिख्यते । महाभारते (१४,१९,१६)—

**तस्योपदेशं वक्ष्यामि यथावत् तन्निबोध मे ।**
**यैर्द्वारैश्चारयन् नित्यं पश्यत्यात्मानमात्मनि ॥**

तस्य = योगशास्त्रस्योपदेशप्रसङ्गे यैर्द्वारै = चित्तनिग्रहोपायै, आत्मानम् = चित्तम्, आत्मनि = देहे यथा स्यात् तथा चारयन् = अन्तर्मुख कुर्वन्निति चर्‌धातु क्रियासामान्यवाचकस्य करणस्यार्थमाविष्करोति । तत्रैव १३,२२,१३ )—

**अधीयानः पण्डितं मन्यमानो**
**यो विद्यया हन्ति यशः परेषाम् ।**
**प्रभ्रश्यतेऽसौ चरते न सत्यं**
**लोकास्तस्य ह्यन्तवन्तो भवन्ति ॥**

इत्यत्र सत्यम् = यज्ञादिकम् अव्यभिचरितफल कर्म न चरते = न करोतीत्यर्थ. सपद्यते । वा० रा० ( १,४६,३ ) 'साहं तपश्चरिष्यामि' इत्यत्र 'चरिष्यामि' इत्यस्य 'करिष्यामि' इत्यर्थः । अनुष्ठानविधानादिशब्दैर्विवरण भवितु नार्हति, तयोर्निश्चितार्थत्वात् । करणरूपार्थेन च सर्वविधाना तपसामभिव्यक्ति., न तु सीमितानाम् । मनु० ( २,१८७ )—

'अवकीर्णिव्रत चरेत्' इत्यत्रावकीर्णिव्रतानुष्ठानेऽन्तर्भूतोपक्रियाणा प्रकटनाय कृधातुना व्याख्यान साम्प्रतम् । वस्तुतस्त्विह 'आङ्' इत्युपसर्गपूर्वकस्यार्थस्य वाचकश्चर्‌धातु । किन्तु तेनार्थेन स्पष्टताभावे कृधातुद्वारा विवरणोपपत्ति. । स्थूलतस्तु नैयत्येऽनुष्ठानाचरणादीना याथातथ्येन प्रयोग. क्रियत एव । वा० रा० 'तपश्चचार' इत्यत्र तिलकटीकाकर्त्रा 'तताप' इति विवृण्वता क्रियासामान्यवाचक‍ कृधातुर्निर्दिष्ट, तपसैव तस्योक्तत्वेन क्रियामात्रवाचकत्वादिति ।

७. यद्यपि मनु० ( २,१८५ )—

**सर्वं वापि चरेद् ग्रामं पूर्वोक्तानामसंभवे ।**

इत्यत्र कस्यापि पदस्य सनिधानाभावे चर्‌धातुर्याचनार्थक, तथापीत पूर्वं—

**गुरो कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।**
**अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ॥**

इत्यस्य श्लोकस्योपन्यासेन भिक्षार्थसबन्धात् ।

८ मनु० ( ९, ३०६ ) 'प्रविश्य सर्वभूतानि यथा चरति मारुत'। सर्वभूतान्तः प्रविश्य मारुतस्य विचरण सभवतीतीह चर् धातुर्विचरणार्थकस्तदाह कुल्लूकभट्ट —'यथा प्राणाख्यो वायु सर्वजन्तुष्वन्त प्रविश्य विचरति' इति। तत्रैव ( ७,२५ ) 'यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा' इत्यत्र शास्त्रप्रमाणावगतस्य श्यामवर्णस्य लोहितनयनाधिष्ठातृदेवताकस्य दण्डस्य विचरणमेव साधीय॰।

९. मनु० ( २,१६३ )—

**सुखं ह्यवमतः शेते सुख च प्रतिबुध्यते।**
**सुख चरति लोकेऽस्मिन्नवमन्ता विनश्यति॥**

इत्यत्र 'प्रतिबुद्ध सन् सुखपूर्वक कार्येषु प्रवर्तते' इति प्रवृत्तिरूपोऽर्थश्चर् धातो.। यद्यपि विचरणादिरूपा अर्था भवितुमर्हन्ति, तथापि लौकिकाना सामान्यक्रियाणा शयनप्रतिबोधनादीना दर्शनेन कार्यप्रवर्तनरूपस्यार्थस्य निश्चयो विज्ञातव्य।

१०. मनु० ( २,४८ )

**प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्।**
**प्रदक्षिण परीत्याग्निं चरेद् भैक्षं यथाविधि॥**

इत्यत्र कुल्लूकभट्ट॰—'चरेत् = याचेत' इति, तन्न मनोरमम्, भैक्षपदेनैव याचनार्थस्योक्तत्वात्। मनु० ( २,१८२ ) 'भैक्ष चाहरहश्चरेत्' इत्यत्र च तेनैवार्जनार्थस्य निर्णीतत्वाद् इति भैक्षपदसंनिधानाच्चर् धातुरर्जनार्थक।

११. मनु० ( २,२४९ )—

**एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः।**
**स गच्छत्युत्तमस्थान न चेह जायते पुन॰॥**

इत्यत्र ब्रह्मचर्यव्रतस्योल्लेखादनुष्ठानरूपोऽर्थो निर्धारणीयश्चरधातो। ब्रह्मचर्ये च विधि-निषेधानामाचरणं विहायावान्तरक्रियादीनामसनिवेश इति नास्थेय विवरण कृधातुना। एवमेव महाभारते ( १२, २१४, १ )—

**अत्रोपाय प्रवक्ष्यामि यथावच्छास्त्रचक्षुषा।**
**तत्त्वज्ञानाच्चरन् राजन् प्राप्नुयात् परमां गतिम्॥**

इत्यत्र ब्रह्मचर्यस्योपायो दर्श्यत इति तत्त्वज्ञानात् चरन् = अनुतिष्ठन् इत्यर्थ। तत्रैव त्रयोदशे श्लोके—'रागोत्पन्नश्चरेत् कृच्छ्रम्' इत्यत्रापि ब्रह्मचर्योपायं कुर्वन्नपि यदि समुत्पन्नरागः स्यात्, तर्हि कृच्छ्रम् अनुतिष्ठेद् इत्यर्थ॰।

१२. मनु० ( ६,६८ )—

**संरक्षणार्थं जन्तूनां रात्रावहनि वा सदा।**
**शरीरस्यात्यये चैव समीक्ष्य वसुधां चरेत्॥**

इत्यत्र हिंसापरिहारपूर्वकं पृथिव्या भ्रमणं विज्ञप्तम् इति चर् धातोरिह **पर्यटनरूपोऽर्थः**। इह यद्यपि तादृशं किमप्युपपदं नास्ति यस्य साहाय्येन चरधातोर्भ्रमणरूपमर्थं पार्येत निश्चेतुम्,

तथापि प्रसङ्गस्य पर्यालोचनेन तथार्थविनिश्चयः। भ्रमणमपि गतिरिति धातोरर्थेनैव तस्य गतार्थतेति चेद्, न, सामान्यगमनाद् भ्रमणस्य पर्यटनस्य वा वैशिष्ट्यात्। अत एव भ्रमधातुरनवस्थाने पठित, न तु गमने। 'चेरतु खरदूषणे' इति भट्टि० (५,१) 'भ्रान्तौ' इति जयमङ्गल।

१३ वा० रा० (२, ३५, ३३) 'परिवादो हि ते देवि महाँल्लोके चरिष्यति' इत्यत्र प्रचरणरूपोऽर्थश्चर्धातोरिति प्रोपसर्गाभावेऽपि तदन्वितार्थसपत्ते। तत्रैव (२, ६६, २६)—

**गते तु शोकात् त्रिदिवं नराधिपे महीतलस्थासु नृपाङ्गनासु च।**

**निवृत्तचार सहसा गतो रविः प्रवृत्तचारा रजनी ह्युपस्थिता॥**

इत्यत्र 'रवि सहसा निवृत्तचार =निवृत्तकिरणप्रचार' इति चर्धातो प्रचाररूपोऽर्थ। तत्रैव (२, ८५, १३) 'शाश्वती खलु ते कीर्तिर्लोकाननु चरिष्यति' इत्यत्र 'चरिष्यति = प्रचरिष्यति' इति तिलकटीका।

१४ मनु० (२, २३) 'कृष्णसारस्तु चरति मृगो यत्र स्वभावत' इत्यत्र चरणेन विचरण नाभिप्रेतम्, न च घासादिभक्षणमेव। इहकान्तनश्चरण नाम वासोऽभीष्ट, अध्युषितदेशेनाति मात्रसयोगात्। एवमेव वाल्मीकीये रामायणे (४, ५१, ७, ८)—

**काञ्चनानि च पद्मानि जातानि विमले जले।**

**कथं मत्स्याश्च सौवर्णाश्चरन्ति सह कच्छपैः॥**

इतीह निवासोऽर्थ, तरणार्थेन तेषामल्पकालसम्बन्धात्।

१५. मनु० (९, २८७)—

**'समैर्हि विषमं यस्तु चरेद् वै मूल्यतोऽपि वा'**

समै =सममूल्यदातृभि सहोत्कृष्टापकृष्टद्रव्यप्रदानेन वैषम्यपूर्वक चरण नाम व्यवहरणम्। इह 'मूल्यत' इति पदस्य सानिध्येन प्रसङ्गेन च व्यवहारार्थो निर्णेतु पार्यते। 'सञ्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति च' इति मनु० (८, ३६२), चारयन्ति = व्यवहारयन्तीत्यर्थ।

१६ वा० रा० (२, २८, १५)—

**कार्यस्त्रिरभिषेकश्च काले काले च नित्यशः।**

**चरतां नियमेनैव तस्माद् दुःखतरं वनम्॥**

इति रामोक्तिः सीता प्रति। चरता नियमेनैव नित्यश. काले काले च त्रिरभिषेक कार्यः। इह चर्धातोरर्थो नास्ति स्पष्ट —किं चरताम् इति जिज्ञासासमाध्यभावात्। 'काले काले' इति प्रसङ्गाद् इह चर्धातो कालक्षेपरूपोऽर्थ.। तदुक्तं तिलकटीकायाम्—'चरताम् = कालक्षेप कुर्वताम्' इति।

१७. वा० रा० (२, ६१, २३) 'द्विजातिचरितो धर्म. शास्त्रे दृष्ट. सनातन' इत्यत्र चर्धातुराचरणार्थकः। गीता० (३, २६) 'पाप चरति पूरुष' इत्यत्र शाङ्करभाष्ये चरति = आचरतीत्यर्थः। नीलकण्ठस्तु करोतीति व्याख्यानमाह, तन्न युक्तम्, धर्मपापयोराचरणविषयत्वात्। 'धर्मं करोति' 'धर्ममनुतिष्ठति' इत्यादीना विवरणम् आङ्पूर्वकेण चर्धातुनैव कर्तुं

युक्तम् । आवरणानुष्ठानकरणादीनामर्थानामैक्येऽपि 'धर्मकरणम्' इत्यस्य स्थाने 'धर्माचरणम्', 'यज्ञाचरणम्' इत्यस्य स्थाने यज्ञानुष्ठानम् इत्यादिप्रयोगाणामौचिती ।

१८ महाभारते (१२, १२३, ७) 'सन्निकृष्टाश्चरेदेतान् न चैतान् मनसा त्यजेत्' इत्यत्र धर्मार्थकामाना चरण नाम सेवनम् । यद्यपि धर्मस्यानुष्ठान भवतीति धर्मार्थकामानामनुष्ठान स्यात्, तथापि तदितरद्वयस्याननुष्ठानात् सेवनार्थं उक्त. । 'धर्मं चरति' (४, ४, ४१) इत्यत्र तत्त्वबोधिनीकार'—'चरतिरिहाऽऽसेवाया न त्वनुष्ठानमात्रे' इति । गीता० (२, ६४) 'रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्' इत्यत्र 'चरन्=सेवमान.' इत्यर्थ. । हरिवंशे (३, १९, १७)—

**अरूपी रूपसंपन्नो धातुभिः सह संगत. ।**
**अन्यश्चरति भूतेषु कामकारकरो वशी ॥**

इत्यत्र सूक्ष्मतरत्वाच्चान्तर्यामिरूपेणान्तर्देहान्त. स्थित्वा चरति=विषयान् भुङ्क्ते, कामकारकरत्वात् (=स्वतन्त्रेच्छत्वात्) । तत्रैव (३, २७, ४४)—

**त्वमेव वसुधायुक्तो विश्वं चरसि सीमया ।**
**एकीकृत्य गणान् सर्वान् संक्षिप्यामुत्र संभव ॥**

इत्यत्र वसुधायुक्तो भौमप्राणिरूपेण चरसि=विषयान् सेवसे, सीमया=मर्यादया नियमेनेति चर्धातु सेवनार्थं, गणानाम्=इन्द्रियादीनामुल्लेखात् ।

१९. हरिवंश० (३, १८, २८)—

**अव्यक्ताद् व्यक्तिमापन्नं स्वेन भावेन भारत ।**
**अन्तःस्थं सर्वभूतेषु चरन्त विद्यया सह ॥**

इत्यत्र चर्धातो प्रकाशनरूपोऽर्थ, ब्रह्माकारचित्तवृत्तिरूपविद्यापदोपादानाद् इति ब्रह्माकारचित्तवृत्त्या सह चरन्तम्=प्रकाशमानमित्याशय । एवमेव तत्रैव (३, १६, ८)—

**विकारपुरुषोऽव्यक्तो ह्यरूपी रूपमाश्रितः ।**
**चरत्यचिन्त्य सर्वेषु गूढोऽग्निरिव दारुषु ॥**

इत्यत्र 'विकारपुरुषो मात्रादिव्यक्त, रूपम्=दृश्यमाश्रित सन्, चरति=दृश्य प्रकाशयति' इति प्रकाशनरूपोऽर्थ., अग्न्युपमया तथार्थप्रतीते. ।

२०. भट्टि० ( १०, ८ ) 'ह्लुलता जनेन बहुधाचरित चरित महत्त्वरहित महता' इत्यत्र 'चरितम्' इत्यस्य चेष्टितमित्यर्थ, चरितम्य=चेष्टितस्याऽऽचरणात् । इद चेष्टितमेव चरित्रम् ।

२१ नैषध० ( २१, ९० ) 'यत् तव स्तवविधौ विधिरास्ये चातुरी चरति तच्चतुरास्य ' इत्यत्र चातुरीशब्दोपादानेन चर्धातो प्राप्तिरूपोऽर्थ', चातुरी करोतीत्यस्य विवरणेन भिन्नाभिप्रायात् ।

२२ भारोपीयभाषाणा मूलधातुरस्ति—तालव्य केल्-केल इति परिवर्तनवेष्टनसचरणाद्यर्थक । ( कर्तव्यकार्यानुष्ठाने ) धर्मादिवर्तनार्थेऽय धातुरवेस्ताभाषाया प्रयुक्त'—चरइति ( Caraiti ) इति । तत्रैव चरान ( Carana ) इति च कार्यक्षेत्रवाचक शब्द । पारसीक-

भाषाया तु ध्यानप्रवृत्तिपोषणकृषिसस्कृतिवाचक पर्युपसर्गपूर्वक' 'परिकरा' इति शब्दः। तत्र चकार' ककारत्वेन प्रयुक्त इति मूलधातावेवेङ्गितम् ( द्र० जूलियसपाकर्नी ६३९ पृ० )।

२३ प्राकृतभाषाया ज्ञानरूपोऽर्थोऽधिक —चरइ ( उव, महा ) इति। हिन्दीभाषाया सस्कृतभाषावद् भ्रमणविचरणाद्यर्थे, पशूना क्षेत्रेपु भ्रमणपूर्वक घासादिभक्षणेऽर्थे प्रयोगः। कालान्तरे भ्रमणपूर्वकभक्षणार्थस्य चरधातोर्भ्रमणाभावेऽपि प्रयोग समजायत। इदानी गाव. शङ्कुबद्धा अपि गमनाभावेऽपि चरन्ति = भक्षयन्ति। ते च तत्रैव 'चारा' भक्षणीय प्राप्नुवन्ति। तत्र च स्थिताः सन्त एव घासादिक चरन्ति। इदमेव 'चारा' = ( भक्षणीयम् ) उपायार्थेऽपि प्रयुज्यते- 'अब कोई चारा नही रहा' इति। अयमेव 'चारा'शब्द पारसीकभाषाया 'बे' ( स०, वि० ) इत्यस्य सहकारेण 'बेचारा' = निरुपायार्थको जात.। भक्षणार्थिका 'चरना' इति क्रिया पशूना संबन्ध एव व्यवह्रियत इति मनुष्याणा सम्बन्धे प्रयोगो निन्दार्थको भवति। प्रादेशिकभाषायामपि तथैव दृश्यते—

**पड पड़ के पडा भये, चर चर हो गये लाठ।**
**बाप ने पूँछी का पड़े, सोरा दूनो आठ॥** इति।

एव तावच्चर्धातोरिह त्रयस्त्रिशदर्था पर्यालोचिता —१. प्रवाह ( कम्पनम् ), २. उड्डयनम् ( संचरणादि ), ३ भक्षणम्, ४. वर्तनम्, ५. व्याप्तिः, ६ करणम्, ७ याचनम्, ८. विचरणम्, ९ प्रवर्तनम्, १०. अर्जनम्, ११ अनुष्ठानम्, १२. पर्यटनम् ( भ्रमणम् ), १३. प्रचरणम्, १४. वास ( निवास ), १५. व्यवहार, १६ यापनम् ( कालक्षेप. ), १७. आचरणम्, १८ सेवनम् ( आसेवा ), १९ प्रकाशनम्, २०. चेष्टा, २१. प्राप्तिः, २२. ध्यानप्रवृत्तिपोषणकृषिसस्कृतय, २३ ज्ञान चेति।



# भाषालक्षणलक्ष्यीकरणम्

( सुशीला सर, ३९ शक्तिनगरम् दिल्ली–७ )

सस्कृतभाषेय चिरकालादाचार्याणा विवेचनविषयता गता वर्ततेऽस्मिन् देशे । पाणिनिना एकया व्यवस्थितप्रक्रियया सस्कृतभाषा विवेचिता ।

पतञ्जलिमतानुसारेण भाषाया विद्यमाना शब्दार्थसम्बन्धा लोकप्रमाणिता सन्ति ।

भर्तृहरिर्भाषायास्तात्त्विकस्वरूपमेव वदति—

**सत्यमाकृतिसंहारे यदन्ते व्यवतिष्ठते ।**
**तन्नित्यं शब्दवाच्यं तच्छब्दत्वं न तु भिद्यते ॥**

स भाषातत्त्व सृष्ट्या सत्यत्वं नित्यरूपत्वञ्च स्वीकरोति । इय परिभाषा दार्शनिकी, यत्र भाषाया अर्थतत्त्वमस्तित्वञ्च सकेतितमस्ति । अनेन सूच्यते एषामाचार्याणा मते भाषा केनचिदपि समाजेन स्वीकृता वाचिकप्रतीकाना व्यवस्थास्ति ।

एव कथयितु शक्यते यद् भाषा मुखोच्चारितयादृच्छिकप्रतीकानाञ्च एका व्यवस्था वर्तते । या माध्यमीकृत्य समाजोऽय विचारविनिमयादिक स्वव्यवहारं व्यवस्थितरूपेण समाधयति ।

मुखोच्चारितप्रतीका ध्वनिप्रतीका एव सन्ति । एषा ध्वनीना सघटनायामेका व्यवस्था भवति । एषा व्यवस्था च भाषाविशेषस्य व्याकरणमित्युच्यते । एकस्या भाषाया व्याकरणम् अन्यभाषाव्याकरणाद् भिन्न वर्तते । इय भिन्नता ध्वनो व्यवस्थायाञ्चोभयत्र भवति ।

२ **ध्वनि** —कश्मीरभाषाया ध्वनिसमूह [सस्कृतस्य ध्वनिसमूहाद्भिन्नोऽस्ति । भाषा-विशेषस्य ध्वनेर्न्यूनतमखण्ड तद्भाषाया स्वनिमान ( वर्णा ) इति कथयन्ति । 'स्वनिम'पद-वाच्यस्य वर्णस्य लक्षण भाषावैज्ञानिकैरित्थ क्रियते—

भाषाविशेषस्य सा जाति 'स्वनिम' इति कथ्यते, या भाषाया एवविधाभ्योऽन्य-जातिभ्यो भिन्ना भवेत् । अथ च यस्या सदस्या मिथ परिपूरका मुक्तवितरणे च वर्तमाना भवेयुरिति । 'स्वनिमान.' ( वर्णा ) स्वरात्मका व्यञ्जनात्मकाश्च भवन्ति ।

कश्मीरभाषाया. स्वरात्मकस्वनिमानो निम्नलिखिता. सन्ति ।

२. १ स्वरात्मकध्वनय —

डेनियलजोन्जप्रतिपादिताना कार्डिनल्स्वराणामुपस्थापनमुपजीव्याधुनिकाना सस्कृत-कश्मीरभाषयो' स्वराणा व्याख्या एव शक्यते कर्तुम् ।

कार्डिनलस्वरा: कस्या अपि भाषाविशेषस्य स्वरा न सन्ति । किन्त्वयमस्ति स आधारो यमधिकृत्य विभिन्नभाषाणा स्वराणामध्ययनं शक्यते कर्तुम् । अत एवोच्यते कार्डिनलस्वरा भाषाविशेषस्य स्वरेभ्य एकं तुलायन्त्रमस्ति, अथवा तुलायन्त्रवत् कार्यं करोति । जोञ्जेन अष्टाना प्रधानाना कार्डिनलस्वराणा कल्पना कृता ।

तथा च--( १ ) ई ( u ) ऊ रेखोपरि तालु। ( a ) अ s ( d ) आ इत्यस्याधो मुखविवरस्य निम्नभाग इत्यवगम्यते। ( १ ) ई ( e ) ए ( z ) ऐ ( a ) अ s रेखाया मुखविवरस्याग्रभाग, ( u ) ऊ ( o ) ओ ( ɔ ) ऑ ( d ) आ रेखाया मुखविवरस्य पश्चभाग इति। इत्थ 'ई' 'ए' 'ऐ' 'अs' इमे ध्वनय. अग्रस्वरा., 'ऊ' 'ओ' 'ऑ' 'आ' इमे च ध्वनयः पश्चस्वरा. परिगणयितु शक्यन्ते।

प्रधानकार्डिनलस्वरेषु सर्वेषामग्रस्वराणामुच्चारणकाले ओष्ठयोराकृति· अवर्तुला भवति। तद्विपरीततया सर्वेषा पश्चस्वराणामुच्चारणकाले ओष्ठयोराकृति वर्तुला ज्ञायते।

ई, ऊ इत्यनयोरुच्चारणकाले मुखविवर पूर्णसकुचित भवति। अर्थात् जिह्वा तालुप्रदेशस्य पर्याप्तसमीपमागच्छति। अत इमौ स्वरौ सवृतौ ( सकुचितौ ) इत्युच्यते। तद्विपरीततया 'आ' इत्यस्योच्चारणे मुखविवर पूर्णविकसित भवति, अर्थात् जिह्वा मुखविवरस्याधोभागेन सलग्ना भवति। अनेनेम स्वर विवृत (विकसितम्) कथयितु शक्नुवन्ति। धीरेन्द्रवर्मणापि सवृतविवृतेत्यनयो शब्दयो प्रयोग अस्मिन्नेवार्थे कृत।[1]

एते संस्कृतस्वरा निम्नचित्रेण इत्थं व्याख्यातु शक्यन्ते—

| | अग्रवर्तुलाकार | | पश्चवर्तुलाकार | |
|---|---|---|---|---|
| | ह्रस्वः | दीर्घ | ह्रस्व | दीर्घः |
| सवृतम् | इ | ई | उ | ऊ |
| अर्धविवृतम् | ० | ए | ० | ओ |
| विवृतम् | अ | आ | ० | ० |

चित्र सख्या (१)

चित्रे (०) अयं सकेत· शून्यस्थाने प्रयुक्त।

कश्मीरभाषाया ( ई, ए, ) इति द्वावग्रस्वरौ ( उ, ओ, ऑ, ) इति त्रय पश्चस्वरा. ( उ, ओ', आ ) इति मध्यस्वरा सन्ति। अत्राप्यग्रस्वराणामुच्चारणकाले ओष्ठयोरवस्था अवर्तुलाकारा, पश्चस्वराणामुच्चारणे वर्तुलाकारा वर्तते। मध्यस्वराणामुच्चारयितु· ओष्ठावपि अवर्तुलाकारो ज्ञायते। इमे अष्टौ स्वरा. ह्रस्वदीर्घोभयरूपेणोपलभ्यन्ते कश्मीरभाषायाम्। निम्नचित्रेण एते स्वरा इत्थ व्याख्यातु शक्यन्ते—

| | अग्रवर्तुलाकार. | | मध्यवर्तुलाकार | | पश्चवर्तुलाकार. | |
|---|---|---|---|---|---|---|
| | ह्रस्व. | दीर्घ· | ह्रस्व | दीर्घ. | ह्रस्व. | दीर्घ |
| संवृतम् | इ | ई | उ | ऊ | उ | ऊ |
| अर्धसंवृतम् | ए' | ऐ' | ओ' | ओ | ओ' | ओ |
| विवृतम् | ० | ० | अ | आ | अँ | ऑ |

चित्रसख्या ( २ )

१ हिन्दी भाषा का इतिहास, पृष्ठ १०१।

एषा षोडशस्वराणा सिद्धि. निम्नतालिकया क्रियते—

| ह्रस्व. | | दीर्घ. | |
|---|---|---|---|
| कश्मीरी | संस्कृतम् | कश्मीरी | संस्कृतम् |
| इ फिर | न्यस्य | ई फीर | पर्यवर्तत |
| ए' गे'ज | सकुच् | ऐ हेर | सोपानम् |
| अ तर | उत्तर | आ तार | पार कारय |
| उ गुर | तुरग<br>अश्व | ऊ गूर | गोप· |
| ओ' तो'र | उदतरत् | ओ तोर | पार गमित |
| अॅ सॅद | सरल | आॅ सॉद | सपाद |
| \| \| | | \| \| | |
| उ तुर | कर्तरनम् | ऊ तूर | शीतः |
| ।, ।, | | ।, ।, | |
| ओ तोर | उदतरत् | ओ तोर | पारं गमिता<br>इति । |

२. २ व्यञ्जनात्मकध्वनय —

सस्कृतस्य व्यञ्जनानि वैज्ञानिकविधिना क्रमबद्धानि सन्ति । प्रतिवर्गं समानमुच्चारस्थान सकेतयति । वर्गाक्षरञ्च प्रयत्न द्योतयति । अर्थात् कवर्गस्योच्चारणस्थान कण्ठ, पवर्गस्य चोच्चारणस्थानमोष्ठौ स्त । प्रयत्नमाधारीकृत्य वर्गस्य प्रथमव्यञ्जनम् अघोषाल्पप्राण, द्वितीयः अघोषमहाप्राण, तृतीय· घोषाल्पप्राण, चतुर्थ. घोषमहाप्राण पञ्चमश्च नस्योऽस्ति । कवर्गादारभ्य पवर्गपर्यन्त सर्वे ध्वनय· स्पर्शध्वनय सन्ति । यवरला अन्तस्था, कथ्यन्ते । शषसहा उष्माणश्च । कश्मीरभाषाया वर्गचतुर्थव्यञ्जनानि न सन्ति । तत्र भाषाया केवलं द्वावेव 'नासिक्य'ध्वनी स्त । यथा—दन्तनासिक्य [ न ] ओष्ठनासिक्यश्च [ म ] इति । ईश्वरकौलस्य ग्रन्थे कश्मीरशब्दामृतेऽपि सकेत उपलभ्यते । तत्राप्रसिद्धवर्णेषु 'ज' इत्यस्योल्लेखं परिगणन कृत्वापि ईश्वरकौलेन निर्दिष्टमस्ति "जकारश्च प्रसिद्धोच्चारणतया न शब्दाप्यते ।"

ञकारस्योच्चारणं साम्प्रत सर्वासु भारतीयासु साम्प्रतिकभाषासु विलुप्तमिव दृश्यते । चञ्चलादिसंस्कृतशब्दाना यदा हिन्द्यादिभाषासु प्रयोग क्रियते, तदा लेखे ञकारोऽपि लिख्यतेऽनुस्वारचिह्नस्यापि प्रयोगः दृश्यते लिपौ, तथापि उच्चारणे सर्वत्र नकारस्यैवोच्चारणं प्रसिद्धम् । आधुनिकभारतीयभाषाप्रभावप्रभावितैः सर्वैरेव विद्वद्भिरपि सस्कृते 'चञ्चल' व्यञ्जनादिशब्देषु ञकारः नोच्चार्यते । तथैव कश्मीरीभाषायामपि परम्परा समापतिता । कश्मीरभाषाया द्वे स्पर्शसंघर्षिव्यञ्जने [ च, छ, ] अनिरिच्येते । ययोरुल्लेख 'कश्मीरशब्दामृतम्' ग्रन्थे प्राप्यते । इमे व्यञ्जने संस्कृतभाषाया नैवोपलभ्येते । अनयोरुच्चारणस्थान दन्त्याम् । उच्चारस्थानप्रयत्नौ अधिकृत्य कश्मीरभाषाया व्यञ्जनानि निम्नाङ्कितचित्रेण स्पष्टीक्रियते—

२. २ १ कश्मीरीव्यञ्जनानि —

| | | | ओष्ठ्यम् | दन्त्यम् | वर्त्स्यम् | तालव्यम् | मूर्धन्यम् | पश्च-तालव्यम् | जिह्वामूलीयम् कण्ठ्यम् |
|---|---|---|---|---|---|---|---|---|---|
| अप्रवाही | स्पर्शी | अल्प-प्राग | प | | त | | ट | क | |
| | | महा-प्राण | फ | | थ | | ठ | ख | |
| | | अल्पप्राण घोषः | ब | | द | | ड | ग | |
| | स्पर्श-सघर्षी | अल्प-प्राण | ० | | च | च | | | |
| | | महा-प्राण | ० | | छ | छ | | | |
| | | अल्पप्राण· घोप | | | ० | ज | | | |
| प्रवाही | | नासि-क्यम् | म | | न | | | | |
| | अन्त स्थ्यम् | अकम्पितम् | व | | ल | य | | | |
| | | कम्पितम् | | | र | | | | |
| | ऊष्मा | अघोप | | | स | श | | | |
| | | घोष | | | ज | | | | ह |

चित्रसख्या ( ३ )

२ २ १ १. सयुक्तव्यञ्जनानि—

कश्मीरभाषाया [ ब्, त्, द्, ड, ग, र, ज ] अन्यव्यञ्जनै सह सयोज्य सयुक्तव्यञ्ज-नानि निर्मातु शक्नुवन्ति । एपु [ ब्, ड्, ज्, ] इत्येतानि केवल नासिक्यव्यञ्जनेभ्य· पश्चादा-गन्तुं शक्नुवन्ति । अथ च [ ग् ] इति [ र्, न् ] इत्यनयो पश्चात् प्रयुज्यते । यथा—

१—( छॅम्ब ) 'तिगडम' । [ अम्ब ] 'आम्र '

२—( संनुमर्ग ) 'स्थानस्य नाम' ।

३—( तिहुन्द ) 'तेपाम्' ।

४—( पो'न्ज ) 'वानर ' ।

५—( ह्लग ) 'श्रृंग ' ।

कश्मोरभाषाया व्यञ्जनत्रययुतानि सयुक्तव्यञ्जनानि अत्यल्पानि सन्ति । अत्र प्रायः त्रयाधिकानि सयुक्तानि व्यञ्जनानि नैव सम्भवन्ति । एतादृश पदमल्पीयोऽस्ति यत्र भवति सयुक्तं व्यञ्नमयम् । यथा—

( ओन्द्रम् )          'अन्त्रम्' ।

२, २, २, मात्रास्वरा —

'कश्मीरशब्दामृते' प्राय. अकारान्ता शब्दा उकारान्तरूपेण लिखिता दृश्यन्ते । यथा--[गुर्] 'अश्व ' इत्यत्र [गुरु] इति प्राप्यते[1] । ग्रियर्सनेनापि इद भूमिकाया सकेतितम् । केचिद्विद्वास· अन्तिमोकारमेक रहस्यास्पद ध्वनि स्वीकुर्वन्ति । ग्रियर्सन स्वस्य "ए मैन्युएल आफ कश्मीरी लेंग्वेज" नामकग्रन्थे अमु रहस्यात्मकध्वनि मात्रास्वरनाम्ना प्राह स्म । "बेली" 'मोर्गेन्सटायरने' आभ्यामपि मात्रिकस्वर कथित ।[2] काचरुमहोदयस्य मतमस्ति[3] कश्मीरी-भाषाया शब्दस्य प्रारम्भिकान्तिमेषु च सयुक्तव्यञ्जनेपु श्रुतेरावश्यकता भवति । इय श्रुति. परिवेषे आधृता भवति । सम्भवत. इयमेव श्रुति मात्रास्वरसंज्ञया प्रोच्यते ।

२, २, ३, स्वरसमतालता—

स्वरसमताल्ना कश्मीरीभाषाया एका वैलक्षण्यमादधाना प्रकृति । बह्वाक्षरिकशब्देषु यदि प्रथमाक्षरस्वर वर्तुलाकारमुखेनोच्चारितो भवेत्तर्हि अन्याक्षरस्वरा अपि वर्तुलाकारमुखे-नोच्चारणार्हा एव उपलभ्यन्ते ।

यथा—

१—[पोर्] 'अपठत्' इत्यर्थके पूर्णभूतस्य प्रत्यय. [मुत्] इति सयुज्य आगत. [पोर्मुत्] पठितवानित्यर्थके इत्येवोच्चार्यते । अस्यैव शब्दस्य स्त्रीलिङ्गरूपेण विधीयते चेत् प्रत्यक्षरे स्वर समानरूपेण परिवर्त्यते ।

**यथा—**

(पोर्) इत्यस्य स्त्रीलिङ्गे रूप [पोर] इति भवति । (पोर्मुच्) अत्र पूर्णभूतस्य [मुत्] प्रत्ययस्य स्थाने [मुच्] प्रत्यय संयुज्यते ।

पुलिङ्गे (पोर) इत्यस्य स्वर वर्तुलाकारमुखोच्चार्य , अत प्रत्ययोऽपि वर्तुलाकारमुखो-च्चार्यस्वरयुक्त. प्रयुज्यते ।

स्त्रीलिङ्गे (पोर्) इत्यस्य स्वर. अवर्तुलाकारमुखोच्चारणीयो जायते, अतः प्रत्ययोऽपि अवर्तुलाकारमुखोच्चार्यस्वरयुक्त. प्रयुज्यते । सम्भवत· इमामेव स्वरसमतालतामाधारीकृत्य आचार्यैः शब्दान्ते मात्रिकस्वर· कल्पित ।

---

१. कश्मीरशब्दामृते—पृ० ३ ।

२. ए रेफरैन्स ग्रामर आफ कश्मीरी, पृष्ठ ६२, ६३ ।

३. ए रेफरैन्स ग्रामर आफ कश्मीरी, ब्रज बी० काचरु, पृष्ठ ६३ ।

३, भाषाव्यवस्था—

भाषाया पदानि प्रातिपदिकधातुप्रकृतिभूतान् वर्णानधिकृत्य निर्मितानि भवन्ति। भाषाया रचना वाक्यैर्भवति । वाक्याना विभाग पदानि कथयन्ति । पदानि च शब्दमूलानि। शब्दाना मूल वर्ण. । अत यदा भाषाविशेषस्य व्यवस्था विचार्यते तदा इमानि सर्वाणि विचार-पथमागच्छन्ति । वाक्यसरचनापि पदाना व्यवस्थाधीना भवति । पदव्युत्पत्तिव्याख्या भाषाया विविधाना प्रक्रियाणामन्तर्गत्यैव कर्तु शक्यते । कश्मीरभाषाया संज्ञापद सस्कृतभाषाया इव लिङ्गवचनकारकप्रक्रियाभि प्रभावित भवति ।

३, १ लिङ्गप्रक्रिया—

सस्कृतभाषाया त्रीणि लिङ्गानि सन्ति । यथा–पुल्लिङ्ग, स्त्रीलिङ्ग, नपुसकलिङ्ग । प्राकृतभाषाविकासकालादेव नपुसकलिङ्गस्य प्रयोग. विलुप्त. । कश्मीरभाषाया द्वे लिङ्गे स्तः । यथा–पुलिङ्गं स्त्रीलिङ्गं । पुलिङ्गमाधारीकृत्य स्त्रीलिङ्गसिद्धि क्रियते । अत्र 'कश्मीर-शब्दामृतम्' ग्रन्थात् सूत्राणि दीयन्ते । यै प्रक्रिया स्पष्टीभविष्यति ।

यथा—

'मनुष्यजाते सर्वत्र बाय्' ।६।२।

अर्थात् ईश्वरकौलेन प्राय जाते भेदद्वयं दर्शितम् । तन्मते एका जाति सम्प्रदायसिद्धा, यथा विप्रादि , द्वितीया व्यवसायप्रयोज्या, यथा–लोहकारस्वर्णकारादि । अत्र पशुपक्ष्यादीना जाति तेन जातित्वेन न प्रोक्ता । अत्र सूत्रेऽपि विशेषत मनुष्यशब्दकथनात् । तयोरेव द्वयोः जात्यो स्त्रीलिङ्गेन व्यवहारे कर्तव्ये सति 'बाय' प्रत्यय. सयुज्यते ।

यथा—

१—[दरबाय] 'दर', साम्प्रदायिकजातिनाम ।

१—[खारबाय] 'लोहकारस्त्री' व्यवसायात्मकजातिनाम ।

'अनादरार्थे क्वलय' ।६।३।

मनुष्यजात्यर्थकाद् शब्दात् स्त्रीलिङ्गात् अनादरे द्योत्ये (क्वलय) 'कॅलय' प्रत्ययो भवति ।

यथा—

१—[छानक्वलय] छानकॅलय 'तक्षकस्त्री' ।

२—[वातलक्वलय] वातलकॅलय 'चर्मकारस्त्री' ।

'खरश्च' ।६।६।

खरशब्दः भाषाया गर्दभाय प्रयुज्यते । तत एव स्त्रीलिङ्गे द्योत्ये ऊमात्रागमो विकल्पेन भवति । अयमूमात्रागम' स्वरसमतालताया. एव अवगन्तव्यः ।

यथा—

१—[खर्] 'गर्दभी' ।

पक्षे—

२—[खरिज्] 'गर्दभी' ।

'लान्ताना जः' ।६।७।

विशेष्यविशेषणपदानामुकारसहितानां लकारान्तानां शब्दानां लकारस्य जकारादेशः भवति। अत्र वृत्तौ दृश्यते काचित् त्रुटिः। अत्र 'उलु' प्रत्ययस्य लकारस्य जादेशविधानं विवक्षितमस्ति। उलुप्रत्ययश्चोकारान्तो न तु लान्त। अतोऽत्र विवक्षितार्थप्रतिपादनाय उकारान्ताना लकाराणामितीदृशोऽर्थो वाच्य। इमम् उकार स्वरसमतालताया स्पष्टितम्।

यथा—

|
१—[वोज्] 'ऊर्मिका'।
|
२—[मोज्] 'माता'।

'त्र्यक्षरादीनामुलोप उलोश्च' ।६।८।

यस्मिन्शब्दे त्र्यक्षराणि भवेयु। तत्र य 'उलु' प्रत्यय स्यात्तस्य उलुप्रत्ययसम्बन्धिनः उपधाया' उकारस्य लोपो वर्तते। अत्रापि दृश्यते सूत्रवृत्तौ त्रुटि। उलुप्रत्यय उपधायामुकाराभावात्। अत उलु-प्रत्ययाद्युकारस्य लोप इत्यर्थो वाच्य।

यथा—

| | पुं० | स्त्री |
|---|---|---|
| १ | —[गाट्टुल्] | (गाट्टुज्) 'दक्षा' |
| | | \| |
| २ | —(फुट्टुल्) | (फुट्टुज) 'पोटलिका'। |

'कवर्गान्ताना चवर्ग' ।६।६।

उकारयुक्ताना कवर्गान्ताना पुलिङ्गाना शब्दाना स्त्रीलिङ्गे चवर्गादेशो भवति।

यथा—

| | पुं० | स्त्री० |
|---|---|---|
| | | \| |
| १ | —[बतुक्] | [बतुच्] 'वर्तिका'। |
| | ,\| | ,\| |
| २ | —[होख] | [होछ्] 'शुष्का'। |

'तवर्गान्तानामप्रसिद्ध'। ६। ११।

तवर्गान्ताना पुंलिङ्गाना शब्दाना स्त्रीलिङ्गविषये सस्कृते अप्रसिद्ध चवर्गादेशो वर्तते।

यथा—

| | पु० | स्त्री० |
|---|---|---|
| | \|, | \|, |
| १ | –[ मोत् ] | [ मोच् ] 'उन्मता'। |
| २ | –[ क्वथ् ] कॅथ | [ क्वछ् ] कॅछ 'मारिका'। |

'कगोऽल्पार्थे राकारश्च' । ६ । १२ ।

यस्मिन् पात्रे अग्नयो निधीयन्ते तदग्निधानिका कगित्युच्यते । तस्मादेव कगशब्दादल्पार्थे 'र' प्रत्ययः सर्वत्र भवति । आदे स्वरस्याकारादेशश्च भवति ।

यथा—

१–[ कागर् ] 'हसन्तिका' अथवा कागडीति हिन्द्याम् ।

'स्त्रिया ञञो च' । २ । १ । ५१ ।

मनुष्यसञ्ज्ञया स्त्रीलिङ्गस्य सम्बन्धे सति सम्बन्धिलिङ्गादेकत्वबहुत्वयो. 'ञ्' 'ञ' प्रत्ययौ भवत ।

यथा—

| पु० | स्त्री० |
|---|---|
| १–[ मनु ] | [ मनुञ् ] 'इत्यस्य नाम्न ' । |
| २–[ रामु ] | [ रामुञ् 'रामस्य' । |

'हस्तशब्दान्नित्यमिञ्' ६ । १९ ।

हो'स्त ( हस्त ) शब्द गजे प्रयुज्यते । अस्मात् शब्दान्नित्य स्त्रीप्रत्यये 'इञ्' प्रत्ययो भवति ।

यथा—

| पु० | स्त्री० |
|---|---|
| १–[ हो'स्त ] | [ होस्तिञ् ] 'हस्तिनी' । |
| २–[ काव ] | [ कोविञ् ] 'काकी' । |

'कावनागवूंटभ्यश्च' ६ । २० ।

एभ्य. शब्देभ्योऽपि 'इञ्' प्रत्ययो नित्य प्रयुज्यते ।

यथा—

| पु० | स्त्री० |
|---|---|
| १–[ नाग ] | [ नोगिञ् ] 'सर्पिणी' । |
| २–[ वूंट ] | [ वूटिञ् ] 'उष्ट्रा' । |

'अन्यतोऽपि पशुजाते ' ।

अत्राप्यर्थ. स्पष्ट । भाषाया खरशब्द. गर्दभाय प्रयुज्यते । तत्रैव 'इञ्' प्रत्यये इत्थं रूपं भवति । यथा—

१–[ खरिञ् ] 'गर्दभी' ।

'मनुष्यजातेरञ्' । ६ । २८ ।

मनुष्यजात्यर्थकात् शब्दात् स्त्रीविषये 'अञ्' प्रत्ययो भवति । प्राय अकारान्ताना पुरुषवाचकाना शब्दानामेव अयं नियम ।

यथा—    पु०    स्त्री०

१–( बटु )    ( बटञ ) 'ब्राह्मणी'।

३ १ १, एतेषा सूत्राणा सिद्धिकरणानि अधस्ताद् दीयन्ते।

सूत्र सं०—[ दर ] [ कौल ] 'दर' 'कौल' साम्प्रदायिकजातिनाम [ खार ] व्यवसायात्मकजातिनाम, लोहकार।

६।२ [ दरबाय् ] [ कौलबाय् ] 'दर' 'कौल' जातिस्त्रियौ ( खारबाय ) 'लोहकारस्त्री'।

[ खर ] 'गर्दभ'।

६।६ [ खोर् ] 'गर्दभी'।

[ वोल ] 'छिद्र' [ मोल् ] 'पिता' [ ज़ोल् ] 'जाला'।

२।१।३० [ वोलि् ] – [ मोलि् ] – [ ज़ोलि् ] – ।

२।१।६९ [ वालि् ] – [ मालि् ] – [ ज़ालि् ] – ।

२।१:७० [ वालि् ] – [ मालि् ] – [ ज़ालि् ] – ।

६।७ [ वाजि् ] – [ माजि् ] – [ ज़ाजि् ] – ।

६।६ [ वोज् ] 'उर्मिका',[ मोज् ] 'माता', [ जोज् ] 'जाला, सिद्धम्।

[ गाटुल् ] 'दक्ष', [ फुटुल् ]'पोटलिक' [चकुल्] 'चक्रिक'।

६।८ [गाटल्] – [ फुटल् ] – [ चकल् ] – ।

६।७ [गाटज्] – [ फुटज् ] – [ चकज् ] – ।

६।६ [गाटुज्] 'दक्षा', [ फुटुज् ]'पोटलिका', [चकुज्] 'चक्रिका', सिद्धम्।

[बतुक् ] 'वर्तिक', [हो'रव् ] 'शुष्क', [ड्यूग] 'तन्तुगुटिका'।

६।९ [बतुच् ] – [ होछ् ] – [ डीज् ] – ।

६।८ [बत्चु ] – [ ० ] – [ ० ] – ।

६।६ [ बचुच्],'वर्तिका', [हो'छ्] 'शुष्का', [डीज्] -तन्तुगुटिका' सिद्धम्।

[ मोत् ] 'उन्मत.' [क्वथ्] 'मारिक' [व्वरुद्] 'पुनर्भू'।

६।११ [ मोच् ] – [ क्वछ् ] – [व्वरुज्] – ।

६।६ [ मोच् ] 'उन्मता',[क्वछ् ] मारिका, [व्वरुज्] – सिद्धम्।

सिद्धरूपम्–[ मनु ] 'इत्यस्य नाम', [रामु] 'राम. [श्यामु] 'श्याम.'।

२।१।५१ [मनुज्] 'इत्यस्य नाम' [रामुज्ज्] 'रामः' [श्यामुज्] श्यामस्य ।

[होस्त्] 'गज ' [काव्] 'काक' [नाग्] 'सर्पः' [वूंट्] उष्ट्रः ।

६।१६ [हस्तु इञ्] 'हस्तिनी' — — — — —

६।२० [ ० ] – [काव् इञ्] – [नाग् इञ्] – [वूंट् इञ्] –

१।३ [हस्तिञ्] – [काविञ्] 'काकको', [नौगिञ्] 'सर्पिणी', [वूंटिञ्] उष्ट्रा । सिद्धम् ।

[बट्ठ] 'ब्राह्मण ' [मुसलमान्] 'म्लेच्छ '

६।२८ [बटञ्] 'ब्राह्मणी' [मुसलमानञ्] 'म्लेच्छस्त्री' ।

६।३ [क्वलय] 'कॅलय स्त्री' अनादरेण प्रोक्ते सति । अय शब्द नित्यस्त्रीलिङ्गः ।

इत्येते शब्दा साधिना ।

एव लिङ्गप्रक्रियया सज्ञापदेषु परिवर्तन भवति । अत्र कश्मीरभाषाया 'बाय्' 'क्वलय्' 'उलु' 'र' 'ञ्' 'इञ्' 'अञ्' प्रत्यया स्त्रीद्योतका भवन्ति । लकारान्तस्य जकार , कवर्गान्ताना चवर्गादेश., तवर्गान्ताना सस्कृते अप्रसिद्धश्चकारादेश स्त्रीलिङ्गे भवन्ति । एतत् सर्वं दर्शितम् ।

३, १, २, कानिचित् स्त्रीलिङ्गपदानि ईदृशान्यपि सन्ति, येषा प्रकृति. पुल्लिङ्गशब्दो नास्ति । अर्थाद् ये नित्यस्त्रीलिङ्गशब्दा भवन्ति । यथा—

| पु० | स्त्री० |
|---|---|
| १—[दान्द] 'वृषभ ' | [गाव्] 'गो ' । |
| २—[रून्] 'पति ' | [क्वलय] कॅलय 'पत्नी' । इत्यादि । |

३, २, वचनप्रक्रिया—

सस्कृते त्रीणि वचनानि भवन्ति । यथा—एकवचनम्, द्विवचनम्, बहुवचनञ्च । कश्मीरभाषायाञ्च वचने अपि द्वे एव स्त । यथा—एकवचनम्, बहुवचनञ्च ।

'एकानेकाभ्या द्वे द्वे वचने' ८।१।४

अत्र पूर्वं निगदितमेव यत् प्रातिपदिकेषु वचनेनापि परिवर्तनमागन्तु शक्नोति । सूत्रोदाहरणाभ्या स्पष्टीक्रियते—

'अकारान्ताना प्रथमैकबहुत्वे लिङ्गवत्' २।१।१ ।

प्रथमायामकारान्ताना लिङ्गानामेकवचन बहुवचनञ्च स्त्रीपुलिङ्गयोर्लिङ्गवद् विज्ञेयम् । 'लिङ्गवद्' शब्देन मूलशब्द कश्मीरशब्दामृतस्य ग्रन्थकारस्याभिमत ।

यथा—

| प्र० एक व० | प्र० बहु० व० |
|---|---|
| १—[ड्यक] | [ड्यक] 'ललाटानि' । |
| २—[मामय ] | [माम] 'मातुलाः' । |

'ऊदन्ताना पुसि' ।२।१।२।

ऊकारान्तानाञ्च लिङ्गाना प्रथमाया एकवचन बहुवचनञ्च लिङ्गवत् ( मूलशब्दवत्) भवति पुलिङ्ग एव। किन्तु तेषु पूर्ववर्णसम्बन्धिन. स्वरस्य स्थानेऽप्रसिद्ध सस्कृतेऽप्राप्त स्वरो विधीयते। स च प्लुताकारवद् उच्चार्यते।

यथा—

प्र० ए० व० | प्र० बहु० व०

१—[दोन्] [दोन्] 'करका:'।

'व्यञ्जनान्ताना च' ।२।१।३।

व्यञ्जनान्ताना पुलिङ्गाना प्रातिपदिकाना प्रथमैकबहुत्वे लिङ्गवद् भवत.।

यथा— प्र० ए० व० प्र० बहु० व०

१—[दय्] [दय्] 'ईश्वरा'।

'बहुत्वेऽकारागम' ।२।१।११।

व्यञ्जनान्तानाम् [इद्] ऊदन्तानाञ्च स्त्रीलिङ्गाना प्रथमाया बहुवचनेऽकारागमो भवति।

यथा— प्र० बहु० व० (स्त्री०)

[पच्य]

'कृतादेशानामूमात्रा आगम.' ।२।१।१६।

यत्र यत्र वचने व्यञ्जनान्ताना लिङ्गानामादेश. कृत स्यात्, तत्र ऊमात्राया आगमो भवति स्त्रीलिङ्गे।

यथा—

१—(सोच्) 'आशा.'।

२—(रोच्) 'रात्री'।

अत्राप्यूकारस्य स्वरसमानताया प्रभाव एव अवगन्तव्य', पुल्लिङ्गेऽप्युकारस्य सत्ताया ज्ञेय'। पुलिङ्गे बह्वाक्षरिकशब्देषु यदा अन्तिमाक्षर उकार स्यात्, तदा उकार अकारे परिवर्तते।

यथा— प्र० एक० व० प्र० बहु० व०

१—[गगुर्] [गगर] 'मूषका.'।

२—[वातुल्] [वातल] 'चर्मकारा'। इति

अनया साधितवचनप्रक्रियया ज्ञापित भवति यत् प्रातिपदिक वचनेन प्रभावित भवति।

३, २, १, एतेषा सूत्राणामुदाहरणानि साध्यन्ते—

पुंल्लिङ्गे—प्र० एकव०—

मन्त्र सं० [डयक) 'ललाटम्' [होज्] 'नाविक:' [माम] 'मातुल:'।

प्र० बहु० व०—

२।१।१ [ड्यक] 'ललाटानि' [होज्] 'नाविका:' [माम] 'मातुला:' ।

स्त्री० प्र० एकव०

[ब्यञ] 'भगिनी' [अछ] 'नयनम्' [गट्ठ] 'अन्धकारम्' ।

स्त्री० प्र० बहु० व०—

२।१।१ [ब्यञ[ 'भगिन्य.' [ओछ] 'नयने' [गट्ठ] 'अन्धकारा.' ।

पु० एकव०—

[दोन्] 'करक.' ।

प्र० बहु० व०—

२।१।२ [दोन्] 'करका ' ।

पु० प्र० एकव०—

[दय्] 'ईश्वर ' [खर्] 'गर्दभ.' [पोश्] 'पुष्प.' ।

प्र० बहु० व०—

२।१।३ [दय्] 'ईश्वरा ' [खर्] 'गर्दभा.' [पोश्] 'पुष्पाणि' ।

स्त्री० प्र० एकव०—

[पाट्] 'फट्टिका' [होट्] 'काष्ठ' [लोट्] 'पुच्छम्' ।

प्र० बहु० व०—

| | | | |
|---|---|---|---|
| २।१।११ | [पट्] | [हट्] | [लट्] |
| २।१।२२ | [पच्] | [हच्] | [लच्] |
| २।१।३० | [पचि] | [हचि] | [लचि] |
| १।१० | [पच्य] 'फट्टिका ' | [हच्य] 'काष्ठानि' | [लच्य] पुच्छानि । |

पु० प्र० ए० व०—

[गुर्] 'अश्वः' [शुर्] 'बाल.' [खुर्] 'असामञ्जस्यम्' इत्यादि ।

३, ३, कारकप्रक्रिया—

सम्बन्ध सम्बोधन च परित्यज्य सस्कृतभाषाया षट् कारकाणि दृश्यन्ते विभक्तयश्च सप्त ।

"कर्ता कर्म च करण च सम्प्रदानं तथैव च ।
अपादानाधिकरणे इत्याहु. कारकाणि षट् ।।"

क्रियाजनकं हि कारकमुच्यते । सम्बन्धे या षष्ठी तस्या क्रियाजनकता नास्ति, अत. सम्बन्धषष्ठ्या कारकत्व न स्वीकृतम् । यद्यपि देवदत्तकर्तृकेऽध्ययने 'देवदत्तस्याध्ययनम्'

पुस्तककर्मके चाध्ययने 'पुस्तकस्याध्ययनम्' इत्यादि प्रयोगेषु कर्तरि कर्मणि च षष्ठी दृश्यते, तथाप्यत्र तु देवदत्तपुस्तकार्थं कर्तृकर्मकारकरूप एवेति, न कारकस्य षड्भेदस्वीकृतौ कापि न्यूनतेति ।

कश्मीरभाषाया. कारकप्रक्रिया स्पष्टीकुर्वता ईश्वरकौलेन सम्बन्धस्य सम्बोधनस्य च कारकरूपेणोल्लेख कृत. । संस्कृते सर्वा. कारकविभक्तय प्रातिपदिकेन सहैव संयुज्यन्ते । कश्मीरभाषाया तिस्र कारकविभक्तय. एव प्रातिपदिकेन साक युक्ता भूत्वा आगच्छन्ति । तथा चावशिष्टपञ्चकारकविभक्तिषु विभक्ति· परसर्गश्च प्रयुज्येते । या. कारकविभक्तय. प्रातिपदिकेन सह युज्यन्ते, ता यथा—कर्ता, कर्म सम्बोधनञ्च ।

कारकै (विभक्तिभि) परसर्गैश्च मिलितैरर्थं स्पष्टीभवति, तानि यथा—करणम्, सम्प्रदानम्, अपादानम्, सम्बन्ध अधिकरणञ्च । अत्र कानिचिद् रूपाणि सदृशानि सन्ति । तत्र अर्थतो विभिन्नत्व परसर्गे भवति । एतानि सर्वाणि कारकाणि परसर्गश्च अधस्ताद् दीयन्ते । आदिमानि त्रीणि कारकाणि, यानि प्रातिपदिकेन सह मिलन्ति, निर्दिश्यन्ते ।

| | | |
|---|---|---|
| कर्ता | पु० ए० व० | [–अ न] |
| | ,, बहु० व० | [–अ व] |
| | स्त्री० ए० व० | [–इ ] |
| | ,, बहु० व० | [–अ व] |
| कर्म | पु० ए० व० | [–अ स] |
| | ,, बहु० व० | [–अ न] |
| | स्त्री० ए० व० | [–इ ] |
| | ,, बहु० व० | [–अ न] |
| सम्बोधनम् | पु० ए० व० | [–आ ] |
| | ,, बहु० व० | [–अ व] |
| | स्त्री० ए० व० | [–ई ] |
| | ,, बहु० व० | [–अ व] |

ते विभक्तिपरसर्गा· ये प्रातिपदिकान्ते सयुज्यार्थान् अभिव्यञ्जन्ति । यथा अधस्ताद् दीयन्ते—

| | | |
|---|---|---|
| करणम् | पु० ए० व० | [ – उनि सूत्य । दस्य । ] |
| | ,, ब० व० | [ – अव सूत्य । दस्य ] |
| | स्त्री०ए० व० | [ – इ हुन्दि सूत्य ] |
| | ,, ब० व० | [ – अव हुन्दि सत्य ] |
| सम्प्रदानम् | पु० ए० व० | [ –उ सुन्दि खोतरु पुछ्य ] |

| | | |
|---|---|---|
| | ,, बहु० व० | [ – अन हुन्दि खोतरु पुछ्य ] |
| | स्त्री० ए० व० | [ – इ हुन्दि खोतरु ,, ] |
| | ,, ब० ब० | [ – अन हुन्दि खोतरु ,, ] |
| अपादानम् | पु० ए० व० | [ – उ प्यठ् ] |
| | ,, ब० व० | [ – अव प्यठ् ] |
| | स्त्री०ए०व० | [ – इ प्यठ् ] |
| | ,, ब० व० | [ – अव प्यठ् ] |
| सम्बन्धः | पु० ए० व० | [ – उ सुन्द ] |
| | ,, ब० व० | [ – अन हुन्द ] |
| | स्त्री०ए०व० | [ – इ हुन्द ] |
| | ,, ब० व० | [ – अन हुन्द ] |

अत्र सम्बन्धकारके जडार्थवाचकाना प्रातिपदिकाना पु० एकवचने [ – उक् ] तथा च स्त्रीलिङ्गे [ इच् ] विभक्तिः इष्यते ।

| | | |
|---|---|---|
| अधिकरणम् | पु० ए० व० | [ – अस मज । प्यठ । निश ] |
| | ,, ब० व० | [ – अन मज । प्यठ । निश ] |
| | स्त्री०ए० व० | [ – इ मज । प्यठ । निश ] |
| | ,, ब० व० | [ – अन मज । प्यठ । निश ] |

३. ३. १. एतेषा कारकाणा परसर्गाणाञ्च प्रयोग प्रातिपदिकेन निर्दिश्यतेऽध ।

मूलशब्दः [ गोबुर ] 'बाल' [ व्यञ्जनान्त ] पुलिङ्ग

| | एक० व० | बहु० व० |
|---|---|---|
| कर्ता | गोबुरन् | गोबुरव |
| कर्म | गोबुरस | गोबुरन् |
| करणम् | गोबुरनि सूत्या दस्या । | गोबुरव सूत्य दस्य |
| सम्प्रदानम् | गोबुरु सन्दि खातरु । पुछ्य | गोबरन हुन्दि खातरु । पुछ्य |
| अपादानम् | गोबुरुप्यठ् | गोबरव प्यठ् |

| | | |
|---|---|---|
| सम्बन्ध. | गोबुरु सुन्द | गोबुरन हुन्द |
| अधिकरणम् | गोबुरस मज । प्यठ । निश | गोबुरन मज । प्यठ । निश |
| सम्बोधनम् | गोबुरा | गोबुरव |

मूलशब्द. ( कूर् ) 'कन्या' ( व्यञ्जनान्तः ) स्त्रीलिङ्ग.

| | एक० व० | बहु० व० |
|---|---|---|
| कर्ता | कोरि | कोर्यव |
| कर्म | कोरि | कोर्यन |
| करणम् | कोरि हन्दि सूत्य | कोर्यव हन्दि सूत्य |
| सम्प्रदानम् | कोरि हन्दि खातरु | कोर्यन हन्दि खातरु |
| अपादानम् | कोरि प्यठ् | कोर्यव प्यठ् |
| सम्बन्ध· | कोरि हुन्द | कोर्यन हुन्द |
| अधिकरणम् | कोरि मज । प्यठ । निश | कोर्यन मज । प्यठ । निश |
| सम्बोधनम् | कूरी | कोर्यव |

इत्थं लिङ्गेन वचनेन कारकविभक्तिभिश्च प्रातिपदिके सम्भाव्यमानं परिवर्तनम् ईश्वरकौलेन दर्शितम् ।

## ४. उपसंहारः

भाषाया लक्षणं लक्षयता मया कश्मीरभाषाया सज्ञापदाना किञ्चिद् वैशिष्ट्य प्रस्तुतम् । क्रियापदानामपि प्रचुरतया वैशिष्ट्यमस्ति, येषा विवेचनमन्यत्र सम्भाव्यते ।

कश्मीरभाषा दार्दिकपरिवारस्य भाषाऽस्ति, या आर्यभाषापरिवारस्य चैक. सेतुबन्ध इवास्ति । भाषाविज्ञानस्य काश्चिद् विशिष्टप्रक्रिया स्पष्टीकर्तुं विदेशिभाषाणामुदाहरणानि प्रस्तूयन्ते । एतान्युदाहरणानि प्राय कश्मीरभाषाया प्राप्यन्ते । अत कश्मीरभाषायाः प्रक्रियाणा परिज्ञानाय तेषा निरूपणमावश्यकमस्ति ।



# तात्पर्यवृत्तिविमर्शः

प० श्री वायुनन्दनपाण्डेय., व्या० सा० आचार्यः, प्राध्यापकः साहित्यविभागे,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालस्य

तत्रभवान् वाग्देवताऽवतारो मम्मट स्वकृतकाव्यप्रकाशे विलक्षणशब्दार्थौ काव्यमिति[1] काव्यस्वरूपमभिधाय तद्विधेयघटकार्थस्वरूपनिरूपणावसरे वाचक-लाक्षणिक-व्यञ्जकशब्दाना क्रमाद् वाच्य-लक्ष्य-व्यङ्ग्या ,अर्था सन्तीत्यभिधाय[2] सर्वेषा प्रायशोऽर्थाना व्यञ्जकत्वाद् वाक्यार्थस्यापि व्यञ्जकतया तद्विभागाकरणान्न्यूनतापत्ति परिहरन् "तात्पर्यार्थोऽपि केषुचित्"[3] इति सूत्रयाञ्चक्रे ।

अत्रायमभिसन्धि —यथा पदार्थो व्यञ्जक , तथा वाक्यार्थोऽपि । अन्वयरूपे वाक्यार्थे पदाना शक्तिस्वीकारे गौरवम्, ( लाघवात् पदाना पदार्थमात्रे शक्ति , अन्वयानामनेकविधत्वात् तत्र शक्तिस्वीकारे गौरवात्, अन्वयाशस्यान्यलभ्यत्वाच्च ) । पर वृत्ति विनार्थबोधनेऽतिप्रसक्ति स्यात्, अत. पदार्थाना मिथोऽन्वयरूपे वाक्यार्थे शब्दस्य तात्पर्याख्या वृत्तिरभ्युपगन्तव्या । तत्प्रतिपाद्यस्यार्थस्य तात्पर्यार्थत्वव्यपदेश. । स च आकाङ्क्षा-योग्यता-सन्निधिवशाद् जात्यादिरूप-पदार्थाना परस्परमन्वये वाच्यार्थभिन्न प्रत्येकपदवृत्त्यविषय. पदसमूहगम्यो वाक्यार्थ इत्यभिहितान्वयवादिना मतम् ।

तत्र जिज्ञास्यते—क इमेऽभिहितान्वयवादिन ? मीमासका:, नैयायिका., वैयाकरणाः, वेदान्तिन , आलङ्कारिका वा । ( अन्यत्र दर्शनेषु प्राय शब्दार्थविचारस्याप्रस्तुतत्वात् ) तत्र वाक्यार्थविचारकुशला मीमासका भाट्टा प्राभाकराश्च ।

तत्र प्राभाकरास्तु—अन्विताभिधानवादिन , तद्यथा प्रकरणपञ्चिकाया शालिकनाथ.[4]—पदेभ्य एव वाक्यार्थप्रतीतिर्यथा भवति, तथा प्रभाकरगुरोर्मतं वय निबध्नीम"[5] इति प्रतिज्ञायाह—पदार्थ एव प्रधानम्, गुणभूतार्थान्तरान्वितो वाक्यार्थ इत्युच्यते, न च पदार्थानामनेकत्वादनेके वाक्यार्था इति वाच्यम्, प्रधानपदार्थस्यैकत्वात् । इत्थ पदार्थानामन्वयो न वाक्यार्थ., किन्त्वन्विता. पदार्था एव वाक्यार्थ । यद्यपि वृद्धव्यवहारेणैव सर्वाशशब्दव्युत्पत्तयो जायन्ते, वाक्यैरेव च

---

१ काव्यप्रकाशे प्रथमोल्लासे १ सूत्रम् ।

२ का० प्र० द्वि० उ० ६ सूत्रम् ।

३. का० प्र० द्वि० उ० ७ सूत्रम् ।

४ प्रकरणपञ्चिकाया सवृत्तिकवाक्यार्थमातृकाया प्रथमपरिच्छेदे १ श्लोक. ।

५. तत्रैव द्वितीयः श्लोक.—

प्रधानगुणभावेन लब्ध्वाऽन्योन्यसमन्वयात् ।
पदार्थनेव वाक्यार्थान् संगिरन्ते विपश्चित. ॥ इति ।

वृद्धव्यवहारो भवति, तथापि यत्पदावापे यस्यार्थस्यावाप, यदुद्धारे चोद्धारस्तस्मिन्नेवार्थे तस्य पदस्य वाचकशक्तिर्निश्चीयते । न चैवमन्वितार्थप्रतीति. कथमिति वाच्यम्, अन्वितपदार्थस्यैवावापोद्वाराभ्या पदानामन्वितेष्वर्थेषु सामर्थ्यस्वीकारात् ।[1]

मम्मटोऽप्यन्विताभिधानवादिन प्रभाकरस्य मते वाक्यार्थो वाच्य[2] एवेति निरूपयति । अन्यत्र च तन्मतमुपपादयन्नाह यद् बालक[3] शक्तिग्रहवेलाया मध्यमवृद्धमुद्दिश्य गामानयेति उत्तमवृद्धस्य वाक्यप्रयोगात् सास्नादिमद्व्यक्तिमानयति सति मध्यमवृद्धे तच्चेष्टया तस्य वाक्यस्य तदर्थबोधकतामनुमिनोति । पश्चाद् गा नयाश्वमानयेति प्रयोगे गवापसरणमश्वाहरण च दृष्ट्वाऽन्वयव्यतिरेकाभ्या क्रियापदार्थान्विते कारके कारकपदस्य, कारकपदार्थान्वितक्रियाया च क्रियापदस्य शक्ति निश्चिनोति । अतो बालस्य प्रथमत एवान्वितबुद्धिर्जायते । न च गौरवादन्वयाश परित्यज्यत इति वाच्यम्, प्रथमज्ञातस्योपजीव्यत्वेनोपजीव्यपरित्यागानौचित्यात् । इत्थ प्रभाकरमते विशिष्टा एव पदार्था वाक्यार्थ , न तु पदार्थाना वैशिष्ट्यम्, अतस्तन्मतानुयायिनोऽन्विताभिधानवादिन कथ्यन्ते ।

भाट्टमीमासका. पुनरभिहितान्वयवादिन., तेषा मते पदैरनन्वितोऽप्यभिहितोऽर्थोऽन्वितार्थप्रतिपत्तेर्निमित्त भवतीति पदाना पारम्पर्येणान्वितेष्वपि हेतुत्वम्[4], तथापि तेऽन्वितेऽर्थे पदाना शक्ति न स्वीकुर्वन्ति, न वा पदार्थानामन्वयबोधाय तात्पर्याख्या वृत्तिमङ्गीकुर्वन्ति, ते लक्षणयैव वाक्यार्थं प्रतिपादयन्ति ।

इदमत्र तात्पर्यम्—पदेनाभिधया प्रतिपादिता अर्था वाक्यतात्पर्यानुपपत्त्या आकाङ्क्षा-योग्यता-सन्निधिवशाद् विशिष्ट रूप स्वान्वयमनुभावयन्तीति वाक्यार्थो लक्ष्य[5] एव, पदेन यद् बाध्यते तच्छक्यम्, पदार्थेन यद् बोध्यते तल्लक्ष्यमिति नियमात् ।

अत्र केचन सगिरते[6]—वाक्यार्थो न लक्ष्य., स्वार्थस्यापरित्यागात् । लक्षणा तत्रैव भवति

---

१. प्रकरणपञ्चिकाया सवृत्तिकवाक्यार्थमातृकाया प्रथमपरिच्छेदे ७ श्लोक.—
आप्यन्ते चोद्ध्रियन्ते च स्वार्था अन्वयशालिन ।
अन्वितेष्वेव सामर्थ्यं पदाना तेन गम्यते ॥

२. का० प्र० द्वि० उ० ७ सूत्रस्य वृत्तौ ।

३. का० प्र० प० उ० शब्दवृद्धाभिधेयाश्चेत्यादि ।

४ न विमुञ्चन्ति सामर्थ्य वाक्यार्थेऽपि पदानि न ।
तन्मात्रावसितेष्वेपु पदार्थेभ्य स गम्यते ॥
श्लोक वा० अधि० ७, श्लोक २२९ तम ।
वाक्यार्थमितये तेषा प्रवृत्तौ नान्तरीयकम् ।
पाके ज्वालेव काष्ठाना पदार्थप्रतिपादनम् ॥
श्लोक वा० अधि० ७, श्लोक ३४३ तम.
भाष्यकार शबरस्वामी च पू० मी० १-१२५ ।
पदानि हि स्व स्वमर्थमभिधाय निवृत्तव्यापाराणि अथेदानीमवगता सन्त. वाक्यार्थमेव गमयन्ति ॥ इति ।

५. 'वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति न स्थिति ' इति वार्त्तिककारा मिश्रमहोदया. ।

६. प्र० प० सवृत्तिकवाक्यार्थमातृकाया: प्रथमपरिच्छेदे ।

यत्र स्वार्थस्य परित्याग , यथा 'गङ्गाया घोष ' इत्यादाविति, तन्न, लक्षणीयानुरोधात् क्वचित् स्वार्थस्य त्याग., क्वचित् संग्रह , तद्यथा—'पौर्णमासी यजेत' इत्यादावेकवचनानुपपत्त्या पौर्णमासीशब्दो यागवचनो यागसमुदायलक्षणार्थ । न च समुदायपरिग्रहे समुदायित्याग , तदाश्रयत्वात् तस्य । एवमेव निषादस्थपत्यधिकरणे[1] पूर्वपक्षे षष्ठचर्थलक्षणा स्यादित्युच्यते, न तत्र प्रकृत्यर्थस्य त्यागोऽप्यापद्यत इत्यादिदर्शनात् स्वार्थापरित्यागेऽपि युक्तैव लक्षणा । अत एव—

वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तित ।
तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते ॥[2]

इति लक्षणा लक्षयन् शालिकनाथोऽपि सङ्गच्छते । इत्थ भाट्टमते वाक्यार्थो लक्ष्य एव ।

आचार्यखण्डदेवश्च—यद्यपि पदपदार्थयो सम्बन्धो नित्य , तथापि वाक्यार्थाना वाक्यै सह सम्बन्ध सङ्केतित । अतो वाक्यार्थज्ञान सङ्केतग्रहसापेक्षम्, वक्त्रिच्छाघटिततात्पर्यज्ञानसापेक्ष च । अतस्तात्पर्यज्ञान वक्तृपुरुषसम्बन्धस्तस्मिश्च भ्रमप्रमादसम्भवान्न विधिवाक्यानामैकान्तिक प्रामाण्यम् । अपि चानन्तवाक्यार्थसाधारणपदाना वाक्यार्थविशेषे सम्बन्धासम्भवश्चेत्याशङ्क्य—"पदैरभिहिता एव पदार्था स्वबोध्यसम्बन्धरूपया लक्षणया वाक्यार्थभूता भावना समभिव्याहारविशेषबलाद् विशिष्य बोधयन्ति । तथा च "यजेत स्वर्गकाम " इत्यादौ स्वर्गकामनिष्ठा यागकरणिका स्वर्गभाव्यिका प्रवर्तनाविषयिणी भावना" इत्यादिरीत्या भावनाविशेष्यकबोधस्य सर्वविधिष्वैकरूप्येण न तदानन्त्यप्रयुक्तसम्बन्धाग्रह । तात्पर्य च शब्दगत एव धर्मविशेष । तद्ग्राहकश्चाध्ययनादिविध्यादिरेवेति न पुरुषसम्बन्धप्रयुक्त विधीनामप्रामाण्यम्" इत्याह[3] ।

वाञ्छेश्वरयज्वा च—सम्बन्धस्येति प्रतीकमुपादाय मतत्रयमुपस्थापयामास । तत्र प्रथम वैयाकरणाना मत वाक्यस्य वाक्यार्थे शक्तिरिति । द्वितीय मतमन्येषा ये मुक्तशरन्यायेनैकयैवाभिधया पदार्थस्मृति वाक्यार्थबोध च स्वीकुर्वन्ति । तृतीय मत परेषा प्रस्तौति ये वाक्यस्य वाक्यार्थे तात्पर्यरूपवृत्त्यन्तरमङ्गीकुर्वन्ति[4] इति ।

पार्थसारथिमिश्र —वाक्यार्थो लक्ष्य एवेत्यभिधत्ते, न चाङ्गीकरोति तात्पर्याख्या वृत्ति वाक्यार्थबोधाय । स इत्थ ब्रूते—"वाक्य पदानि वा साक्षाद् वाक्यार्थबुद्धि न जनयन्ति, अपि तु पदाभिहितै पदार्थै वाक्यार्थो लक्ष्यते" इति । तन्मते पदे पदार्थे च पृथक् पृथक् शक्ति, पदार्थाभिधाने पदशक्ति , वाक्यार्थाभिधाने पदार्थशक्तिरिति शक्तिद्वयी । प्रमाणयति चात्र श्लोकवार्त्तिकम्—"आनन्तर्याद्धि वाक्यार्थस्तद्धेतुत्व न मुञ्चति" (७-११४) इति । यद्यप्येकत्र—

प्राथम्यकरण यत्तु तद्विपर्ययसाधनम् ।
ये तात्पर्याभिधातृत्वे तेऽप्यनैकान्तिकीकृते ॥[5]

---

१. मी० द० ६-१-१० ।

२ प्र० प० वा० वृ० २ मा० ।

३ भाट्टदीपिका १ अ० १ पा० ६ अधि "उत्पत्तौ वा वचना. स्युरर्थस्यातन्निमित्तत्वात्" इति २४ सूत्रे ।

४. भाट्टचिन्तामणौ तट्टीकायाम् ।

५ न्यायरत्नमालायाम्, वाक्यार्थनिर्णये १५ ।

इति सङ्ग्रहश्लोके तात्पर्यवृत्तेर्नाम गृहीतम्, तथापि पूर्वपक्षतया, सिद्धान्ते तु तस्मान्न वाक्यं न पदानि साक्षाद् वाक्यार्थबुद्धि जनयन्ति, किन्तु पदस्वरूपाभिहितै पदार्थै॰, सलक्ष्यतेऽसाविति सिद्धमेतदित्युदाहृत[1] तेन । तत्त्वचिन्तामणो यदपि तात्पर्यप्रतिपादनमुपलभ्यते, तदपि लक्षणावृत्तिप्रतिपादकम् । तद्यथा—स्वार्थसम्बन्धिनि तात्पर्यमेव लक्षणा । तत् तात्पर्यं च तत्प्रतीतिमुद्दिश्योच्चरितत्वमिति[2] न पुन. पदार्थान्वयबोधाय स्वीकृततात्पर्यशक्तेस्तत्र प्रतिपादनमिति । वाचस्पतिमिश्रस्तत्त्वबिन्दौ—(२२ पृष्ठे) अन्विताभिधानवादिमत प्रतिपादयन् प्रथमावगताना पदानामभिधायकाना वाक्यार्थप्रत्ययोपजनपर्यवसिततात्पर्यवृत्तीनामेकमेवाकाङ्क्षायोग्यतासत्तिरूपोपाध्युपायगृहीतार्थान्तरान्वितस्वार्थाभिधानसामर्थ्यमित्यादिना तात्पर्यवृत्तिमुपपाद्यापि कल्पनालाघव यत्र तत्पक्ष रोचयामहे (२४ पृष्ठे) इत्युक्त्वा (२९ पृष्ठे) तात्पर्यवृत्तिस्वीकारे गङ्गापद तीराभिधायि भवेदिति लक्षणोच्छेदापत्ते । यदि तत्र तत्परस्यापि न तदभिधानमित्युच्यते तदितरत्रापि समानमित्यादिना निरास्थत ।

आचार्यखण्डदेवो मीमासाकौस्तुभे स्पष्टतस्तात्पर्याख्या वृत्ति स्वीचक्रे, परं लक्ष्यार्थस्य शाब्दत्वप्रतिपादनाय, न तु वाक्यार्थप्रत्यायनायेति तत्प्रकरणतोऽवसीयते । तद्यथा—न चैव विभक्त्यर्थस्याभिधेयार्थान्वयित्वव्युत्पत्तिभङ्ग । 'गङ्गाया घोष' इत्यादौ लक्ष्येऽप्यर्थेऽधिकरणत्वाद्यन्वयदर्शनेन तादृशव्युत्पत्तेरेवासिद्धे । अतो वृत्त्या प्रकृत्युपस्थापितार्थान्वयित्वमेव विभक्त्यर्थस्य क्वचिदाद्यबोधे, क्वचित् पाश्चिकबोधे व्युत्पत्तिसिद्धम् । इदमेव फलबलेन कल्पनीयम् ।

यदपि चार्थस्य लक्षकत्वपक्षे लक्ष्यस्याशाब्दस्य विभक्त्यर्थानन्वय इत्युक्तम्, तदप्यस्मिन् पक्षे तात्पर्याख्यवृत्तिविषयकत्वेन शाब्दत्वस्य लक्ष्येऽपि स्थापयिष्यमाणत्वादकिञ्चित्करमिति [तदर्थत्वात् प्रयोगस्याविभाग (१-३-३५) सूत्रे आकृत्यधिकरणे १५० पृष्ठे] ।

न्यायसुधाया द्वितीयाध्यायस्य प्रथमे पादे भावार्थाधिकरणे (५७२-७३ तमयो· पृष्ठयो) भावार्था: कर्मशब्दास्तेभ्य क्रिया प्रतीयते । एष ह्यर्थो विधीयते (२-१-१४) इति सूत्रव्याख्याने भट्टसोमेश्वरस्तन्त्रवार्त्तिकस्य गम्यमानेति प्रतीकमुपादाय गम्यमानाया अपि भावनायास्तद्वाचिनश्चाख्यातस्यापेक्षया तात्पर्यावगतिरिति तात्पर्यसूचनायापेक्षोक्ता गम्यमानस्यापि तात्पर्यवृत्त्या शाब्दत्वात् सामानाधिकरण्योपपत्तौ कर्त्रधिकरणसिद्धदृष्टान्ताभिधान तथाभूतयेत्यपेक्षमाणत्वेन तात्पर्यवृत्त्या शाब्दीभूतयेत्यर्थ इत्यादिना तद्ग्रन्थे यदपि तात्पर्यवृत्ते स्फुटप्रतिपादनम्, तदपि पक्तव्यमित्यादिकृदन्तस्थलेऽवाच्याया अपि भावनाया शाब्दत्वप्रतिपादनायेति ।

न्यायरत्नाकरे वाक्याधिकरणे "साक्षाद् यद्यपि कुर्वन्ति" ( ३४२ श्लोके ) इति श्लोकवार्त्तिकव्याख्याने पार्थसारथिमिश्रो वाक्यार्थावगतौ तात्पर्यं स्वीकरोति । यद्यथा—"पदार्थरूपस्य प्रमाणान्तरसिद्धत्वात् । तन्मात्रप्रतिपादन निष्फलम्, अत पदार्थावसिताऽभिधाव्यापाराणामपि पदाना तत्रानवसिततात्पर्याणा वाक्यार्थावगतावेव तात्पर्यमिति युक्त तेषा क्रियार्थेन समाम्नाय " इति ।

---

१. तत्रैव वा० नि० अन्तिम वाक्यम् ।

२. तत्त्वचिन्तामणौ—अन्यमतम् ६८६ तमे पृष्ठे ।

वेदान्तिनस्तु प्रायो भाट्टानुसारिणोऽत्र लक्ष्यन्तेऽभिहितान्वयवादिनः, तथापि तेषां मते वाक्यार्थो लक्ष्य एवेति तद्यथा चित्सुखाचार्योऽभिहितान्वयवादेऽन्विताभिधानवादिभिरारोपित गौरवदोषमुद्धर्तुमाशङ्कते[1]।

नन्वभिहितान्वयवादे तिस्रः शक्तयः कल्पनीया भविष्यन्ति। तथाहि १—पदानामर्थस्वरूपानुभवजननशक्तिः, २—अर्थानां चान्योन्यान्वयप्रत्यायनशक्तिः, ३—तदाधानशक्तिश्च। पदानामर्थस्मारकत्वपक्षेऽपि प्रथमां विहाय द्वितीयतृतीयशक्त्योरवश्यकल्पनीयत्वाद् शक्तिद्वयं कल्पनीयम्। अन्विताभिधानवादे पदानां परस्परान्विताथाभिधायिनी शक्तिरेकैव कल्पनीयेति कल्पनालाघवम्, अतोऽन्विताभिधानवादपक्ष एव श्रेयानिति चेत्, मैवम्, अन्विताभिधानवादेऽपि स्वार्थाभिधायिनी, अर्थान्तराभिधायिनी, अन्वयाभिधायिनी चेति तिसृणां शक्तीनां पदेऽवश्यकल्पनीयत्वात्।

न चोभयो समानशक्तिकल्पनागौरवे विनिगमकाभावादन्विताभिधानपक्ष एव श्रेयानिति वाच्यम्। अभिहितान्वयेऽन्वितार्थप्रत्यायनाय प्रयुक्तानां पदसमूहानां समभिव्याहारसामर्थ्यात् पदस्मारितार्थानां मिथोऽन्वयस्य लक्षणयैवोपपत्तेरनन्यलभ्यस्य च शब्दार्थत्वात्, तत्र शक्तिकल्पनस्य वैयर्थ्यात्। तदुक्तम्—

विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्यतः। इति।

धर्मराजाध्वरीन्द्रस्तु[2] वाक्यार्थज्ञाने आकाङ्क्षा-योग्यताऽऽसत्तयस्तात्पर्यज्ञानं चेति चत्वारि सहकारिकारणानीत्युदाजह्रे। तत्तात्पर्यं च न तत्प्रतीतीच्छयोच्चरितत्वम्, मौनिश्लोकादर्थज्ञानशून्यपुरुषोच्चरितवेदाच्चार्थप्रतीतेरप्रसङ्गात्। अपि तु तत्प्रतीतिजननयोग्यत्वं तात्पर्यम्। अर्थात् पदार्थसंसर्गानुभवजननयोग्यत्वं तात्पर्यम्। न चैवमपि केनचित् पुरुषेण लवणानयनप्रतीतीच्छया सैन्धवमानयेति वाक्यं प्रयुक्तम्, परं तद्वाक्यस्याश्वसंसर्गप्रतीतिजनने स्वरूपयोग्यतासत्त्वाद् लवणपरत्वज्ञानकालेऽप्यश्वसंसर्गभानापत्तिरूपदोषस्तदवस्थ एवेति वाच्यम्, तदितरप्रतीतीच्छयाऽनुच्चरितत्वमपि तात्पर्यं प्रति विशेषणत्वात्। इत्थञ्च तत्प्रतीतिजननयोग्यत्वे सति तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वं तात्पर्यमिति फलितम्। अत्र मात्रपदनिवेशादुभयप्रतीतीच्छयोच्चरिते नाव्याप्तिः। तत्प्रतीतिमात्रजननयोग्यतायाश्चावच्छेदिका शक्तिः, न तत्प्रतीतीच्छयोच्चरितत्वम्, अव्युत्पन्नोच्चरितवेदवाक्यादावव्याप्तेः। न च शक्तिकल्पने गौरवम्, अस्माकं मते सर्वत्र कारणेषु कार्यानुकूलशक्तेः स्वीकारादित्याह। एवञ्च तन्मते वाक्यार्थो न लक्ष्यः, अपि तु शब्दज्ञानजनकं तत्प्रतीतिजनकत्वेत्याद्युक्तरूपं तात्पर्यम्, अत एव शब्दप्रमाणं निरूपयन्—प्रमाणान्तराबाधिततात्पर्यविषयीभूतपदार्थसंसर्गबोधकं वाक्यं प्रमाणमिति लक्षयाञ्चक्रे।[3] वह्निना सिञ्चेदिति वाक्यस्य प्रामाण्यापत्तिपरिहाराय प्रमाणान्तराबाधितेत्युक्तम्।

---

१. तत्त्वप्रदीपिकायाम् (चित्सुख्याम्)।

२. वेदान्तपरिभाषायामागमपरिच्छेदे।

३. यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते तद्वाक्यं प्रमाणमिति तत्रैवोक्तेः।

वैयाकरणाश्च नाभिहितान्वयवादिन, तेषां मते निरवयवं वाक्यं निरवयवस्य वाक्यार्थस्य वाचकमिति। ते वाक्येऽपि शक्तिं स्वीकुर्वन्ति। तद्यथा वैयाकरणभूषणसारे कौण्डभट्टः[1]—हरेऽव, विष्णोऽवेत्यादौ "एङः पदान्तादति" इत्येकादेशे सति पदयोर्विभागस्य दुर्ज्ञेयत्वात् प्रत्येक-पदाज्ञानेऽपि समुदायशक्तिज्ञानाच्छाब्दबोधात् समुदायेऽपि शक्तिस्वीकार आवश्यक। वस्तुतो यथा पदेभ्य पदार्थबोधः, तथा वाक्येभ्यो वाक्यार्थबोध इति पदेषु पदार्थशक्तिरिव वाक्येषु वाक्यार्थशक्तिः स्वीकरणीयेति पदस्फोटवाक्यस्फोटौ व्यवस्थितौ।

न च वाक्यार्थस्यापूर्वत्वात् कथं तत्र शक्तिग्रह इति वाच्यम्, पदेऽपि पर्यनुयोगस्य तुल्यत्वात्। न च पदशक्तिः पदार्थांशे ज्ञाताऽन्वयांशेऽज्ञातैवोपयुज्यत इति कुब्जशक्तिवाद इति वाच्यम्, वाक्यशक्तिरज्ञातैवोपयुज्यत इति वादाभ्युपगमस्य तुल्यत्वात्।

अपि च घट कर्मत्वमानयनं कृतिरित्यतस्तादृशशाब्दबोधाभावाद् घटकर्मकमानयनमिति बोधे घटार्थकप्रातिपदिकोत्तरकर्मत्ववाचकविभक्ते, ततो धातो, तत आख्यातस्य समभिव्याहारः कारणमिति कार्यकारणभावज्ञानवतो बोधात् तज्ज्ञानमपि हेतुरिति चेत्, सिद्धो वाक्यस्फोटः।

वस्तुतस्तु यथैकारोकार-ऋकारादिवर्णेषु प्रतीयमाना अपि अवयवा न सन्ति तथैव पचतीत्यादौ वर्णा न सन्ति, अतो न वर्णसमूह पदम्। एवं वाक्यात् पदानां भेदो नास्ति। इत्थं च वाक्यखण्डमेव। तद्यथा—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन॥

इत्याह[2]।

परमलघुमञ्जूषायां नागेशभट्टा अप्यखण्ड वाक्यस्फोटमाहु। तत्र वर्णपदस्फोटयोस्तु यथैकस्याकाशस्य घटाकाशो महाकाश इत्यौपाधिको भेद, यथा चैकस्यैव चेतनस्यौपाधिको जीवेश्वरभेद, जीवानां च परस्परं भेद, यथा वा मुखे मणिकृपाणदर्पणव्यञ्जकोपाधिवशाद् दैर्घ्य-वर्तुलत्वादिभानम्, तद्वदौपाधिकं भानम्।[3] तत्र शास्त्रप्रक्रियानिर्वाहाय वर्णस्फोटादय कल्पिता एव, "उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता" इति न्यायात्।[4]

लघुमञ्जूषायां च सर्वं वाक्यमखण्डमेव। तत्र पदानि कल्पितान्येव। पदात् पदार्थबोध इत्यङ्गीकारे क्रियासामान्यान्विते शक्ताच्चैत्रपदाद् विशेषबोधे लक्षणा स्यात्। न च विशेषोऽपि सामान्यान्तर्गत वाच्य एवेति वाच्यम्। शक्तिग्रहपदार्थोपस्थितिशाब्दबोधानां समानप्रकारकत्व-नियमवत् समानविशेष्यकत्वनियमस्यापि स्वीकारात्। सामान्यरूपेण विशेषबोधेऽपि लक्षणेति प्रकाशोक्तं[5]।

किञ्च, पदानां सत्यत्वे सत्यस्य च नियतत्वे राजरूपार्थप्रत्यायकस्य 'राजा, राजानम्, राज्ञा, राजनि' इत्यादावनियतत्वं न स्यात्। महाभाष्ये 'आशित कर्ता' (अष्टा० सू०

१. वैयाकरणभूषणसारे ६३।६४ कारिके।

२. वै० भू० सारकारिका–६६।

३. परमल० म० स्फोटविचारे।

४. तत्रैव शक्तिविचारे।

५. ल० म० बौद्धार्थस्य वाच्यत्वनिरूपणे।

६-१-२०७ ) इत्यत्र पदानामसत्यत्व दर्शितम् । तत्र ह्युक्त "न लक्षणेन पदकारा अनुवर्त्या " इति
ादविभागस्यासत्यत्वादेव हि तदनुवर्तननिषेध सङ्गच्छते । अपि च पदाना सत्यत्वे तेषा स्वत.
सेद्धत्वात् पदानि कुर्वन्तीति पदकारा इति समाख्यापि विरुध्येत । ।

न च पदार्थानामभावे 'धवखदिरपलाशा ' इत्यत्र बहुवचन कथमिति वाच्यम्, गर्गा
त्यत्र यथैक एव गर्गशब्दो बहुषु वर्त्तते तथा शब्दशक्तिमहिम्ना द्वन्द्वस्यापि बहुषु वृत्ते ।

किञ्च पदाना सत्यत्वे अश्वकर्णादावश्वाद्यर्थप्रतीत्यापत्ति । 'इद रूढम्, इद यौगिकम्,
द योगरूढम्' इत्याद्यपि शास्त्रकृत्कल्पनेव विशिष्टार्थबोधार्था । शब्दपरिज्ञाने शास्त्रमुपाय ,
ातेषु तेषु प्रयोजनस्य सम्पन्नत्वात् तत्परित्याग । तदुक्त हरिणा---

उपादायापि ये हेयास्तानुपायान् प्रचक्षते ।
उपायाना च नियमो नावश्यमवतिष्ठते[1] ।। इति ।

वाक्ये शक्तिस्वीकारादेवार्थवत्त्वात् प्राप्ता प्रातिपदिकसञ्ज्ञा समासग्रहणनियमेन
ार्यते । न च पदानामनर्थकत्वाद् सत्त्वाच्चार्थवत्सूत्रेण कथ प्रातिपदिकत्व तेषामिति वाच्यम्,
सत्यस्यैव शास्त्रप्रक्रियानिर्वाहाय कल्पितत्वात् । तदुक्त हरिणा—

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ।
उपाया शिक्षमाणाना बालानामुपलालना ।
असत्ये वर्त्मनि स्थित्वा तत सत्य समीहते[2] ।। इति ।

अखण्डमेव वाक्य बोधकमखण्डार्थस्येति युक्तमेव । तदुक्त हरिणा—

यथैवानर्थकैर्वर्णैर्विशिष्टोऽर्थोऽभिधीयते ।
पदैरनर्थकैरेव विशिष्टार्थोऽभिधीयते ।।
न हि किञ्चित् पद नाम रूपेण नियत क्वचित् ।
पदानामर्थरूप च वाक्यार्थादेव जायते[3] ।। इति ।

वाक्येऽखण्डत्व चापृथगुपस्थितिजनकत्वम्, अर्थे खण्डत्व चापृथगुपस्थितिविषयत्वमिति ।

एवञ्चाभिहितान्वयोऽन्विताभिधान ससर्गो वाक्यार्थ , समृष्टा पदार्था , स इत्यादिर्जाति
ार्थो व्यक्तिर्वेति सर्वं तत्तच्छास्त्रवासनावशात् कल्पितमेवेति ।

ननु तत्तच्छास्त्रप्रणेतार कि तत्त्वज्ञा उत न ? आद्ये कथ तदुक्तपक्षाणामसत्यत्वम्,
त्ये पामरोक्तिवत् तेषामश्रद्धेयत्वापत्तिरिति चेत्, उच्यते---यद्यपि ऋषीणा दर्शन तत्त्वविषय
ति, तथापि तत्त्वभूतेन वस्तुना व्यवहारसम्भवाद् व्यवहारकाले तेऽप्यदृष्टतत्त्वसदृशा
ाप्रकारैर्व्यवहरन्ति । अत एव घट इत्युक्ते वैशेषिकोऽतिरिक्तमवयविन बुध्यते, साख्यो
समूहम्, बौद्धादि. परमाणुसमूहमिति । तदुक्त हरिणा—

ऋषीणा दर्शन यच्च तत्त्वे किञ्चिदवस्थितम् ।
न तेन व्यवहारोऽस्ति न तच्छब्दनिबन्धनम्[4] ।। इति ।

---

ल० म० बौद्धार्थस्य वाच्यत्वनिरूपणे उद्धृतम् ।
तत्रैव ।
तत्रैव ।
ल० म० कुञ्जिकाटीकायामुद्धृतं स्फोटभेदनिरूपणे ।

अत्र वाक्यार्थस्यापेक्षिक सत्यत्वम्, सर्वव्यवहारस्यासत्यविषयत्वात् ।

वाक्यार्थश्च प्रतिभामात्रविषय । प्रतिभा च जन्मान्तरसस्कारजापि । प्रतिभाविषयत्वाच्च प्रतिभा वाक्यार्थ इति व्यवहार ।

न च पदपदार्थकल्पनायामपि 'देवदत्त गामभ्याज शुक्ला दण्डेन' इत्यादौ क्रियाकारकभावसम्बन्धस्य विभक्त्यैवोक्तत्वेन को वाक्यार्थ इति वाच्यम्, पदार्थाना परस्परविशेष्यविशेषणभावरूपान्वयस्य वाक्यार्थत्वात् । तद्ग्रहश्च क्वचिदुपदेशेन क्वचिच्चाकाङ्क्षावशादिति । प्रथमतो वाक्यार्थेऽवगते कल्पितान्वयव्यतिरेकाभ्या पदाना स्वार्थमात्रपरत्वावगमादन्वयरूपे वाक्यार्थे वाक्यशक्तिरवतिष्ठते । तदुक्त हरिणा—

वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया । इति ।

भाट्टपादैरप्युक्तम्—

न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि न ।
वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैव च दृश्यते[1] ॥ इति ।

अत्र 'लक्ष्यमाण' इत्यस्य प्रतीयमान इत्यर्थ., 'दृश्यते' इत्यस्य प्रतीतिविषयत्वेनानुभूयत इत्यर्थ । न च वाक्यार्थे वाक्यस्य लक्षणेति चेन्न, वाक्यबोध्यान्वयस्य सम्बन्धरूपत्वेन तत्र तत्र वाक्यबोध्यस्य सम्बन्धस्य पदार्थस्य वा सम्बन्धग्रहाननुभवेन वाक्यबोध्यनिरूपितसम्बन्धमूलिकायास्तद्रूपाया वा लक्षणाया असम्भवात्, अनुपपत्तिप्रतिसन्धानमन्तरापि वाक्यार्थबोधेन लक्षणाया अप्रसक्ते । न च तात्पर्यविषयीभूतवाक्यार्थानुपपत्तिर्लक्षणाया बीजमिति चेन्न, नियमत पूर्वं तात्पर्यज्ञानस्यापि कल्पनापेक्षया शक्तिकल्पनस्यैवौचित्यात् । अत एवोक्त भट्टपादै —

वाक्यार्थमितये तेपा प्रवृत्त्या नान्तरीयकम् ।
पाके ज्वालेव काष्ठना पदार्थप्रतिपादनम्[2] ॥ इति ।

एवञ्च सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थितिरित्यत्र लक्ष्य इत्यस्य लक्षणया बोध्य इति नार्थ अपि तु प्रतीतिविषय इत्यर्थोऽस्तीति शेप ।

एव खलु तेषा मतेऽखण्ड वाक्यमेव वाचकमर्थश्चाखण्ड एव वाच्य इति । पदार्थानामन्वयकल्पना तेषा मते दूरेऽपास्ता । शास्त्रप्रक्रियानिर्वाहाय कल्पितपदार्थयोरन्वयग्राहिका वाक्यशक्ति. । सा चाकाङ्क्षाभास्या, वाक्यसमयग्राहिका चाकाङ्क्षेत्युक्ते. । एवं तावद् वैयाकरणाना मते तात्पर्यवृत्तेरनङ्गीकार इति ।

प्राचीना· परमप्राचीनाश्च ये वैयाकरणास्ते त्वभिधातिरिक्ता कामप्यन्या वृत्ति नाङ्गीकुर्वन्तीति विदितचरमेव विपश्चिताम् ।

नैयायिका अपि प्राचीननव्यभेदेन द्विधा विभक्ता सन्ति । तेषु नव्यनैयायिकास्तु पदार्थानामन्वय आकाङ्क्षाभास्य इति वदन्ति । तदुक्तं गदाधरभट्टाचार्येण—'शाब्दबोधे चैकपदार्थेऽपर-

---

१ ल० म० स्फोटभेदनिरूपणे उद्धृतम् ।

२. तत्रैवोद्धृतम् ।

पदार्थस्य संसर्गं संसर्गमर्यादया भासते' ।[१] तत्र 'संसर्गमर्यादया भासते' इत्यस्य आकाङ्क्षाभास्य इत्यर्थः, संसर्गस्य मर्यादा यया सा तया = आकाङ्क्षयेत्यर्थात् । शक्तिवादे च—सङ्केतो वृत्तिरिति स्वीकारे आधुनिकसङ्केतस्यापि वृत्तित्वं निर्वहति । तथा च तात्पर्यस्यापि वृत्तित्वं स्यात्, यतो हि 'इदं पदमिममर्थं बोधयतु" इत्येवरूपेण यद्बोधकत्वेन पदविषयकत्वम्, तदेव सङ्केतत्वम्, तस्य तात्पर्येऽपि सत्त्वात् । न चेष्टापत्तिः, लक्षणास्थले तात्पर्येणैव बोधे लक्षणोच्छेदापत्तेरित्याद्याशङ्क्य पदार्थोपस्थितिरूपव्यापारेण शाब्दबोधोपयोगित्वस्यैव वृत्तित्वात् तात्पर्यस्य साक्षादेव शाब्दबोधोपयोगितया न तस्य वृत्तित्वमिति समादधे[२] ।

प्राचीननैयायिकेषु जयन्तभट्टः स्वकीयोद्भटवैदुष्येण निराकृत्य शङ्कापङ्कं तात्पर्यं याथातथ्येन निरूपयाञ्चक्रे[३] । तद्यथा—

> दोषोऽन्विताऽभिधाने यः सामान्येऽपि स तादृशः ।
> दोषतुल्यो विशेषेऽपि यश्चोक्तोऽभिहितान्वये[४] ॥ इति ।

केचन सामान्येनान्विताभिधानं मन्यन्ते, विशेषतश्चाभिहितान्वयं वदन्ति । अर्थाद् गोशब्दः स्वार्थमनवगतविशेषगुणक्रियासामान्यान्वितमभिधत्ते तावति अन्विताभिधानम् । शुक्लादिगुणविशेषसम्बन्धस्तु पदान्तरादवगम्यते । सोऽयं विशेषोऽभिहितान्वये इत्येतदपि दोषोपहतमेव ।

न च भवताऽपूर्वमेवोच्यते, अन्विताभिधानेऽभिहितान्वये च दोष इति, एवं सत्याभिधानिको व्यवहार एव सङ्कुलः स्यात्, सर्वत्र दोषसम्भवादिति वाच्यम्, सहत्यकारीणि पदानीत्युक्ते (समुदितैः पदैरेकस्य वाक्यार्थस्य प्रत्यायनात्) । वाक्यार्थश्च विशेषणीभूतपदार्थसंसृष्टः कश्चित् पदार्थ एव । न चैवमन्विताभिधानपक्ष एव भवता प्रतिपाद्यते । पदानि सहत्यान्वितमर्थं सम्पादयन्ति, नान्वितमभिदधतीत्युक्ते । किमुच्यते पदानि वाक्यार्थं तथोत्पादयन्ति यथा मृदादयो घटमिति ? न ज्ञापकत्वात् पदानां न कारकत्वम् । तर्हि किमिदं पदानां सहत्यकारितेति ? पदानि समुदितान्यन्वितमर्थं प्रत्याययन्ति, नान्वितमभिदधति । नाभिधाशक्तिरन्वयमभिदधाति, अपि तु तात्पर्यशक्तिः पदार्थानामन्वयबोधिका निराकाङ्क्षप्रत्ययोत्पादनसमर्था । तथा हि—

> अन्यथैव प्रवर्तन्ते प्रत्यक्षाद्युद्भवा धियः ।
> अर्थं पूर्णमपूर्णं वा दर्शयन्त्यः पुरः स्थितम् ॥
> अन्यथैव मतिः शब्दे विषयेषु विजृम्भते ।
> प्रतिपत्तुरनाकाङ्क्षप्रत्ययोत्पादनावधिः ॥
> अत एव पदं लोके केवलं न प्रयुज्यते ।
> नहि तेन निराकाङ्क्षा श्रोतुराधीयते मतिः[५] ॥ इति ।

---

१. व्युत्पत्तिवादे शब्दखण्डे ।
२. न्यायमञ्जरी ( गौतमसूत्रस्य तात्पर्यविवृतिरूपा ) ३७० पृष्ठत ३७२ पृष्ठं यावत् । तात्पर्यशक्त्याऽन्वितप्रतीतिरिति प्रघट्टके ।
३ शक्तिवादे गदाधर, पृ० ८ ।
४ न्या० म० ।
५. न्यायमञ्जरी ।

अभिधातिरिक्तोऽय तात्पर्यात्मा व्यापारः सर्वै. संसर्गवादिभिरप्रत्याख्येया ससर्गश्च वाक्यात् प्रतीयते, न चाभिधीयते ।

न च ससृष्टाभिधाने सति ससर्ग प्रतीयते नान्यथेति वाच्यम्, सहत्यकारित्वादेव ससर्गा-वगतिसिद्धे । नहि सहत्यकरणमससृष्ट च कार्य क्वचिद् दृश्यते । अपि च प्रकृतिप्रत्ययौ परस्परा-पेक्षमर्थमभिदधाते, न च प्रकृत्या प्रत्ययार्थोऽभिधीयते, नियोगस्य धातुवाच्यत्वात् । न च प्रत्ययेन प्रकृत्यर्थोऽभिधीयते, यागादेर्लिङ्वाच्यत्वानुपपत्ते , न च तौ पृथक् पृथक् स्वकार्य कुरुतः । एव पदान्यपि परस्परापेक्षीणि सहत्य कार्य करिष्यन्ति, न च परस्परमर्थमभिधास्यन्ति । वाक्यान्यपि प्रकरणपातीन्येवमेव । तदुक्तम्——

प्रकृतिप्रत्ययौ यद्वदपेक्षेते परस्परम् ।
पद पदान्तर तद्वद् वाक्य वाक्यान्तर तथा[1] ॥इति ।

अयमेव पक्ष श्रेयान् यत् सहत्यकारित्व पदानामसङ्कीर्णार्थत्व च । अन्यथाऽन्विता-भिधानवादिमते 'गामानय'इति वाक्यघटकस्य गामिति पदस्यानयनान्वितस्वार्थबोधकत्वम्, आनयनपदस्य च गवान्वितानयनबोधकत्वम् । एवञ्च गामिति पदस्यैव गोकर्मकमाहरणमित्यर्थ-स्वीकारे, आनयनपद व्यर्थ स्यात् । पदाना सहत्यकारितापक्षे तु नाय दोष , यतो हि पदानि समुदितान्वितमर्थ प्रत्याययन्ति, नान्वितमभिदधति । तद्यथा——

निरपेक्षप्रयोगेऽय शलाकाकल्पना भवेत् ।
तदन्विताभिधाने तु पदान्तरमनर्थकम् ॥
सहत्यकारिपक्षे तु दोषो नैकोऽपि युज्यते ।
तेनाऽयमुपगन्तव्यो मार्गो हि हतकण्टक ॥ इति ॥

अत·——

अभिधात्री मता शक्ति पदाना स्वार्थनिष्ठता ।
तेषा तात्पर्यशक्तिस्तु ससर्गावगमावधि ॥
तेनाऽन्विताभिधान हि नास्माभिरिह मृष्यते ।
अन्वितप्रतिपत्तिस्तु बाढमभ्युपगम्यते[2] ॥ इति ।

पदाना न स्वार्थाभिधित्सयैव समुच्चारणम्, अपि तु प्रधान कार्यमेव कर्तुम् । तदुक्त श्लोकवार्त्तिके वाक्याधिकरणे भट्टपादै ——

वाक्यार्थमितये तेषा प्रवृत्तौ नान्तरीयकम् ।
पाके ज्वालेव काष्ठाना पदार्थप्रतिपादनम् ॥ ३४३ ॥ इति ।

इत्थं गौतमसूत्रतात्पर्यविवृतिरूपन्यायमञ्जरीकर्तुः श्रीजयन्तभट्टस्य मते तात्पर्यवृत्ति सिद्धा, प्रमाणयति च स्वमत तन्त्रवार्त्तिकेन——

---

१. न्यायमञ्जरी ।
२. तत्रैव ।

पदात् प्रभृति या चैषा प्रज्ञाज्ञातुर्विजृम्भते ।

पुष्पिता सा पदार्थेषु वाक्यार्थेषु फलिष्यति ॥ इति ।

(त० वा० अ० १, पा० ३, सू० ३०)

आलङ्कारिकशिरोमणिर्ध्वनिसम्प्रदायप्रवर्तक आनन्दवर्धनाचार्यो मुख्यतया व्यञ्जनामेव निखिलविप्रतिपत्तिनिरासपूर्वकं साधयति, तथाप्येकत्र ध्वन्यालोके ( तृतीय उद्योते ४९२ पृष्ठे ) अप्रस्तुतप्रशसाया वाच्यस्य क्वचिद् विवक्षितत्वम्, क्वचिदविवक्षितत्वम्, क्वचिदुभयमिति त्रिविधा बन्धच्छायामुपपाद्य वाच्यस्याविविक्षितत्वे—"कस्त्व भो कथयामि दैवहतक मा विद्धि शाखोटकम्" इत्यादि पद्यमुदाहृत्याह—नहि वृक्षविशेषेण सहोक्तिप्रत्युक्ती सम्भवत इत्यविवक्षिताभिधेयेनैवानेन श्लोकेन समृद्धासत्पुरुषसमीपवर्तिनो निर्धनस्य कस्यचिन्मनस्विन परिदेवित तात्पर्येण वाक्यार्थीकृतमिति प्रतीयत इति । तेन वाक्यार्थस्तात्पर्यार्थ इति सिद्धम् ।

आलङ्कारिकेषु सहृदयजनमन.प्रकाशमानस्य ध्वनेरालोकमुख.नुभवाय लोकलोचननियोजननिपुणा अभिनवगुप्तपादाचार्या· स्वोपज्ञे लोचने वाच्यव्यङ्ग्ययो स्वरूपभेदमुपपादयन्तः "भ्रम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण" इत्यादौ वाच्योऽर्थो विधिरूप, व्यङ्ग्योऽर्थो निषेधरूप इति भ्रम मा भ्रमीरिति विधिनिषेधरूपयोरर्थयोरेकदाऽभिधेयता भवितु नार्हति, घटतदभावयोरिव तयोर्विरोधात् । विरुद्धयोस्तयोर्युगपद् बुद्धिपथानारोहितत्वात् । नापि क्रमेण वाच्यता, अभिधाया विधिरूपार्थं बोधयित्वा विरामात् पुनर्निषेधरूपार्थबोधने व्यापाराभावादित्याद्यभिधाय सशेरते—ननु यत्र तात्पर्य तद्धि वाक्यार्थ, तात्पर्यविषयश्चात्र भ्रमणनिषेध, अतस्तस्यैव विवक्षितत्वाद् भ्रमणविधौ पर्यवसानमनाप्नुवती पदनिष्ठा विवक्षितार्थप्रतीतिजननसामर्थ्यरूपतात्पर्यात्मिका शक्तिर्वाक्यार्थीभूतस्य निषेधस्य प्रतीति विपरीतलक्षणया करोति, तन्न वाच्याद् भिन्नोऽर्थ इति । तत सिद्धान्तयासु[1]—नैतद् युक्तम्, लोके हि शब्दस्याभिधा-तात्पर्य-लक्षणारूपास्त्रयो व्यापारा सवेद्यन्ते । गोत्वादिसामान्यरूपेषु पदार्थेषु गवादिपदानामभिधाव्यापार । अभिधा च सङ्केतग्रहसहकारेणार्थावगमशक्ति । सङ्केतश्च जातावेव, न व्यक्तौ, व्यक्तीनामानन्त्याद् व्यभिचाराच्च । तत आकाङ्क्षादिवशाद् गुणप्रधानभावेन मिथ.सम्बद्धे विशेषरूपे वाक्यार्थे तात्पर्यशक्ति । मुख्यार्थबाधादिसहकार्यपेक्षार्थप्रतिभासनशक्तिर्लक्षणा शक्ति. । तत्राभिधाशक्तिर्मुख्यार्थं बोधयित्वापक्षीणा । द्वितीया (तात्पर्यशक्ति·) च पदार्थाना मिथोऽन्वय बोधयित्वोपक्षीणा । मुख्यार्थबाधाद्यभावेन तृतीयशक्तेर्लक्षणाया अत्रावसर एव नास्तीत्यतश्चतुर्थव्यापारो ध्वननात्मा ( तच्छक्तित्रयोपजनितार्थावगममूलजाततत्प्रतिभासपवित्रितप्रतिपत्तृप्रतिभासहायाऽर्थद्योतनशक्तिर्ध्वननव्यापार ) अनपलपनीय[2] एवेति ।

इत्थमिमे तात्पर्यशक्ति विना वाक्यार्थबोधाभावमाहु तद्यथा——तदन्यथानुपपत्तिसहायार्थावबोधनशक्तिस्तात्पर्यशक्तिरिति । ( तदन्यथा = तस्यास्तात्पर्यशक्तेरन्यथा = प्रकारान्तरेण,

---

१. ध्वन्यालोके लोचने प्रथमोद्योते भ्रम० इत्यादिपद्यव्याख्यानावसरे पृ० ५६ ।

२ ध्वन्यालोकलोचने प्रथमोद्योते वाच्यव्यङ्ग्ययो. स्वरूपभेदप्रतिपादनावसरे क्वचिद् वाच्ये विधिरूपे प्रतिषेधरूप, यथा भ्रम धा० इत्युदाहरणव्याख्याया लोचने ।

अभावादित्यर्थ । अनुपपत्ति = वाक्यार्थबोधाभाव एव सहाय कारणं यस्या सा तदन्यथानुपपत्ति-सहायेति तद्व्याख्यातार । तात्पर्यशक्ति = स वाक्यार्थ पर प्रधानतया प्रतिपाद्य येषा तानि तत्पराणि तेषा भावस्तात्पर्यं तद्रूपा शक्तिस्तात्पर्यशक्तिरिति ) तात्पर्यवृत्तिविषये व्यञ्जना-निरासनकृतप्रयत्नयोर्धनिकयोर्धनिकधनञ्जययोर्मतं बहुविवेच्यत्वादग्रे निरूपयिष्याम ।

वाग्देवतावताराणा साहितीसुधामुहिताना काव्यकलालोचनकुशलानामाकरग्रन्थनिर्माणो-द्भटाना श्रीमम्मटाचार्याणामत्रोक्तय स्तु प्रथममेवावतरणिकायामुपात्ता , तासामत्राभिमतिर्विमति-र्वेत्यग्रे तद्ग्रन्थस्वारस्येनोद्भावयिष्याम ।

चतुर्दशभाषावारविलासिनीभुजङ्गकुलक्रमादागतवैदुष्यमरणिसनाथो विश्वनाथोऽपि साहित्यदर्पणे द्वितीयपरिच्छेद आह—

तात्पर्याख्या वृत्तिमाहु पदार्थान्वियबोधने ।
तदर्थं तात्पर्यार्थं वाक्य तद्बोधक परे ॥[1] इति ।

तदयमभिप्रायो यत् पदानामभिधैकैक पदार्थं बोधयित्वोपक्षीणा, अतो वाक्यार्थस्य ( पदार्थाना मिथोऽन्वयरूपस्य ) बोधिका तात्पर्यवृत्ति । अनया वृत्त्या बोधितोऽर्थस्तात्पर्यार्थ , तद्बोधक च वाक्यमित्यभिहितान्वयवादिन आहु ।

प्रदीपकारो गोविन्दठक्कुरश्च[2]—तात्पर्यार्थोऽपि केषुचिदिति सूत्रघटकस्य "केषुचिदिति पदस्य न्यायादिनयेषु, न तु मीमासकादिषु" इति व्याख्यामाचचक्षे । अथ चान्वयाशो गौरवात् पदशक्ति निषिध्यान्वयाशस्तात्पर्यार्थ इति स्वोचक्रे । नागेशश्चोद्योते[3] न्यायादिनयेष्विविपद-घटकादिपदेन भाट्टमीमासकाना ग्रहणमित्याह । तात्पयार्थ इति प्रतीकमादाय "आकाङ्क्षादि-वशाद्भासमानस्य हि तात्पर्यार्थत्वेन व्यवहार, तस्यापि पदतात्पर्यविषयत्वात्" इत्युक्त्वा स्वोक्तौ भट्टपादसम्मति दर्शयन्नुदाजहार—"न विमुञ्चन्ति सामर्थ्यम्" इत्यादि ।

काव्यप्रकाशविवरणे[4] च—घटं करोतीत्यनेन घटवृत्तिकर्मत्वानुकूला कृतिरित्यर्थो बोध्यते, तत्र घटशब्दस्य घटोऽर्थ , अम्प्रत्ययस्य च कर्मता, वृत्तिता न कस्यापि पदस्यार्थ इत्यपदार्थोऽपि वृत्तितातात्पर्यवशाद् अनयो ससर्गविधया भासत इति स्पष्टम् ।

वामन्या च—तात्पर्यार्थ इत्यस्य विवरण तात्पर्याख्यवृत्तिप्रतिपाद्य इत्युक्तम्[5] ।

महामहोपाध्यायगोकुलनाथशास्त्री च "तात्पर्यार्थोऽपि" इत्यादिमम्मटसूत्र व्याचक्षाणः 'केषुचित्' इत्यस्य न्यायवैशेषिकभाट्टशास्त्रेष्विति व्याचख्यौ । वाक्यार्थत्वं तु—घटेनेत्याद्यानु-पूर्वीविशेषाद्यवच्छेदेन गृह्यमाणा या वृत्ति , तज्जन्यशाब्दबुद्धिविषयत्वम्—इत्युदीर्य का सा वृत्तिरिति जिज्ञासाया तात्पर्याख्यावृत्तिरित्याह[6] ।

१. सा० द० द्वि० प०, कारिका २० ।
२. का० प्र० प्रदीपे द्वितीयोल्लासे तात्पर्यार्थोऽपोति सूत्रे ।
३. तत्रैव ।
४ का० प्र० द्वि० उ० ७ सूत्रे टीकायाम् ।
५. तत्रैव ।
६. तत्रैव ।

धनिको धनञ्जयश्च न केवल वाक्यार्थावगतये तात्पर्याख्या शक्ति स्वीचक्रतु, अपि तु सहृदयमनोमन्दिरेऽनश्वरी प्रतिष्ठामाप्तस्य ध्वनिसम्प्रदायप्रवर्तकस्यानन्दवर्धनाचार्यस्य सिद्धान्तभूता रसादिव्यङ्ग्यार्थाभिव्यञ्जिका व्यञ्जनामञ्जसा निरसनायापि तात्पर्यशक्तिमुपाददाते ।

तावेव निगदतो यत्—आकाङ्क्षायोग्यतासन्निधिविशिष्टे पदकदम्बात्मके वाक्ये प्रायो द्विधा पदान्युपलभ्यन्ते । कारकपद क्रियापद चाअत एव सिद्धसाध्यपदाभ्यामभिधीयेते । वाक्यस्य तदेव विधेय यन्न पूर्वतो निष्पन्नम्, अपि तु निष्पाद्यम्, अर्थात् साध्य तच्च क्रियारूपम् । अतो वाक्य-प्रामाण्याय प्रतिवाक्यं क्रियापदमावश्यकम् । तत् क्रियापद क्वचिच्छब्दत उपात्तम् । यथा 'गाम-भ्याज' इत्यादौ, क्वचिच्च प्रकरणादिवशाद् बुद्धो सन्निहित भवति । यथा–'द्वार द्वारम्' इत्यादौ । उभयत्र कारकोपचिता क्रियव वाक्यार्थ । एव काव्येष्वपि क्वचिद् रत्यादि स्थायिभाव शब्दत उपात्त. । यथा–"प्रीत्यै नवोढा प्रिया" इत्यादौ । क्वचिच्च यद्विश्रभ्येत्यादौ प्रकरणादि-वशान्नियताभिहितविभावाद्यविनाभावाद् वा साक्षात् सहृदयहृदये विपरिवर्तमान इत्यादि स्थायी तत्तच्छब्दप्रतिपाद्यैः स्वस्वविभावानुभावादिभि सस्कारपरम्परया परा प्रौढिमानीयमानो रत्यादिर्वाक्यार्थ एव, न तु कपोलकल्पितया व्यञ्जनया साध्य इति । तद्यथा—

वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया ।
वाक्यार्थ कारकैर्युक्ता स्थायीभावस्तथेतरै[1] ॥

न च पदार्थ एव परस्परान्वित सन् वाक्यार्थो भवति । 'द्वार द्वारम्' इत्यादौ साकाङ्क्षतया प्रकरणादिवशात् 'पिधेहि, उद्घाटय' इति वाऽध्याहृता क्रिया कारकोपचिता वाक्यार्थोभवतु नाम । इह तु 'भ्रम धार्मिक विश्वस्त ' इत्यत्र श्रुतान्वयेन निराकाङ्क्षतया कारकोपचिता भ्रमण-क्रियैव (विधिरूपा) वाक्यार्थ स्यात्, न तु निषेधरूपा मा भ्रमीरिति नञर्थस्यापदार्थत्वात् । एवम-पदार्थस्य रसादेरपि वाक्यार्थत्व न स्यात्, तद्वाचकपदाभावात् । निराकाङ्क्षतयाऽध्याहारा-भावाच्चेति चेन्न, कार्यपर्यवसायित्वात् तात्पर्यशक्ते. । वक्त्रभीष्टकार्यप्रत्यायनपर्यन्त तात्पर्यशक्तेः सामर्थ्यस्वीकारात् । यदि भ्रम धार्मिकेत्यत्र वक्तुर्भ्रमणनिषेधरूपोऽर्थो बोधयितुमिष्टः, तदा तद्बोधानन्तरमेव तात्पर्यशक्तेर्विश्रामात् ।

अपि च पौरुषेयमपौरुषेय वा सर्वं वाक्यं कार्यपरमेव । कार्यपरत्वाभावे वाक्यमुन्मत्त-प्रलापवन्निरर्थक स्यात्, तद्यथा—"यद् यदुपादेयवाक्य तत्तत् कार्यतत्परम् । यथा घटमानयेति लौकिक वाक्य जलाहरणरूपकार्यतत्परम् ।" यथा वा "विश्वजिता यजेत" इति वैदिकं वाक्य स्वर्गप्राप्तिरूपकार्यतत्परम् इत्यन्वयव्याप्त्या तथा च यद् यन्न कार्यतत्परं तत्तन्नोपादेयवाक्यम्, यथोन्मत्तादिवाक्यमिति व्यतिरेकव्याप्त्या च काव्यवाक्यस्यापि कार्यपरतऽवसीयते । तदित्थम्, काव्य कार्यतत्परम्, उपादेयवाक्यत्वात् । ( अत्र काव्यत्वावच्छिन्नावच्छेदेन साध्यसिद्धिरभिमता, न तु काव्यत्वसामानाधिकरण्येनेति न व्यभिचार· ) । एव काव्यशब्दाना किञ्चित् प्रयोजनमवश्य-मनुसधेयम्, तच्च निरतिशयसुखास्वादातिरिक्तप्रयोजनान्तरानुपलब्धेः स्वानन्दोद्भूतिरेव प्रयोजन-तया निश्चीयते । आनन्दोद्भूतिश्च काव्यशब्दोपात्तविभावादिससृष्टरत्यादेरेव जायते, अतः काव्य-

---

१. दशरूपके चतुर्थप्रकाशे का० ३७ ।

शब्दस्याभिधाशक्तिर्विभावादिरूपपदार्थप्रतिपादनपरा तात्पर्यशक्तिश्च तत्समुद्रत्यादि (रस)-रूपवाक्यार्थबोधनपरा, रसेनाकृष्यमाणा रसप्रतीतिं जनयतीति ।[1]

न च यथा गीतादिशब्दश्रवणाद् श्रोतुः सुखं जायते, परं गीतादिशब्दा न तत्सुखस्य वाचकास्तथैव काव्यशब्दादपि रसाभिव्यक्तिः सहृदयानां जायते, परं काव्यशब्दा न रसादेर्वाचकाः सन्तीति वाच्यम् । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । गीतशब्दाः श्रोतॄनर्थानुसन्धानमन्तरापि सुखयन्ति, काव्यशब्दास्तु न तथा । विशिष्टविभावादिविदुषामेवानन्दानुभूतिस्वीकारात् । अतो विभावादिज्ञानार्थं परिकल्पिताभिधातात्पर्यशक्तिवशेनैव वाक्यार्थीभूतरसादेरपि प्रतीतेर्व्यञ्जनाकल्पनप्रयासस्य वैयर्थ्यात् ।

न च यत्राश्रूयमाणस्य पदस्यार्थे वक्तुस्तात्पर्यं तत्रान्योक्तिरूपिणि वाक्ये कथं व्यङ्ग्यार्थस्य तात्पर्यशक्त्यैव वाक्यार्थीभावो यथा—"कस्त्वं भो कथयामि दैवहतकं मां विद्धि शाखोटकम्" इत्यत्र जडस्य शाखोटस्य निर्वेदः प्रतीयते, परं शाखोटस्य निर्वेदे तात्पर्यं न सम्भवति जडत्वात्तस्य । अतो यत्र स्वार्थे विश्रान्तं वाक्यमर्थान्तरमाश्रयते तत्र ध्वनिरेव यथा—भ्रम धार्मिक विश्वस्त इत्यत्र भ्रमणविधिरूपे स्वार्थे विश्रान्तं वाक्यं भ्रमणनिषेधरूपमर्थं प्रत्याययति, तत्र तात्पर्यशक्तेर्विधिरूपमर्थं बोधयित्वा विरतायाः निषेधरूपार्थबोधने पुनरुत्थानाभावाद् व्यञ्जनाऽकामेनाऽपि त्वया स्वीकर्तव्येति वाच्यम् । यावत् कार्यप्रसारित्वात्तात्पर्यस्य तुलाधृतत्वाभावात् । वक्तृविवक्षितार्थप्रत्यायनपर्यन्तं तात्पर्यशक्तेः सामर्थ्यात् । पौरुषेयस्य वाक्यस्य विवक्षापरतन्त्रत्वात्तदुक्तं धनिकेन काव्यनिर्णये, दशरूपके चोद्धृतम्—

> एतावत्येव विश्रान्तिस्तात्पर्यस्येति किं कृतम् ।
> यावत्कार्यप्रसारित्वात् तात्पर्यं न तुलाधृतम् ॥
> पौरुषेयस्य वाक्यस्य विवक्षापरतन्त्रता ।
> वक्त्रभिप्रेततात्पर्यमतः काव्यस्य युज्यते[2] ॥ इति ।

परञ्च रसादिरूपार्थबोधनाय यत्तात्पर्यं धनिकः स्वीकरोति तत्तात्पर्यं वाक्यनिष्ठाभिधैवेति तदुक्तितोऽवसीयते यत्तेनैवोक्तम्—"अतो वाक्यस्याभिधानशक्तिस्तेन रसेनाकृष्यमाणा तत्तत्स्वार्थापेक्षितावान्तरविभावादिप्रतिपादनद्वारा स्वपर्यवसायितामानीयते[3]" इति । परञ्चायं सिद्धान्तो न सर्वथा स्वोपज्ञोऽपि तु लोचने व्यङ्ग्यार्थबोधाय पूर्वपक्षतयोपन्यस्तां तात्पर्यशक्तिं हृदिस्थां विधाय मीमांसकानां भट्टलोल्लटादीनां च "सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः" "यत्परः शब्दः स शब्दार्थः" इति च सिद्धान्तद्वयमुररीकृत्यैतत् सर्वं प्रपञ्चितमिति विदितचरमेव विपश्चिताम् ।

काव्यप्रकाशकर्तॄणां श्रीमम्मटभट्टानां मते "तात्पर्यार्थोऽपि केषुचित्" इति सूत्रे केषुचिदिति पदोपादानाद् वैयाकरणत्वेन च तेषां यद्यपि तात्पर्यवृत्तिर्न प्रतीयते, तथापि "केषुचित्" "अभिहि-

---

१. तत्रैवावलोके न चापदार्थस्य वाक्यार्थत्वं नास्तीत्यादि ।
२. दशरूपके चतुर्थप्रकाशे ३७ कारिकाऽवलोके ४ चतुर्थसप्तमश्लोकौ ।
३. तत्रैव ।

तान्वयवादिनाम्" इत्यत्र च बहुवचनेन तत्र तेषामादरोऽभिमतिश्च लक्ष्यत इति साम्प्रदायिका व्यवहरन्ति ।

न च तत्र तत्सम्मतिस्वीकारे "मातर्गृहोपकरणम्"इत्यत्र वाक्यार्थस्य व्यञ्जकत्वात्तस्य च तात्पर्यार्थत्वेन वाच्यार्थस्य व्यञ्जकत्वे तदुदाहरणप्रदर्शनमनुपपन्नं स्यादिति वाच्यम्, पदार्थ-संसर्गरूपस्य वाक्यार्थस्य व्यञ्जकत्वे सम्बन्धिनः पदार्थस्यापि व्यञ्जकत्वात् सम्बन्धिनोऽभावे सम्बन्धस्याप्यभावादिति न्यायात् । वैयाकरणमतानुसारेण वाक्यार्थस्य वाच्यत्वाच्च ।

अत एव "विशेषाः स्युस्तु लक्षिते[1]" इति सूत्रे तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधा-तात्पर्य-लक्षणाभ्यो व्यापारान्तरेण गम्या इति, पञ्चमोल्लासे चाभिधालक्षणाभ्यां व्यञ्जनाया भेदमुपपादयताम् अभिधा-तात्पर्य-लक्षणात्मकव्यापारत्रयातिवर्ती ध्वननादिपर्यायो व्यापारोऽन-पह्नवनीय एवेत्युक्तिश्च सङ्गच्छेते ।

साहित्यदर्पणकारोऽप्यत्र प्रकाशानुयायी लक्ष्यते यतो हि "वृत्तीनां विश्रान्तेरभिधातात्पर्य-लक्षणाख्यानाम्"[2] इति प्रतिपादयति । वस्तुतो लोचनप्रकाशाभ्यां विना दर्पणस्य व्यर्थत्वाल्-लोचनप्रकाशावेवात्र प्रायेण प्रतिबिम्बिताविति ।

निष्कर्षः—एवं पूर्वोदीरितग्रन्थपर्यालोचनयाऽवगम्यते यत् प्राचीननैयायिकजयन्तभट्टा-दयस्तात्पर्यवृत्तिमन्वितार्थप्रतिपत्तयेऽङ्गीकुर्वन्ति । ततोऽन्येऽपि वाक्यार्थविचारकुशलता यथा-कथञ्चित् स्वीकुर्वन्त्येव । तद्यथाऽन्विताभिधानवादिमीमांसकैकदेशिभिर्भट्टलोल्लटप्रभृतिभिरुदाहृत "यत्परः शब्दः स शब्दार्थः" इत्ययं न्यायस्तात्पर्यार्थो वाक्यार्थ इति प्रतिपादयति । तस्येदं तात्पर्यं यत्—उपात्तशब्दप्रतिपाद्येष्वर्थेषु यदंशे विधेयत्वं तत्र वाक्यतात्पर्यं यत्र तात्पर्यं स शब्दार्थ इति सिद्धं वाक्यार्थस्तात्पर्यार्थ इति । अपि च 'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते' उपात्तस्यैव शब्दस्यार्थे तात्पर्यमित्यादिन्यायाश्चैतन्मूलकत्वादेव सङ्गच्छन्ते । अत एव वाचस्पतिमिश्रस्तत्त्व-बिन्दावन्विताभिधानवादिमतेऽभिधायकानां पदानां तात्पर्यवृत्त्या वाक्यार्थप्रत्यायने पर्यवसानम्[3] इति निजगाद ।

अभिहितान्वयवादिनो मीमांसकाः प्रायस्तात्पर्यवृत्तिं स्वीकुर्वन्त्येव यतो हि भट्टपाद-कारिकैव तात्पर्ये मूलतयोपन्यस्ता जयन्तभट्टेन न्यायमञ्जर्याम्—"वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्"इति । एवं पुष्पिता सा पदार्थेषु वाक्यार्थेषु फलिष्यतीति तन्त्रवार्त्तिके च प्रमाणतयो-द्धार । अन्येऽपि भाट्टमतानुयायिन आचार्यखण्डदेव-वाचस्पति-पार्थसारथि-भट्टसोमेश्वरप्रभृतय-स्तात्पर्यवृत्तिं स्पष्टतया स्वीकुर्वन्ति । अन्यथा पदार्थस्य लक्षकतया लक्ष्यस्य वाक्यार्थस्य शाब्दत्वं न स्यादिति । आचार्यखण्डदेवश्च भाट्टदीपिकायां वाक्यार्थज्ञानं संकेतग्रहसापेक्षम्, वक्त्रिच्छाघटित-तात्पर्यज्ञानसापेक्षं चेति जगाद । तात्पर्यज्ञाने वक्तृपुरुषसम्बन्धाद् वक्तरि च भ्रमप्रमादसम्भवाद् विधिवाक्यानामप्रामाण्यनिरासायाह तात्पर्यं च शब्दगतधर्मविशेषः । तद्ग्राहकश्चाध्ययनादिरिति । वाञ्छेश्वरयज्वा भाट्टचिन्तामणौ ( तट्टीकायाम् ) वाच्यस्य वाक्यार्थे तात्पर्यवृत्तिं परेषां मते स्वीचक्रे ।

---

१. का० प्र० द्वि० उ० १८ सूत्रे ।
२. सा० द० पञ्चमपरि० का० १ ।
३. तत्त्वबिन्दौ २२ पृ० ।

न्यायरत्नमालाया पार्थसारथि "ये तात्पर्याभिधातृत्वे" इति न्यायरत्नाकरे च साक्षाद्यद्यपि कुर्वन्तीत्यादिश्लोकवार्तिकव्याख्याया वाक्यार्थावगतौ तात्पर्यवृत्तिमुपपादयाञ्चक्रे ।

भट्टसोमेश्वरश्च कृदन्तस्थलेऽवाच्याया भावनाया शाब्दत्व तात्पर्यवृत्त्यैव प्रतिपादयामास । इत्थ प्रायोऽभिहितान्वयवादिनो भाट्टमीमासका अन्विताभिधानवाद्येकदेशिनो मीमासका भट्टलोल्लटप्रभृतयो वाक्यार्थस्तात्पर्यार्थ इति मन्वते । धर्मराजाध्वरीन्द्रो वेदान्ती तु शब्दज्ञानजनक तात्पर्यमभ्युपैति ।

बौद्धाश्च वाक्य विवक्षितार्थसूचक वदन्तीति राजशेखरीयमीमासातोऽवसीयते । आलङ्कारिकाश्च प्राय सर्वेऽभिहितान्वयवादिनस्तेषु कियन्त स्वीकुर्वन्ति । अत एव स्वच्छन्दोच्छलदच्छेति पद्यात् कविनिष्ठगङ्गाविषयकरतिभावध्वने. प्रतीतो सत्यामपि तत्र कवितात्पर्याभावादव्यङ्ग्यमिद पामरश्लाघ्य शब्दचित्रमधमकाव्यमित्युक्तम् ।

नव्यनैयायिकाश्च लक्षणोच्छेदभिया तात्पर्यवृत्ति नाङ्गीकुर्वन्ति । ते एव निगदन्ति यच्छाब्दबोधजनकोपस्थितिजनिका वृत्तिस्तात्पर्यं तु शाब्दबोधजनकमतो न वृत्ति । पर शाब्दबोधे तात्पर्यं कारणतया वाञ्छन्ति ।

अखण्डवाक्यस्फोटवादिनो वैयाकरणा अपि व्यवहारकाले काल्पनिक पदपदार्थविभागमनल्पतो जल्पन्तीति तेऽप्यभिहितान्वयवादिनस्तथा चाहुरर्थवत्सूत्रे भाष्ये महाभाष्यकारा यत्—"एषा पदाना सामान्ये वर्तमानाना यद्विशेषेऽवस्थान स वाक्यार्थ[1]" इति । प्रातिपदिकार्थसूत्रे च वीर. पुरुष इत्यत्र विशेष्यविशेषणभावस्याधिकस्य प्रतीत्या प्रातिपदिकार्थमात्राभावात् प्रथमा न प्राप्नोतीत्याशङ्क्य "पदाधिक्य स वाक्यार्थ."[2] इत्याहु । पर ते केवलामभिधावृत्तिमेव प्रसिद्धाप्रसिद्धार्थबोधनक्षमामङ्गीकुर्वन्ति । इत्थ वैयाकरणा नव्यनैयायिका. प्राभाकराश्च तात्पर्याख्या वृत्ति नाङ्गीकुर्वन्ति कतिपये भाट्टाश्च । अत एवेय वृत्तिरेकदेशितयोपेक्षिता प्रायो लक्ष्यते, यतो हि वैयाकरणा वेदान्तिनोऽखण्ड वाक्यमेव वाचकमखण्डोऽर्थश्च वाच्य इति सिद्धान्तयन्ति । मीमासकैकदेशिनो मुक्तशरन्यायेनाभिधावेद्य वाक्यार्थं निगदन्ति । प्राभाकराश्च वाक्यार्थं वाच्यमेव मन्वते । कतिपये भाट्टाश्च वाक्यार्थ लक्ष्य निगदन्ति किन्तु सर्वैर्नाङ्गीक्रियते ।

न च यैरप्यङ्गीक्रियते तैरपि कथ वक्त्रिच्छारूपस्य तात्पर्यस्य पदनिष्ठत्वाभावात्, नैयायिकाभिमतेच्छाशक्तितोऽभेदाच्च मीमासकमते शब्दधर्मश्चेत्तदाप्यभिधातोऽभिन्न शब्देऽभिधातिरिक्तशक्तेरभावादिति वाच्यम्, इच्छाशक्तेरपि पदनिष्ठत्वात्पर्यनुयोगस्य तुल्यत्वात्, यथा विषयतादि, सम्बन्धेन नैयायिकाभिमतेच्छाशक्ति पदे, तथैव तात्पर्यस्यापि स्वीकारात् ।

यदप्युक्तमभिधातोऽभिन्न तात्पर्यं तदपि न विषयभेदात् । वाक्यार्थप्रतिपादिकाऽभिधानशक्तिः पदार्थससर्गप्रतिपादिका च तात्पर्यशक्तिरिति ।

नैयायिका अपि वाक्ये शक्ति स्वीकुर्वन्तीति पदसमूहो वाक्यमर्थसमाप्ताविति पदलक्षणाया वाचोऽन्वाख्यान व्याकरण वाक्यलक्षणाया वाचोऽर्थलक्षणमिति न्यायभाष्याच्च प्रतीयते ।

---

१ पदार्थादन्यस्यानुपलब्धिरिति० वार्त्तिके १ अ० २ पा० २ आ० ।

२. न वा वाक्यार्थत्वादिति वार्त्तिके २ अ० ३ पा० ३ आ० ।

न च वाक्यार्थबोधाय तात्पर्यवृत्तिस्वीकारे शुकोच्चरितवाक्याद्बोधो न स्यादिति वाच्यम्, तात्पर्यस्य शब्दधर्मतयाऽभ्युपगतेरन्यथाऽपौरुषेयस्य वेदवाक्यस्याप्यर्थबोधानापत्तेः। एवं सति मीमासाया क्वापि तात्पर्यवृत्तेरुपयोगो नोपपादित इति यत् केचन निगदन्ति तद् गजनिमीलिकयैवेति।

परश्च सर्वेऽभिहितान्वयवादिनस्तात्पर्यार्थो वाक्यार्थ इति स्वीकुर्वन्ति। आकाङ्क्षादिवशाल्लभ्यस्यार्थस्य तात्पर्यार्थत्वेन व्यवहारादिति नियमात्। अत एव मम्मटाचार्य सामान्येनाभिहितान्वयवादिना मतमित्युक्तवान्। प्रदीपकारश्च न्यायादिनयेष्विति, गोकुलनाथश्च केषुचिदित्यस्य न्यायवैशेषिकभाट्टशास्त्रेष्विति व्याख्यामाहतुरिति। अन्विते पदार्थेऽभिधास्वीकारादन्विताभिधानवादिनो वाच्य एव वाक्यार्थ इति वदन्ति।

विविधाचार्याणा मते तात्पर्यस्वरूपम्—

प्राचीननैयायिकजयन्तभट्टादिमते तात्पर्यं वाक्यवृत्तिः।

भाट्टमते—वक्त्रिच्छारूप तात्पर्य न, अपि तु शब्दगत एव धर्मविशेषः। अन्यथा वेदस्यापौरुषेयत्वेन वक्तुरभावात्तदिच्छारूपतात्पर्यस्य सुतरामभावाद् वेदार्थो न स्यात्।

भाट्टचिन्तामणौ—तत्प्रतीतिमुद्दिश्योच्चरितत्वमिति।

वेदान्तिनो धर्मराजाध्वरीन्द्रप्रभृतयः—तत्प्रतीति (पदार्थससर्ग) जननयोग्यत्वे सति तदन्यमात्रप्रतीतीच्छयोच्चरितत्वम्।

नैयायिका (न्या० सि० मु०)—वक्तुरिच्छा तु तात्पर्य परिकीर्तितम्।

वैयाकरणाश्च—(परमल० म०) एतत्पद वाक्य वैतदर्थबोधायोच्चारणीयमितीश्वरेच्छा तात्पर्यम्। नानार्थस्थले लोके तात्पर्यं तु एतत्पदं वाक्य वैतदर्थप्रत्यायनाय मयोच्चार्यत इति प्रयोक्तुरिच्छारूपमिति।

इत्थ तात्पर्यस्य त्रिविध स्वरूपमनुभूयते—१ वाक्यशक्तिरूपम्, २ शब्दवृत्तिधर्मविशेषरूपम्, ३. वक्त्रिच्छारूप चेति। तृतीय पुनर्द्विविधम्, वास्तविकश्रोतृकल्पितभेदात्। तत्र "विष भक्षय मा चास्य गृहे भुङ्क्था" इत्यस्य विषभक्षणादपि दुष्टमेतद्गृहे भोजनमित्यर्थः, "कस्त्व भो कथयामि देवहतक मा विद्धि शाखोटकम्" इत्यादौ च निर्वेदरूपोऽर्थो वक्तृतात्पर्येण वाक्यार्थीकृतः। अत एव ध्वन्यालोके—अप्रस्तुतप्रशसाया वाच्यस्य क्वचिद् विवक्षितत्व क्वचिदविवक्षितत्व क्वचिदुभयमिति त्रिविधा बन्धच्छायामुपपाद्य वाच्यस्याविवक्षितत्वे कस्त्वं भोः कथयामि दैवहतकमित्यादि पद्यमुदाहृत्यात्र कस्यचिन्मनस्विन परिदेवित तात्पर्येण वाक्यार्थीकृतमिति निजगाद। श्रोतृतात्पर्याच्च "रुचिङ्कुरु" इत्यादावश्लीलेऽर्थे वक्तृतात्पर्याभावाद् या दुष्टता सा श्रोतृतात्पर्यादेव। एवं के यूय स्थल एव सम्प्रति वयमित्यादौ उत्तरयितुस्तात्पर्यं के इत्यस्य जले इत्यर्थे न वक्तुर्यतो हि उत्तरं श्रुत्वा वक्ताऽभिधत्ते प्रश्नो विशेषाश्रय इति सर्वैर्ज्ञायते। अत्र श्रोतुः शक्तिविशेषो व्यक्त्युल्लासे हेतुरित्यभिदधद् रसगङ्गाधरकारोऽप्यनुकूलः। वाक्यतात्पर्यादेव भाट्टमीमासकैर्वाक्यार्थे लक्षणा क्रियते इति तेषा तत्तन्मतप्रतिपादनावसर उद्धृततद्ग्रन्थेभ्योऽवसेयम्।

भट्टलोल्लटमुकुलभट्टधनञ्जयधनिकप्रभृतयोऽपि मीमांसकैकदेशिन एव सन्ति। श्रीभरतोक्तरससूत्रस्य भट्टलोल्लटकृतं व्याख्यान मीमासकमतेन व्याख्येति सम्प्रदायस्तस्य मीमासकत्वादेव। स यत्पर शब्दः स शब्दार्थ इति न्यायाद् वाक्यार्थस्तात्पर्यार्थ इति स्वीकरोत्येव।

धनञ्जयधनिकादयस्तु स्फुट स्वीकुर्वन्ति ।

कि तात्पर्यशक्त्या व्यञ्जना गतार्था ?

भट्टलोल्लटधनञ्जय-धनिकप्रभृतीना मीमासकैकदेशिना मते शब्दश्रवणानन्तर यावन्तोऽर्था प्रतीयन्ते तेषु सर्वेषु शब्दस्य तात्पर्यवृत्तिस्तात्पर्याकृष्टाभिधैव वा व्यापारोऽस्ति। एतदेवाभिप्रेत्य—"तात्पर्य न तुलाधृतम्" "नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते" "सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापार" "यत्पर. शब्द स शब्दार्थ:" इत्यादयो न्याया व्यवह्रियन्ते। परञ्च ध्वनिसम्प्रदायाचार्यै. स्वप्रखरप्रतिभाभि सूक्ष्माऽतिसूक्ष्मदृशा विचार्य निरणायि, यद् व्यञ्जनैव व्यङ्ग्यार्थबोधनक्षमा न तात्पर्यशक्तिर्न वाऽभिधेति। तद्यथा—यदुच्यते तात्पर्य न तुलाधृतमिति तत्र जिज्ञास्यते किमिदं तात्पर्यम्, अन्वितार्थप्रतिपत्तयेऽभिहितान्वयवादिभि स्वीकृतमन्यद्वा, आद्यस्य तु पदार्थाना संसर्ग बोधयित्वोपरमात्।

न च विभावादिससर्गस्य व्यङ्ग्यार्थस्य रसादेश्च तात्पर्यशक्त्या युगपदेव प्रतीतिर्भवेदिति चेन्न, विभावादिससर्गरसयो क्रमिकत्वाङ्गीकारात्। आशुभावितया क्रमस्यालक्ष्यत्वादलक्ष्यक्रमव्यङ्ग्यत्वव्यवहारो न तु क्रमाभावात्। यत्त्वत्र साहित्यदर्पणे विश्वनाथेनोक्त यत् "तयोर्हेतुफलाभावाङ्गीकारादिति" तन्न सम्यक्। यतो हि विभावादय कारकहेतवो ज्ञापकहेतवो वा। नाद्य, यस्मादेष विभावादिसमूहालम्बनात्मक। तस्मान्न कार्य। न द्वितीय, नाय ज्ञाप्य., स्वसत्ताया प्रतीत्यव्यभिचारत इत्यादिना तेनैव निराकृतत्वात्। अन्यच्चेत् चतुर्थी वृत्ति सिद्धा। पर नाममात्रे विवाद। यदि तत्परत्व तदर्थत्वमित्युच्यते, तदा व्यञ्जनावृत्तिवेद्येऽप्यर्थे तदर्थतानपायात् स्वीकृतमेव।

यदप्युच्यते "नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते" रसादिप्रतीति केनचिन्निमित्तेन जायते, निमित्तान्तरानुपलब्धेस्तत्र शब्द एव निमित्तम्, निमित्तत्व च वृत्ति विना शब्देऽसम्भवादभिधैव वृत्तिरत शब्दश्रवणानन्तर यावानर्थ प्रतीयते तत्र सर्वत्राभिधैवव्यापार, एवञ्च वाच्या एव रसादय इति। तत्रोच्यते—रसादिप्रतीतौ यच्छब्दस्य निमित्तत्व तत्कारकत्व न, शब्दस्य प्रकाशकत्वात्। ज्ञापकत्वञ्चेदज्ञातस्यार्थस्य ज्ञापकत्वस्वीकारेऽव्युत्पन्नस्यापि शब्दश्रवणमात्रेणार्थप्रतीतिप्रसङ्गात्। प्रत्यक्षातिरिक्तप्रमाणस्य ज्ञातस्यैव करणत्वनियमाच्च। अत. शब्दो ज्ञातस्यैव ज्ञापक इति। ज्ञातत्वञ्च सङ्केतेनैव। सङ्केतश्चान्वितमात्रे। शब्दस्यार्थनिमित्तत्व व्यापारसापेक्षमेव। अतो व्यङ्ग्यार्थबोधाय व्यञ्जनाव्यापारोऽभ्युपेयोऽन्यथा व्यङ्ग्यार्थं प्रति शब्दस्य निमित्तत्वनिश्चयात्कथ प्रतीति.। अपि च व्यङ्ग्येऽर्थे सङ्केतग्रहे सति शब्दात्तदुपस्थिति, शब्दादुपस्थितौ च सङ्केतग्रह इत्यन्योन्याश्रयदोपदूषितत्वान्नैमित्तिकानुसारेण निमित्तानि कल्प्यन्त इत्यविचारिताभिधानम्।

यच्चोक्त भट्टलोल्लटेन "सोयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापार इति यथा बलवता प्रेरित इषुरेकेनैव वेगाख्येन व्यापारेण शत्रोर्मर्मच्छेद वर्मच्छेद प्राणहरण च करोति तथैव सुकविना प्रयुक्त शब्द एकेनैवाभिधाख्येन व्यापारेण पदार्थोपस्थितिमन्वयबोध व्यङ्ग्यप्रतीतिं च जनयति इति। न चैकार्थप्रतीत्यनन्तर शब्दबुद्धिकर्मणा विरम्य व्यापाराभाव." इति नियमाच्छब्दस्य विराम इति वाच्यम्, विवक्षितार्थप्रतीत्युत्तरमेव विरामाङ्गीकारात्। तत्रोच्यते—

स दीर्घोऽभिधाव्यापार. किमेक प्रतिविषयमनेको वा। तत्र नाद्य:, वाच्याद्यर्थरूपस्य विषयस्य भिन्नत्वात्। विषयभेदे सति तत्सम्बन्धिव्यापारभेदस्याऽप्यावश्यकत्वादिति। न द्वितीय:, वाच्यलक्ष्यव्यङ्ग्याद्यर्थरूपविषयाणा सङ्केतग्रहमुख्यार्थबाधादिवक्तृबोद्धव्यवैशिष्ट्यादिसहकारिणा च भेदाद् भिन्नजातीयत्वात्। अनेकस्मिन् व्यापारे सजातीयेऽङ्गीक्रियमाणे सति "शब्दबुद्धि-कर्मणा विरम्य व्यापाराभाव इति सिद्धान्तात् पुनस्तस्याऽप्रवृत्ते। असजातीयो व्यापारश्चेत् सिद्धा व्यञ्जना। न च व्यापारस्य दीर्घत्व नाम नैकत्वमेकजातीयत्व वा, किन्तु वाक्यप्रति-पिपादयिषितचतुर्थकक्षानिविष्टार्थप्रतिपादनशैघ्र्यविशेष एव। अतो व्यङ्ग्यस्याभिधाविषयत्व-मस्त्येवेति वाच्यम्, व्यङ्ग्यार्थे सङ्केतग्रहाभावादभिधयाऽप्रतिपत्ते। अथ पदार्थ-वाक्यार्थयोर्निमित्त-नैमित्तिकभावाभ्युपगमाद् निमित्तभूतेषु पदार्थेषु सङ्केतग्रहात्तन्मात्रेणैव पृथगन्त्यवाक्यार्थविषयक-सङ्केतानपेक्षया तद्वाक्यार्थप्रतीतिरभिधया भवतीति चेद्, अहो मीमासकाना वाक्चातुर्यम्। प्रथम प्रतीतिपथमवतीर्णतश्चतुर्थकक्षानिविष्टार्थत पश्चाददगना पदार्था निमित्तभाव गच्छन्तीति नून प्रपौत्र प्रति नैमित्तिकत्व मीमासकस्य।

अथास्तु पदार्थप्रतीति पश्चात्तनी तथापि तद्विषयकसङ्केतग्रहस्य पूर्वं जातत्वात् तद्वारक पदार्थाना निमित्तत्वव्यपदेशो न विरुद्ध इति चेन्न तदनुसरणोपयोगिनोऽनुक्ते.। किं च पूर्वं पदार्थेषु सङ्केतग्रहोऽपि न घटते, अन्वितानामेव सर्वदा प्रयोगात्। अथावापोद्वापाभ्या पृथक् पृथक् पदार्थेषु सङ्केतग्रह इति चेत् सत्यम्, सङ्केत. पदार्थमात्रे एवेत्यभ्युपगमे वाक्यार्थप्रतीति. पश्चात्त-नीति निर्विवादात्।[1]

२—अपि च, शब्दश्रवणानन्तर यावानर्थो लभ्यते तावति शब्दस्याभिधैव व्यापारस्तदा ब्राह्मण पुत्रस्ते जात, चैत्र कन्या ते गर्भिणी जातेत्यादिवाक्यश्रवणानन्तर हर्षविषादादिप्रतीते-स्तयोरपि तद्वाक्यस्याभिधा स्यात्। न चानन्यलभ्यो हि शब्दार्थ इति न्यायेनात्र मुखप्रसाद-मुखमालिन्यादिलिङ्गेन लिङ्गिनोर्हर्षशोकयोरनुमानात् प्रतीतेरन्यलभ्यत्वात्तत्र नाभिधेति वाच्यम्, प्रतीतिमात्रेऽभिधाकल्पने लक्षणोच्छेदापत्ते.। न चेष्टापत्ति, स्वसिद्धान्तविरोधात्। ननु लक्षणीयेऽर्थे मुख्यार्थबाधेनाभिधाया विच्छेदान्न दीर्घतरो व्यापार इति चेत् "श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्याना समवाये पारदौर्बल्यमर्थविप्रकर्षात्" (पू० मी० ३ अ० ३ पा० १४सू०) इति जैमिनिसूत्रासङ्गते.। अय भाव —सूत्रोक्ताना श्रुत्यादीनामेकत्रोपनिपाते परस्परस्य विलम्बे-नार्थोपस्थापकतया दुर्बलत्वात् पूर्वपूर्वस्य श्रुत्यादे प्राबल्यं मीमांसकैर्निरणायि। यदि शब्दश्रुतेरनन्तरोपस्थितेषु सर्वेष्वर्थेष्वभिधैव व्यापारस्तदा सर्वेषामर्थानामभिधेयतया समकालो-पस्थितत्वादर्थविप्रकर्षादिति हेतूपादानमसङ्गत स्यात्।

३—ननु शब्दश्रुतेरनन्तरं यावतामर्थाना प्रतीतिस्तावता केवलयाऽभिधया न, अपि त्वा-काङ्क्षादिसापेक्षयेति श्रुतिलिङ्गादिसूत्रोक्ताना परस्परम्यार्थबोधे पूर्वपूर्वस्य सहकारित्वात् परपरार्थोपस्थाने विलम्बादर्थविप्रकर्षाभिधानमुचितमेवेति।

---

१ ध्व० लोचने, प्रथमोद्योते—भ्रम धार्मिकेति पद्यव्याख्याने पृ० ६४–६६ पर्यन्तम्।

२ का० प्र० ५ उल्लासे।

३ तत्रैव।

"अयमुत्पतते पत्री ततोऽत्रैव रुचिङ्करु" इत्यादीनामदोषतापत्तेस्तत्रासभ्यार्थस्याविवक्षितत्वात्। न च सन्धौ सति 'चिङ्कु'पदस्य लाटभाषाया स्त्रीगुह्याङ्ग( योन्यन्तर्वर्त्यङ्कुर )-वाचकत्वादसभ्यार्थस्मारकत्वाद् दुष्टत्व तस्येति वाच्यम्, व्यङ्ग्यार्थस्याभिधेयताया च्युतसस्कृत्यादीना नित्यदोषत्व श्रुतिकट्वादीनामनित्यदोषत्वमिति व्यवस्थानापत्ते। न चेष्टापत्ति, सर्वेषा व्यवस्थितत्वेन प्रतिभासात्। व्यञ्जनास्वीकारे व्यङ्ग्यार्थस्यानेकविधत्वाद् श्रुतिकट्वादीना शृङ्गारे हेयत्वेऽपि वीररौद्रादावानुकूल्येनानित्यत्वमसाधुत्वादीना सर्वत्र त्याज्यत्वान्नित्यत्वमिति व्यवस्थिते। न चाभिधाबोध्येऽपि शृङ्गारादौ प्रातिकूल्येन वीरादावानुकूल्येन नित्यानित्यव्यवस्था युज्यत एवेति चेन्न। रसादिप्रतीतेरभिधाबोध्यत्वाभावात्।

अपि च "द्वय गत सम्प्रति शोचनीयता समागमप्रार्थनया कपालिन" इत्यत्र कपालिन इति पदस्यानुगुण्य न पिनाकिन इत्यत्र द्वाभ्यामपि पदाभ्या शिवस्यैव वाच्यत्वाद्विनिगमकाभाव. प्रसज्येत। न च तत्र यौगिककार्यप्रतीतिर्विनिगमिकेति वाच्यम्, योगरूढिस्थले रूढेर्योगापहारकत्वात्। न च प्रकरणाद्यभाव एव रूढेर्योगापहारकत्वनियमोऽत्र प्रीतिपरीक्षणे वटुकृतशिवनिन्दाया प्रकृतत्वादिति चेन्न, वाच्यार्थस्य सर्वान् प्रतिपत्तॄन् प्रति नियतत्वाद् व्यङ्ग्यार्थस्य च प्रकरणवक्त्रादिसहकारेणानेकरूपत्वादनियतत्वाच्च।[1] तदुक्त दर्पणे—

"बोद्धृस्वरूपसङ्ख्यानिमित्तकार्यप्रतीतिकालानाम्। आश्रयविषयादीना भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्य"।[2] इति।

यदप्युच्यते[3]—यत्पर शब्द स शब्दार्थ इति न्यायाद् व्यङ्ग्यार्थो वाच्य एवेति तदप्यापातरमणीयम्, यतो हि मीमासकैरस्य न्यायस्यार्थ स्वयमेव निरणायि यत्—उपात्तशब्दोपस्थापितेष्वर्थेषु यदशे विधेयत्व तदशे वाक्यतात्पर्यम्, यत्र तात्पर्य स शब्दार्थस्तदश एव शब्दस्याज्ञातज्ञापकत्वरूपप्रामाण्यमिति। न तु यत्तात्पर्यकतया शब्द प्रयुज्यते स शब्दार्थ इति। एव सति तात्पर्यस्यानियतत्वाद् शक्तेरप्यनियतत्वापत्ते। न च विधेयत्व प्रवर्तनारूपविधिविषयत्वम्, तच्च क्रियाया एव न द्रव्यादेरिति दध्ना जुहोतीत्यादौ दध्यशेऽप्रामाण्यापत्तिरिति वाच्यम्, कारकक्रिययोः समभिव्याहारे कारकपदार्था. प्रधानक्रियासम्पादकस्वक्रियासम्बद्धा साध्या इव भवन्तीत्यर्थकाद् 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति न्यायाद् दध्ना जुहोतीत्यादौ प्रधानक्रिया होमस्तदनुकूला दधिक्रिया पूर्वदेशसयोगध्वसहेतुविभागजनिकास्पन्दक्रिया तत्सम्बन्धाद् दध्यादेरपि साध्यत्वेन विधेयत्वात्। नन्वेवमपि प्रधानाया हवनक्रियाया एव विधेयता स्यादिति चेन्न, यथा तृणमिश्रितभस्मराशावग्निरदग्धमेव तृण दहति न तु दग्ध भस्म, तथैव साध्यान्वितसिद्धेषु साध्यमेव विधीयते। अप्राप्ते शास्त्रमर्थवदिति न्यायाद् यावदप्राप्त तावदेव शब्देन विधीयतेऽशान्तरे तु केवलमनूद्यते। यथा ऋत्विक् प्रचरणे ज्योतिष्टोमविकृतश्येनयागप्रकरणस्थवाक्ये "लोहितोष्णीषा ऋत्विज प्रचरन्ति" इत्यत्र लोहितोष्णीषत्वमात्र विधेयम्, "सोष्णीषा विनीत-

---

१. का० प्र० पञ्चमोल्लासे।

२. सा० द० पञ्चमपरि०।

३ का० प्र० पञ्चमोल्लास उद्धृतम्।

वसना ऋत्विज प्रचरन्ति" इति वाक्यादुष्णीषस्यापि प्राप्तत्वाद् लौहित्यमात्र विधेयम्, एवं दध्ना जुहोतीत्यादौ अग्निहोत्र जुहोतीत्युत्पत्तिवाक्याद् हवनस्य साधनद्रव्यत्वेनाक्षेपतो दध्नोऽपि सिद्धत्वेन करणत्वमात्रमेव विधेयम् । एव सोमेन यजेतेत्यत्र सोमयागयोरुभयोर्विधि । यदाग्नेयोऽष्टाकपाल इत्यत्र हव्यदेवता-यागाना विधेयत्वात्त्रिविध. । लोकेऽपि रक्त पट वयेत्यत्र गुणद्रव्यक्रियाणा-मेकस्य द्वयोस्त्रयाणा वाऽसिद्धावेकविधिर्द्विविधिस्त्रिविधिर्वेति यदेव विधेय तत्रैव तात्पर्यमित्युपात्त-स्यैव शब्दस्य वृत्त्युपस्थापितेऽर्थे तात्पर्यं न प्रतीतिमात्रे । येन केनापि सम्बन्धेन प्रतीतेऽर्थे तात्पर्याङ्गीकारे पूर्वो धावतीत्यादौ पूर्वत्वस्य नियतापरसापेक्षत्वादर्थापत्त्या पश्चिमपदार्थोऽपि कदाचित्तात्पर्यविषयीभूत. पूर्वपदवाच्यता भजेतेति ।

१—ननूपात्तस्यैव शब्दस्यार्थे तात्पर्यस्वीकारे विष भक्षय मा चास्य गृहे भुङ्क्था इत्यत्र भक्षय, भुङ्क्था इति क्रियाद्वयघटितस्य वाक्यद्वयस्यैतद्गृहे न भोक्तव्यमित्येकस्मिन्नर्थे तात्पर्यं न स्याद् विष भक्षयेति वाक्यार्थत्वाभावादिति चेच्छृणु—मा चास्येत्यत्र चकारेण सुहृदुक्तस्य विष भक्षयेति वाक्यस्य स्वार्थेऽविश्रान्तस्य साकाङ्क्षतया समनन्तरोच्चारितेन मा चास्य गृहे भुङ्क्था इत्यनेनैकवाक्यता सूच्यते । अन्यथा गुणानाञ्च परार्थत्वादसम्बद्ध. समत्वात् स्यादिति न्यायेन यथा समत्वेनाप्रधानयो. परस्परमसम्बन्ध एव प्रधानयोरपि समत्वेन परस्परमनन्वयादेकवाक्यता न स्यात् । विषभक्षण च न सुहृदुपदेशयोग्यमिति विप भक्षयेति वाक्य स्वार्थे सबाध सद्विरोधिता-रूपसम्बन्धेन विषभक्षणाधिकबलवदनिष्टानुबन्धित्वविशिष्टैतद्गृहभोजनमनिष्टहेतुरत' सर्वथा मास्य गृहे भुङ्क्था इति वाक्यार्थ सम्पद्यत इत्युच्चारितशब्दस्य वृत्त्युपस्थापितेऽर्थ एव तात्पर्यं नान्यत्रातो व्यङ्ग्यार्थबोधाय व्यञ्जनावृत्ते स्वीकार आवश्यक इति बहुश. प्रपञ्चित ध्वन्यालोकलोचनप्रकाश-दर्पणादिषु । तत एव विशेषतोऽवगन्तव्य जिज्ञासुभिरिति ।

समीक्षा—वस्तुतो व्यङ्ग्यार्थबोधाय तात्पर्यं न क्षमम् । यदि यावत्तात्पर्यमभिधा-व्यापारोऽभ्युपेयते तदाऽन्यत्राऽन्यशब्दप्रयोगस्तद्धर्मप्रतिपत्त्यर्थ इति नियमाल्लाक्षणिकशब्दप्रयोग: प्रयोजनप्रतिपिपादयिषयैवेति लक्ष्यार्थस्याप्यभिधावेद्यत्व स्यात् । अथ यदि तत्र विषयसहकारि-भेदाद् व्यापारभेदस्तदाऽत्रापि समम् । वक्तृबोधव्यादिवैशिष्टचप्रतिभासहकारितया व्यङ्ग्यार्थ-विषयकत्वाच्च व्यापारभेदस्यावश्यकत्वात् । न चैव विक्लित्त्यनुकूलव्यापाराणामधिश्रयणाद्यध-श्रयणपर्यन्ताना क्रमजन्मना देशकालसहकारिभेदादनेकविधाना वाचकत्वेन पचत्यादीना नाना-र्थकतास्यादिति वाच्यम्, गुणभूतेष्ववयवेषु क्रमजातेषु तेषु विक्लित्त्यनुकूलव्यापारे कलापेषु बुद्ध्याऽभेदकल्पनादेकक्रियेति व्यवहारात् ।

यावदुद्देश्यमेकव्यापारस्वीकारेऽनावृष्टिवारणाय कृतस्य यागस्य प्राण्युत्पत्तिपर्यन्तं व्यापारोऽ-भ्युपेय. स्याद् यतो यागात्पर्जन्य पर्जन्यादन्नमन्नात्प्राणिन इति कार्यकारणभावात्तेषामपि यागा-र्थतापत्ते ।

ननु तत्परस्य भावस्तात्पर्यमिति व्यङ्ग्यार्थोऽपि तदर्थं एवेति चेदोमिति ब्रूम. । तत्तद्-व्यापारप्रतिपाद्येष्वर्थेषु तदर्थताऽनपायाद् व्यञ्जनाप्रतिपाद्येष्वपि तत्परतास्वीकारात् ।

---

१. का० प्र० पञ्चमोल्लासत उद्धृतम् ।

यदि विषयसहकारिभेदेऽप्येकत्वं तदा नीलपीतादावपि भेदो न स्यात् । अत एव केवला-भिधैव शब्दवृत्तिरिति वादिनो वैयाकरणा अपि प्रसिद्धाप्रसिद्धादिना शक्तिभेद वाञ्छन्ति । अभिधेयार्थे प्रसिद्धा शक्तिर्लक्ष्यार्थेऽप्रसिद्धेति । स्फोटस्य व्यङ्ग्यत्व निपाताना च द्योतकत्वमुररी-कृतवता वैयाकरणाना मते सिद्धैव व्यञ्जनाऽत एव नागेशो लघुमञ्जूषाया व्यञ्जनानिरूपणान्ते वैयाकरणानामप्येतत्स्वीकार आवश्यक इत्याह ।

नन्वर्थसामर्थ्याक्षिप्तत्वमेव रसादीनामित्यानन्दवर्धनोक्त्याऽस्या अर्थवृत्तित्वमेवेति चेदन्वय-व्यतिरेकाभ्या शब्दवृत्तिस्वीकाराद् रसादिप्रतिपत्तये चावश्य स्वीकरणीयत्वात् ।

अपि च समासोक्तौ यत्र वाक्यार्थ एव तात्पर्यं तत्र उपोढरागेण विलोलतारकमित्यादौ प्रतीयमानो नायकव्यवहार. कस्य व्यापारस्य साध्यतामियादृते व्यञ्जनादिति शम् ।

● ● ●

# [1]कुमारदासस्य सौन्दर्यपरीक्षणम्

डॉ० दशरथद्विवेदी, गोरखपुरविश्वविद्यालय, गोरखपुर।

'यावद्रसिको न भवति लोकातिक्रान्तरसास्वादभुव नाधिशेते[2]' इति लोचनकृदभिनव-भट्टोक्त्यनुसारेण सौन्दर्यतत्त्वावगाहनाय सुहृदयमहृदयेन भाव्यमिति सौन्दर्यतत्त्वमस्ति वागगोचर किमपि लोकोत्तर वस्तु, अस्वाद्यमनुभवगम्यमेव। यमुपलभ्य हृदि तुष्टिरिव, धृतिरिव, मुख-मिव, हर्ष इव किमप्यानन्द इवाजायते तदेव सुन्दर सौन्दर्यम्। सकलतत्त्वाध्ययना-भ्यासावगाहनानुभवानन्तरमिदमेव प्रतीयते यत्तत्त्वतस्तु द्विविधत्वमेव भजते सौन्दर्यम्— बाह्यमान्तर्यश्च। बाह्यमेव सौन्दर्यं प्राचीना अधुनातनाश्च सस्कृतकाव्यशास्त्रप्रतिभा-जुषोऽलङ्कारत्वेनेच्छन्ति[3]। वक्रताविच्छित्तिश्चमत्कृति सौन्दर्यमिति व्यपदेशभागयमलङ्कार-शब्दस्तु सस्कृतकाव्यक्षेत्रे भारतीयपरम्परायाञ्च स्वरूपसौन्दर्यमेवाभिवदति। किन्त्वत्र साहित्य-शास्त्रे त्वान्तर्यमेव सौन्दर्यं प्रधानतामुपयाति। बाह्यञ्च तस्योपकारकम्, प्रकाशक किञ्च तत्प्रतिबिम्बकल्पमेवोच्यते। एवञ्च भामहोद्भटदण्डिप्रभृतय प्राचीनाचार्या वक्रोक्तिकारा. कुन्तकादयश्च स्वरूपसौन्दर्य शरीरसौन्दर्यमेव वा प्रतिपादयन्ति। यथोक्तं प्रागस्मदीयपरम्परया-मान्तर्यमात्मसौन्दर्यमेव वा प्रधानतया तत्त्वतया सौन्दर्यत्वेनेर्यते तदेव 'रस' इत्युच्यते। येन च ब्रह्मास्वाद इवानन्दो जायते। पाश्चात्यास्तु रसमेव सौन्दर्यमभिदधति[4] इति। न च रस एव सौन्दर्यमिति भ्रमितव्यम्, बहवो हि पाश्चात्या. सौन्दर्यमानुभविकम् इत्यपि मन्यन्ते। श्रीबिल्डनकारमहोदयैरुक्तम्–अभिव्यक्तिरेव सौन्दर्यम्। तच्च केवल मानसिक पूर्णरूपेण[5]। एरिस्टाटलमहोदया. कथयन्ति–सौन्दर्योत्पत्तिर्हि भावाज्जायते[6]। पुनश्च तैरुच्यते, भावाभिव्यक्तिरेव सौन्दर्यम्। एवञ्च यदि भावा रसा इति यथा भारतीयालोचनाशास्त्रे, तथैवात्रापि स्वीक्रियते, तर्हि माननीयमेवेद यत् पाश्चात्या रसमेव प्रधानतया सौन्दर्यमामनन्ति। न चास्यायमर्थो

---

१. निबन्धोऽयम् अखिलभारतीयप्राच्यविद्यासम्मेलनस्य सप्तविशतितमेऽधिवेशने कुरुक्षेत्रे दिसम्बरमासे १९७४ तमेशवीयवर्षे पठित।

२. लोचनस्य, पृ० ५२०. (चौ० संस्करणम्)।

३. 'सौन्दर्यमलङ्कारः' इति वामनः, काव्यालङ्कारसूत्रवृत्तौ तथा चान्ये काव्याचार्या।

४. द्र०, ए० सी० शास्त्रिमहोदयस्य, स्टडीज इन संस्कृत एस्थेटिक्स, पृ० ३.

५. द्र०, एच्० विल्डनकारमहोदयस्य -दि फिलासफी ऑफ वेन्डेट क्रोचे' पृ०, १७२। निबन्धेऽस्मिन् पाश्चात्यमतानि ए० सी० शास्त्रिमहोदयस्य ग्रन्थात् तथा च कृष्णचैतन्यस्य 'संस्कृतपोयटिक्स'ग्रन्थात् प्रायश. उद्धृतम्।

६. द्र०, एस्० एच्० बाउचरस्य एरिस्टाटलस्य, 'थियरी ऑफ पोयट्रीज इन फाइन आर्ट्स' पृ० ९६ तथा च पृ० २०२।

यद् भारतीयकाव्यशास्त्रेष्टस्य रसस्य पाश्चात्त्याना सौन्दर्येण किं वा 'एस्थेटिक' इति तत्त्वेन सादृश्यमस्ति । भवतु नाम । यद्यप्यान्तर्यमेव सौन्दर्यं प्रधानम्, तथापि न विस्मरणीयमिदं यद् बाह्यमेवान्तर्यमुद्भासयति, प्रकाशयति, अधिकापयत्युद्दीपयति च । एवञ्च यथा लाङ्ग-फील्डमहोदयैरुक्तम्, सौन्दर्यं न केवलं बाह्य न चान्तर्यमेव वस्तुतस्तूभयोरुपकार्योपकारकत्व-मेवास्ति ।[1] एष एव च पन्था भारतीयैर्ध्वनिवादिभिरपि स्वीकृत । संस्कृतकाव्यकारा बाह्यं गिरिनद्यादिक प्राकृतिक वस्तु प्रतिभातूलिकयानेकधा चित्रयन्तीति तन्मतौ बाह्योद्यानादि-स्वरूपादिचित्रं चेतनवतामन्तरुद्भासयतीति तयोरैकात्म्यमेवानेकधा तेषा वर्णनेपूपलभ्यते ।

कविकुलगुरोः कालिदासस्याभिन्नसखोऽय 'जानकीहरणस्य' कर्त्ता काव्यस्य कुमारदासः जात्यन्धोऽप्यन्यून एव सौन्दर्येक्षिकाया तस्माद् दीपशिखाकवे । यतो बाह्येनैवान्तर्यस्य साक्षात्कारो भवति, तत्कोटौ च मानवपशुपक्ष्यादिरूपम्, तेषा व्यवहारा, सकलकलालङ्कारादयश्चायान्तीति तमेवावलम्ब्यात्र कुमारदासस्य किमपि सौन्दर्यतत्त्वाभिनिवेशिमनस साक्षात्कार· क्रियते । सौन्दर्यं बुभुक्षु खलु मानवं मन । यद्यपि बाह्यसौन्दर्यमस्थायि, तथापि च बहव तदेवाद्रियन्ते । रूपस्य मनोहारित्वं मन सन्तर्पणत्वञ्चानुभवसिद्धमेव । स्वरूपस्य सम्यग्विनिवेशोऽपि कदाचित्सौन्दर्य-मेवोत्पादयति । लावण्य संस्थानमुग्धिमेति 'लोचनकृन्मतमनुसृत्य जानकीहरणे राज्ञो दशरथ-स्यान्त.पुरवनिताना कौशल्यादीना स्वरूपसौन्दर्यमिह परीक्ष्यते । रमणीना रमणीयत्व प्रायशश्चित्त चोरयति ।[3] कौशल्या चात्र समग्रललनाश्रीसौभाग्योपेता चित्रिता दृश्यते । कथयति कवि.—प्रजा-पतिना निर्माणसम्भारमेकत्र कृत्वा नेत्रे निगील्यैव मन्मथशराघा तत्रस्तेनैव तस्या ऊरू विरचितौ किमित्याश्चर्यमन्यच्च पृथुतरास्या श्रोण्येव मध्यस्य पृथुत्वमाहृत्य तमतिकाश्यं प्रापयामासा अत एव रशनागुणेन सा निबध्यैव वनितया तया कौशल्यया रक्ष्यते, न पुनर्वृद्धिमाप्नुयादिति मनसि कृत्वा ।[4] घटस्तनौ तस्या तथा पीवरौ यथा तयोरतिभारभरवहनक्लेशेनैव मध्यभागो नितरा कृशता जगाम । नवोदरोमराजिस्तु तस्याश्चिनमाकर्षयत्येव, प्रतीयते सुकेश्यास्तस्या अलकान् चित्रयत प्रजापते कम्पमानकरतूलिकाग्राद् मसीरेखैवात्रोदरे पतिता ।[5] एवमनेकधा कौशल्यासौन्दर्यवर्णने कुमारदास· कृतप्रयास इव परिलक्ष्यते । न चात्र तत्साफल्यमवाप्तवान् यदस्ति जानकीस्वरूपसौन्दर्योपस्थापने निशाचरवल्लभाना वा सौन्दर्यनिबन्धे । वस्तुतस्तु यावान्निपुणः दक्षश्च प्रतिभाति प्राकृतिकसौन्दर्यपरीक्षाया कुमारदास, न तथा मानवाकृतिसौन्दर्यनिर्माणे । काव्यस्य सप्तमसर्गे जानकीस्वरूपसौन्दर्यमुपवर्णितमस्ति । रूपकाद्यलङ्कारसन्निवेशलालसतया विषयस्योपेक्षा भवति, अस्ति च तत्कुमारदासकृतजानकीचारुत्वविवेचने । तथापि रमणीयता

---

१. द्र०, हर्बर्ट सिडनीलाङ्गफील्डमहोदयस्य—'दि एस्थेटिक एटीच्यूड' पृ० १०८ ।

२. लोचनम्, पृ० २८४ ।

३. द्र०, श्री ए० सी० शास्त्री, तत्रैव पृ० ४४-४५ ।

४ द्र०, जानकीहरणे १।२९-३० ।

५. द्र० तत्रैव श्लोकाङ्का १।३२-३३ । तथा च—

अरालकेश्या अलके विधात्रा विधीयमाने चलतूलिकाग्रात् ।

च्युतस्य बिन्दोरसितस्य मार्गरेखेव रेजे नवरोमराजि. ॥ ( तत्रैव १।३३ )

सर्वथैव हृद्या भवति । दृश्यतां तस्या नखद्युतिं कवेर्वर्णनाप्रकारम्—प्रतीयते, भास्वन्नखच्छलेन नक्षत्रसन्ततिरेव तस्याः पादयोः पतित्वा प्रार्थयति, वदनकान्त्या ताराधिप चन्द्र मा विमानीकुरुताम्, प्रतिमा च सीताया लावण्योपेता चित्रिता । तद्यथा—वक्षसि पीनमुष्णं च कुचद्वयम्, तस्य भारभरेण भज्यमानो मध्यभाग , पृथूरू, कामानलधूमरेखेव स्तनयोस्सीमावधिरिव नवोद्भिद्यमानरोमालि', नीलेक्षणे, सुभ्रुवावित्यादिसर्वं विधात्रा सकलकलाभ्यासपूर्वकमेव तस्या धरणिभुवो रचयामासे । चन्द्रस्तु सीताया मुखसौन्दर्याश्रय एव शुक्लपक्षे कलाकला प्रतिगृह्य पूर्णोऽपि तमनवाप्य क्रमेण शोकादिव कृष्णपक्षे क्षीणता व्रजति ।[१] सौन्दर्यप्रतिपत्तये काव्येषु कवय उपमानानि गृह्णन्ति । तन्माध्यमेनैव सौन्दर्योद्भासनं भवति । जानकीमवेक्ष्य रामणीयकहृतहृदयो रामो वितर्कयति मन्ये हरिणीना नेत्राणि नीलोत्पलानि च विरचय्य पूर्वमभ्यास कृत्वैवास्यास्चपलमायत नीलेक्षणं विरचितवान् विधि । भ्रुवावस्याश्च कामारिरोपप्लुष्टस्मरकार्मुकस्य मध्यविभग्नौ किमु खण्डद्वयाविति वितर्को महान् । मन्ये च सीताया आलापमेव श्रुत्वावधीरित इव कोकिल शोकेन कार्ष्ण्यं रोषेण च लोहिताक्षित्व जगाम ।[२] चित्रार्पितमेवैतद्दृश्यम्, यत्र परिजनकुलैर्यान्ती जानकी तिर्यगर्द्धनिरीक्षणेन राम कटाक्षीकरोतीति नितरा हृद्यम् ।[३]

सौन्दर्यपरिपाको भवति शृङ्गार एव कात्स्न्येंन । प्रणयिनोर्यूनो सीतारामयो प्रथमप्रणयक्रीडा अनुभूता , प्रत्यक्षीकृता , स्वकीया इव प्रतिभासमाना सर्वमाहरन्ति । स्वभावोक्त्यापि तावन्निरवधि काव्यार्थः सम्पाद्यत इत्याचार्यानन्दस्योक्तिर्यथार्थतावलम्बिनी ।[४] क नोत्सुकापयन्ति सीतारामयो स्वभावशृङ्गारचेष्टा. । स्वकीयसर्वस्वापहरणकाले कामवस्था गता जानकीति भृश सदर्शनीयम्—

> यद्ररक्ष दृढवस्त्रबन्धनै स्वापकालमवलम्ब्य भर्तरि ।
> तत्प्रमृष्टवति सञ्जातस्मृति सा रुरोद मुपितेव सस्वरम् ॥[५]

'असह्यमिद विसृजेति' सुरतसमये व्याहृत शुकादीरितमाकर्ण्य जानकीव्यापार पश्यन्तु—

> रत्नतल्पनिकटस्थिते शुके सञ्जाते हृदि निधाय भापितम् ।
> नि सहा तु विसृजेति जल्पति व्रीडिता परिजघान पञ्जरम् ॥[६]

एवमन्ये तयोर्व्याहाराश्च पाठकचेतसि महानन्दोत्पादन कुर्वन्ति ।[७] 'डौस' तथान्येषा पाश्चात्यसौन्दर्यसमीक्षकाणा मतौ वस्तुन्येवानन्दोऽनुभूयते ।[८] लिप्समहोदयेनोक्तम्—'वस्तुन्यात्म-

१. वक्त्रेन्दुलीलामनुयातुमस्या कलान्तराणि प्रतिपद्य चन्द्र ।
   पूर्णोऽपि साधर्म्यविशेषशून्यः क्रमेण शोकादिव याति हानिम् ॥ ( तत्रैव ७।१३)

२. द्र०, तत्रैव ७।१४-१७ ।

३. तिर्यग्विवृत्ताननचन्द्रकान्ता राम जघानार्द्धनिरीक्षणेन ॥ (तत्रैव ७।२१)

४. द्र०, ध्वन्यालोके, पृ० ५८४ ।

५. द्र०, तत्रैव ८।१३ ।

६ तत्रैव ८।३१ ।

७. प्रार्थितापि न चकार कानिचित् कानिचित् स्वयमपि व्यधत्त सा ॥ (तत्रैव ८।४४)

८. द्र०, कुर्ट जॉन डौस—फिलासफी आफ आर्ट ( लन्दन ), १९२९ ।

व्यवहाराणामनुभूतिरेव सौन्दर्यानन्दमुच्यते ।[१] भूपतिर्महारथो दशरथो मृगयाया मृगेषु प्रहर्तुमुद्यतोऽपि प्रेम्णाऽन्योन्यमुखार्पिततृणकवलयोर्मृगयूथयोरुद्वीक्ष्यानन्दनिमग्नयोर्विस्मृतशराघात स्वयमेवानन्दाब्धिविगाहमानोऽवलोकयन्नेव तस्थौ । कश्चिन्मृगयुश्चित्रकर एव वा कवि. कुमारदासश्चास्यानन्दानुभवभुवमेतीत्यहो कवेर्वर्णननैपुण्यम् । तत्रैव च शरप्रहारभिया पङ्क्तिबद्धपलायमाना दशरथस्यैकशरविद्धा सरलतयैकरेखया गच्छन्ती शरैकग्रन्थितेवात्यन्त सुन्दर चित्रमुपस्थापयति ।[२]

न च तदस्ति वस्तु किञ्चिद् यन्न चित्तवृत्तिविशेषं रसमानन्द वोपजनयतीति पाश्चात्यसमीक्षका वदन्ति । तथा च स्वभावोक्त्यैवानन्तकाव्यप्रभेदत्वमुत्पद्यते ।[३] मुग्धशिशोस्तास्ता स्वभावक्रीडा. क न हरन्ति । बालोऽय रामभद्र. 'रामो नास्तीह' इति तरुणीभिरुक्त हस्तपुटेन मुखमाच्छाद्यैवानुपस्थितिं स्वकीयं विनिवेदितवानिति बालबुद्धिविलासः कस्यानन्द नोपजनयति ।[४] मुग्धशिशोश्चित्रमेवास्मिन्नधस्तनश्लोके चित्रितमस्ति—

> मुखमाहुतिधूलिगण्डयो. करघृष्टाञ्जनदानमस्य तत् ।
>
> विबभौ सुरदन्तिनो यथा वदन दन्तचतुष्टयोज्ज्वलम् ॥[५]

कस्ते तात. ? इति धात्रीभिरुक्तो राम करेण नृपं विनिर्दिशस्तस्यातीव सम्मदमातेने । कदाचिच्च मात्रा नियुक्तो भ्रातृभिस्सह पितुश्चरणौ सवाहयति । कदाचिच्च शयनीयगतस्य भूपतेर्वक्षसि स्वपितु 'अहमेवात्र स्वाप लप्स्य' इति कलहायमाना सर्व एव भ्रातर मातॄणामत्यन्तमानन्द जनयन्ति ।[६] एतच्च सर्व बालकाना मधुरचरित्रचित्रमेव प्रमातुश्चित्तमारोपयति सौन्दर्यसुखमनुभावयति च ।

कवयस्त्वचेतनवस्तुवृत्तान्तमेवाभिव्यक्तिकौशलेन चेतनवन्निर्माय सौन्दर्यलहरिकामुद्भावयन्ति सहृदयहृदयेषु[७] । प्रकृते साधनानि शैलतुंगनदनदीनिर्झरोदयास्तमयशशिसूर्यपुष्पोद्यानतरुलतापल्लवादीनि येषा माध्यमेनैव सौन्दर्योद्भासनमन्तर्दर्पणमन्तर्दर्शनं च चेतनवतां कविकर्मण्यावेद्यते । एतद्द्वारेणैव सौन्दर्यनिवहस्य साक्षात्कारो भवतीत्यत एव सस्कृतकवय: प्राय सर्वत्र प्रकृतावेव चैतन्यमारोप्य तत्रैवानन्दमनुभवन्ति । ताद्रूप्यमेवात्र हेतु , सत्येन ताद्रूप्ये चित्तविस्तारश्चित्तचमत्कारो वा भवति । कुमारदासोऽपि प्रकृतिमाध्यमेनैव सौन्दर्यतत्त्वावेक्षणं कृतवानत एव तत्रैवास्य सौन्दर्येक्षिका दृष्टिरपि परीक्षणीया, वर्णनीया च भवति । भारतीयास्तथा

१. द्र०, कृष्णचैतन्यस्य, सस्कृत पोयटिक्स, पृ० ५५, तत उद्धृतम् ।
२. अन्योन्यवक्त्रार्पितपल्लवाग्रग्रास नृवीरस्य कुरङ्गयुग्मम् ।
प्रियानुनीतौ भृशमिष्टचाटुचेष्टस्य घाताभिरति निरासे ॥ तत्रैव १।५९, तथा ५८ ।
३. ध्वन्यालोके, पृ० ५२६ तथा च दण्डिप्रभृतय आचार्याः ।
४. द्र०, ४।५८ ।
५. तत्रैव ४।९ ।
६. द्र० तत्रैव ४।१०-१३ ।
७. द्र०, ध्व०, पृ० २१५ ।

च क्रोचेमहोदया अपि मानयन्ति विनानुभूत्या नास्ति नोपलभ्यते किञ्चित् सौन्दर्यसुख प्रकृति-सम्भारेषु[1]। अनुभूत्या रसानुभूतिरेवेष्यते । अत एव सौन्दर्यस्य प्रतीतिरपि प्रधानतया रसे सोऽपि श्रृङ्गार एवेति काव्यशास्त्रम् । प्रतिपादनाय चास्य कुमारदासेनापि यूनोर्विहारविला-सादयो बहुधा प्रदर्शिता. । तृतीयगर्गे पृथ्वीवल्लभो दशरथ रमणीभिस्सहारामादिषु बहुधा रेमे । तत्र च कामपरवशा काचित्प्रिया प्रियतममाकृष्टु सुदूरोन्नतप्रदेशस्थ पुष्पस्तबकभग्न-व्याजेन बाहुमूलमुपदर्शयन्ती तिर्यग् राजानमर्धनिरीक्षणेन जघानेत्यत्र पुष्पपल्लवाग्रावचयव्यापृत-सरागयुवतिचित्र सम्मुखीनमिव भवति[2]। अपरस्यास्त्वेकस्या वदनारविन्दपानप्रवृत्तनरपति-रन्यया दृष्ट कुसुमधूलिधूसराभावेऽपि तस्या नेत्रे मुखमारुतेन गोपयन्निव निजप्रणयकर्म ममार्जेति नितरा कौतुकावहम्[3]। उत्कृष्टप्रेम्णि किं कि नाकल्पयति जन स्वप्रेयसि । राजाऽपि वल्लभा-मपरामुद्वीक्ष्य तन्मुख एव माधवीलतामण्डपबुद्धि बबन्धेति भृशमेव हृद्यम्—

स्निग्धद्विजालीरुचिर प्रियङ्गुश्यामद्युतिश्चारुतमालकान्ता ।

बिभर्ति गन्धाहृतभृङ्गचक्र सन्माधवीमण्डपमेतदास्यम् ॥[4]

पद्माकरश्च वारि विगाहमानस्य रामाजनस्य नितम्बबिम्बं वीचिकराग्रेण सशब्दं कामीव व्यास्फालयति । कश्चित्तरत्तरङ्गो रामाणा पीननितम्बै दूरमुत्क्षिप्त. अन्यस्या· तनूदरेषु प्रविष्टो हतभाग्यस्ततोऽपि मासलस्तनैस्ताडित सुदूरमुत्क्षिप्त. । क्षीणस्य दैवहतस्यात्र दृश्यमेव हृदयमा-रोहति[5]। कृत्स्न एव तृतीयसर्ग सौन्दर्यकोष इव कविना सहृदयाय समर्पित । नृपोपभुक्तमुक्ता सरोजिनी सरोजिनीव प्रतिभाति—

सरोजिनी तत्परिभुक्तमुक्ता मूर्च्छातुरेव स्तिमिता विरेजे ।

निद्राहृताम्भोजनिमीलिताक्षी रुग्ण मृणालीवलय दधाना ॥[6]

भुक्त एवास्य सौन्दर्यमाकलयितुमीष्टे । एवमेव षोडशसर्गे निशाचरयुवतिवृन्दाना हारिविभ्रम-विलासा दूतीसम्प्रेषणादिव्यवहाराश्च कवेरनुभूतसौन्दर्योपस्थापनशक्तिमाविष्कुर्वन्ति । मानवतीना युवतीना सापराधप्रियेषु दण्डप्रकारोऽयमत्र—

स्तनतटनिहत करोऽवधूतः परिगदिते समधिश्रित हि मौनम् ।

विहसितमपि सान्त्वने सरोष प्रणयिजने युवतेरय हि दण्डः ॥[7]

श्रृङ्गारानन्तर करुण एव हृदि किमप्यानन्दानुभवमुपजनयति । एको रस. करुण एवेति

---

१. द्र०, क्रोचे—एस्थेटिक्स, उद्धृत चैतन्यस्य, 'सस्कृत पोयटिक्स' इति ग्रन्थतः ।

२. दूरस्थपुष्पस्तबकाग्रभङ्गव्याजेन सदर्शितबाहुमूला । तत्रैव ३।१७ तु० भारवि., किराते ८।१८ ।

३. द्र०, तत्रैव ३।८, तु० रघुवंश २।१९ ।

४. द्र०, तत्रैव ३।२१ ।

५. द्र०, तत्रैव ३।३१ ।

६. तत्रैव ३।६० ।

७. तत्रैव १६।३९ ।

भवभूत्याचार्यस्तु करुणमेव प्रधानत्वेन प्रतिपादयति । वनगमनावसरे सीताया उक्तय. क नावर्जयन्ति । पश्य, पथि चलन्ती कोमलाङ्गी जानकी रथ त्यक्त्वा द्वित्राण्येव पदानि गत्वा गन्तुमसहा रामं पृच्छति, अतोऽपि कियद्दूर गन्तव्यमिति—

द्वित्राण्येव रथ त्यक्त्वा पदान्याधाय नि सहा ।
येयमन्यत्कियद्दूरमिति पप्रच्छ मैथिली ॥[1]

सत्यनुभूतावेव सौन्दर्यसमुल्लासो भवति ।[2] पाश्चात्यो ह्वाइडेटमहोदयः सत्य विना सौन्दर्यमधमत्वकोटिकमिति प्रतिपादयति ।[3] भारतीयकाव्यशास्त्रकारास्तु सत्यमेव सौन्दर्यं पश्यन्ति । सत्य शिवं सुन्दरमित्यस्यैवोद्घोष । सौन्दर्ये सत्यस्य, शिवस्य च साक्षात्कारो भवति । कीट्सोऽपि सौन्दर्यमेव सत्यम् सत्यमेव सौन्दर्यमिति मन्यते ।[4] एतत्त्रितयमपि तपोवनेषु ऋषिकुलेषु, तापसवृन्देष्वेवात्यन्त परिपूर्णता याति । जानकीहरणस्य पञ्चमसर्गे वर्णिततपोवन दृष्ट इव, अनुभूत इव, प्रत्यक्षायमाण इव प्रमातुश्चित्तमारोहति । क्वचिच्च तरुतलेषु मयूरा नृत्यन्ति तपस्विसामतालेषु । क्वचिच्च पक्षिपानायाम्भोभरितपात्राणि वृक्षाधः निवेशितानि सन्ति । प्रशुष्यमाणपुण्यवल्कलसनाथतरुकाण्डानि च क्वचिदवनमितानीव दृश्यन्ते । लोहितगण्डमण्डितप्लवङ्गमाश्चापरत्र स्वभागभूत नीवारवलिमाहरन्ति स्वकरकमलैः । स्वाङ्कसुप्तमृगशावप्रतिबोधशङ्कया क्लान्तोऽपि चिरमधितिष्ठन्मुनिजनो नोत्तिष्ठति स्वाधिष्ठानात् । धूमधूसरिततरुषण्डाधश्च क्वचिदतिथिभ्य आसनानि विनिहितानि सन्ति । क्वचिच्च सम्पाद्यते बलिक्रिया तापसवनिताभिर्मृगाङ्गनाश्च अपरत्रालिहन्ति प्रेम्णा शावकवृन्दानि । तरुभ्रष्टपक्षिशावकसुखार्थं तापसकुमारकास्त्वन्यत्र कृतकनीड विनिर्माय सुखस्पर्शमिषीकतूलासनविन्यासपराश्च तत्र दृश्यन्ते । खातेषु चाङ्कुरितानि दृश्यन्ते बीजानि । शुष्यन्तीमिङ्गुदी क्रीडापरायणा मृगशावका विकीर्यमाणा दृश्यन्ते । एवमितराण्यपि तपोवनस्वरूपसुन्दरदृश्यानि कविना निगदितानि जानकीहरणे, कियच्च क्रियता तेषा वर्णनम् ।[5] व्याघ्रस्य पुच्छ प्रगृह्य तापसकुमारकास्तस्याङ्कवृष्णबिन्दून् गणयन्तीति शाकुन्तलस्य भरतकृतव्याघ्रशिशुदन्तगणना स्मारयति ।[6] घर्मातपसतप्तौ हरी शाश्वतिकमप्यपहाय वैर गजस्य फणिनश्चाश्रयमाश्रयेते—

---

१. तत्रैव १०।५०, प्रथमसर्गे श्रवणकुमारस्य करुणार्द्राणि वचासि शोकसन्तानमुपस्थापयन्ति १।७६–८४ ।

२. ए० सी० शास्त्री, तत्रैव पृ० १२४ ।

३. ए० एन्० ह्वाइडेट ( White head ) एडवेन्चर्स आफ आइडियाज पृ०, ३४४.

४. कीट्स, ओडआन ग्रेसियनअर्न ( Beauty is truth and truth is beauty ), उद्धृत शास्त्रिग्रन्थात् ।

५. तत्रैव ३।१–१० ।

६. प्रगृह्य पुच्छे शिशवस्तपस्विना मसीपय सेकृतानिवासितान् ।
यदङ्कबिन्दून्गणयन्ति चापलाद्विलोकय द्वीपिनमेनमग्रत ॥ तत्रैव ३।२३ ।

इमौ हरी सहृतरोपशङ्किनौ नितान्ततप्तौ तपनस्य दीप्तिभि· ।
तल गजस्य स्रुतगण्डसपद· फणातपत्र फणिनश्व वाञ्छत ॥[1]

काव्य हि परमानन्दितस्योत्तममनसश्चोत्तमोत्तमानन्दफलम् ।[2] आनन्दितमेव मनो व्याप्रियते काव्यकर्मणि । तच्च कर्म अनुत्तममपि सर्वं रमणीयत्वमानयति ।[3] शोभासौन्दर्य-मुच्यत इति वक्रोक्तिकाराणा मतम् ।[4] परिपाकवता कवीना रसादितात्पर्यविरहे व्यापार एव न शोभते । रसादितात्पर्ये च नास्त्येव तद्वस्तु तदभिमतरसाङ्गता नीयमान न प्रगुणी भवति । न सन्त्येव वा तानि यानि न यान्ति रसाङ्गता चेतनवृत्तान्तयोजनया ।[5] ध्वनिकारोक्ति-र्जानकीहरणे च पूर्णतया घटते । अचेतनवस्तुनि चेतन्यत्वमारोप्य कुमारदास. सौन्दर्यसम्पदा सुशोभयति स्वकवितामन्दिरम् । यथाहि, वसन्तागमे सम्पीडितसर्वावयव कण्टकिनोर्ध्वदण्डो नूतनपद्मषण्डो जलान्तर्वासाच्छीतव्यथित इवातपेच्छया जलाद् बहिर्निर्ययौ । अधिगतप्रियतमा-पादाघात इव बन्ध्योऽप्यशोको रणन्मञ्जीरालक्तकरसरञ्जितयुवतिपादताडितोऽतिहर्षान्नवोद्गतै पुष्पैरुद्भूतरोमाञ्च इव वसन्तेऽतितरा दृष्टिमावर्जयति । वासन्तिकसूर्यमरीचिभिरुपहृत हेमन्त-मालोक्य प्रभाहतमुद्धतारि कमलवन प्रीत्येव जहासे । पुष्पवत्या लतयोपगूढ पुष्पप्रभादीप्यमान. पलाश. सुहृद कामस्य दाहाग्निसमुत्थितवसन्तराशीकृतभस्म इव नितरा वनेषु विरेजे । वसन्तातपतप्ताभिनवकिसलयाग्रमण्डितास्तरवो बहिर्नि सारितविद्रुतताम्रजिह्वा इवावलोक्यन्ते ।[6] एषु सर्वत्रैव चेतनायमानेव प्रकृतिश्चित्रिता । तथापि चात्र नोपलभ्यते कालिदासरामणीयका-रामोपभोग. ।

द्वादशे सर्गे प्रफुल्लपङ्केरुहकर्कशस्तनी शरद्वनेषु राम सेवितुमवतार्यते । शत्रुमुद्धृत्यापि सदैव सम्मान प्रदेय विशिष्टं च स्थान विधेयमितिकृत्यैव कलमपालिकाः स्वकीयनेत्रस्पर्द्धि-पङ्कजमुन्मुच्य शिरस्यलङ्कारीकुर्वन्तीति सौन्दर्यदर्शनस्याभिनवात्र अपूर्वेव काचित्कवेर्दृष्टि ।[7] क नावर्जयति चित्र पश्य सुरभि प्रेयसीमुख कश्चित्प्रेयानिव सारसः सुगन्धिगर्भं कमलस्य कुड्मलं चञ्च्वा बलान्निबोधयामासेति महत्सुन्दरमेतच्चित्र लोकस्य—

निपीड्य चञ्च्वा कमलस्य कुड्मलं विबोधयामास बलेन सारसः ।
सुगन्धिगर्भं मुकुलीकृत ह्रिया पति प्रयत्नादिव कन्यकामुखम् ॥[8]

---

१ द्र०, तत्रैव ३।२४ ।
२. द्र०, एल्० हन्ट, ह्वाट्जपोयट्री, शास्त्रिग्रन्थात् ।
३. पी० बी० शैली, ए डिफेन्स ऑफ पोयट्री ।
४. द्र० वक्रोक्तिजीवितम्, पृ० ५२९ ।
५. द्र०, ध्व०, पृ० ५२९ ।
६. द्र०, तत्रैव ३।११–१२ ।
७. द्र०, तत्रैव १२।६ ।
८.। द्र०, तत्रैव १२।१० ।

विनाशके शत्रौ समुपागतेऽन्तरितेषु जनेषु कश्चिदेक एव विनिर्गच्छति तदवलोकनाय गतो न वेति विज्ञातुम् । शरदागमे पद्माकर एकमेव कमल प्रथम समुद्गत तेषा विनाशकारका मेघा गता न वेति विनिश्चेतुम्—

सरोजमेक प्रथम समुद्गत विभाति पद्माकरनाशनो घन ।
गतो न वेतीक्षितुमम्बुजै· परैरुदेतुकामै· कृतमग्रतो यथा ॥[1]

द्वावप्येतौ श्लोकौ लोकस्य चित्रमेवोपस्थापयत । न खल्वनयो रमणीयत्व वक्तुं पार्यते । सहृदय एवानन्दमनुभवितुमर्हति । वस्तुतस्त्वभिव्यक्तिरेव उक्ते· कल्पनाया वा आभूषणम् । शब्दस्य हि वक्रता अभिधेयस्य च वक्रता लोकोत्तीर्णेन रूपेणावस्थानमित्यभिनवभट्टः । मानवस्य प्रकृतेश्चान्तस्सौन्दर्यतादाम्येनैव तस्या साफल्यमत्र । कुमारेण पूर्वप्रदर्शितयोरुभयोरपि श्लोकयोर्यदुक्तं न तत् क्वापि सुलभमन्यत्र । सौन्दर्ये सत्यारोपणमेव सस्कृतकवितायाश्चरमं लक्ष्यम् । तदेवात्र सम्यग्विनिविष्टमस्ति ।

कवयो हि प्रकृतिसम्भारेषु तथा सम्बद्धा भवन्ति यथा सौन्दर्यं स्वयमेव तेषामुपनिबन्धे प्रवाहरूपेणापतति । सौन्दर्ये चरमतत्त्वमानन्द एव । आनन्द एव सौन्दर्यम् ।[2] सूर्याचन्द्रमसोरस्तोदयेषु वैदिका अपि कवयो व्यामुह्यन्तः किमिति लौकिका । पश्याधस्तनश्लोके तरुणोऽय भानुमान् सरागकरेण विबोधयति—

विरामः शर्वर्या हिमरुचिरवापोऽस्तशिखर
किमद्यापि स्वापस्तवमुकुलिताम्भोरुहदृश ।
इतीवाय भानु प्रमदवनपर्यन्तसरसी
करेणाताम्रेण प्रहरति प्रबोधाय तरुण. ॥[3]

पठित्वैव पद्यम् केनाप्यानन्दातिशयेन चित्तविकास उपजायते । अस्तमुपयास्यंश्चायमेव भानुरस्तमस्तकमधिश्रितो भुवनं पश्यति—

सन्निगृह्य करसन्तर्ति क्वचित्प्रस्थितोऽपि रविरेष रागवान् ।
अस्तमस्कमधिश्रित क्षण पश्यतीव भुवन समुत्सुक. ॥[4]

जलधितटमधिरूढ एव सौन्दर्यमाकलयितुमीष्टेऽस्तमयस्य रवेरुन्मुखा मयूखा बाडवशिखा इवाभान्ति ।[5] प्रतीयते यथाग्निज्वालेवान्तरुदधेरुत्पद्यते । ताम्रसन्ध्यायाञ्च विचित्रवर्णनभोमण्डलमर्कदीपकज्जलमलीमस इव विभाव्यते[6] । उदेष्यत चन्द्रस्य पथि दिग्वधूमिः तारकलाजकाविक्षिप्ता सन्तीव[7] । मित्रनाशाच्च साय दीर्घिकाणा करुणावस्था—

---

१. द्र०, तत्रैव १२।१९ ।
२. श्रीशास्त्री, तत्रैव पृ० १२२ ।
३. तत्रैव ३।७८ ।
४. तत्रैव ८।५६ ।
५. द्र० तत्रैव ८।६२ ।
६. तत्रैव ८।६६ ।
७. तत्रैव ८।८३ ।

मित्रनाशपरिरोदिताश्चिरं मूर्च्छिता इव विभान्ति दीर्घिका· ।
सुप्तपद्मविनिमीलितेक्षणा वृद्धशान्तकलहंसकूजिता ॥[1]

मूर्च्छिता स्मारयन्न कमावर्जयति । प्रावृषि च मलिनीकृतकन्तति कमलिनि कामपि शोच्यता-मुपगतेति भृशमत्र दर्शनीयम्—

कमलिनि मलिनीकृतकन्तति सकलहं कलहंसगण जहौ ।
अविकलं विकलङ्कृतनुच्छदं समदनम्मदनभ्रतनुश्रियम् ॥[2]

अपि च विकचकेतकीमध्यगो रामया रमभाण. मधुप. अज्ञातवायुवर्षाघातश्चिर सुखस्वाप-माप्तवान्—

नवविबोधमनोहरकेतकी कुसुमगर्भगत. सह कान्तया ।
अविदितानिलवृष्टिभयागम सुखमशेत चिराय शिलीमुख ॥[3]

कियद्वा वर्ण्यते कवेरभिधानकौशलसौन्दर्यचातुरी ।

सहृदय. सर्वावस्थासु सर्वपदार्थेषु च सौन्दर्यसाक्षात्कारी भवति । वायसाना स्वभाव· किमप्यशनीयं दृष्ट्वा यत्र कुत्रचित्तुण्ड घर्षन्ति । रामेण व्यापादितस्यैकगजस्य मुखमातिष्ठन् कश्चिद्वायसो मृतनिशाचरमासादितस्तृप्तो लोहितानुलिप्ततुण्डाग्र तत्र गजरदने घर्षति—

रक्षोवशापिशितपूरितकुक्षिरन्ध्र काकुत्स्थबाणहतहस्तिमुखाधिरूढ ।
पर्यन्तलग्नरुधिराणि मृदुप्रणादस्तुण्डानि वायसगणो रदने ममार्ज ॥[4]

क्वचिद्युद्धमपि सुखमेवोत्पादयति । रामरावणयोर्युद्धमस्यैव समर्थना करोति ।[5] न च सौन्दर्य-माप्यते विषयेष्वेव । सौन्दर्यधामानि चैतन्यभाजा सन्मनोवाक्कार्याण्येव । तत्रैव सौन्दर्यस्येयत्ता । मिथिलेश्वरो जानकीमुपदिशन्नान्तर्यसौन्दर्यस्य हेतुभूत पूर्णतत्त्वमेवात्रोपस्थापयति—

पर.प्रकर्षो वपुष समुन्नतिर्गुणस्य तातो नृपतिर्नव वय ।
इति स्म मा मानिनि मानमागम पतिप्रसादोन्नतयो हि योषितः ॥[6]

वपुः प्रकर्षादि बाह्यमेव सौन्दर्यम् । तस्य च साफल्यमान्तर्येणैव भवति । पतिप्रसादादेव युवतीना सौन्दर्यस्य परिपूर्णता भवति । कालिदासेनापि कुमारसम्भवे प्रतिपादितमेवैतत् । पुनश्च—

स्त्रियो न पुसामुदयस्य कारणं ता एव तद्धामविभूतिहेतवः ।
तडिद्वियुक्तोऽपि घन. प्रजृम्भते विना न मेघ विलसन्ति विद्युत ॥
गतापि भर्त्रे परिकोपमायत गिरः कृथा मा परुषार्थदीपिनीः ।
कुलस्त्रियो भर्तृजनस्य भर्त्सने परं हि मौन प्रवदन्ति साधनम् ॥[7]

---

१. तत्रैव ८।८४ ।
२. तत्रैव ११।५० ।
३. तत्रैव ११।७३ ।
४. तत्रैव ५।६० ।
५. द्र० तत्रैव १९।२० ।
६. तत्रैव ९।४, तु० कुमारसम्भवम् ५।४१ ।
७. तत्रैव ९।५–६ ।

भारतीयपरम्परायामात्यन्तिकञ्च सौन्दर्यं ब्रह्मण्येव । 'तस्यैव भासा सर्वमिद विभाति' इति दृशा दशरथोक्तं दशमसर्गे वृद्धावस्थायाः स्वरूप येन निर्वेदो वैराग्यं वा जायते । अतोऽनन्तरञ्च तपश्चरणेन तस्यैव पूर्णसुन्दरश्रीभगवदुपलब्ध्योवान्तिमं सौन्दर्यमुपलभ्यते । य दृष्ट्वा लब्ध्वा च नैवेतरस्य वाञ्छा चिन्ता वोपजायते सौन्दर्यस्य । स एवानन्दी भवति यश्च तमद्भुतं सौन्दर्यं भुनक्ति । यतो हि, 'रसो वै स. । रसं ह्येवाय लब्ध्वानन्दी भवति ।' पूर्णसुन्दरश्री. स एव जगति चेतनाचेतनयोः सौन्दर्यस्रष्टा । क्रीडयैव निर्मायैतत्सुन्दरं जगत्तत्रैव रमते । ज्ञातारस्तत्त्वधिया तमद्भुत सौन्दर्यधामान पश्यन्ति । तत्तु बलवदिन्द्रियग्रामजयानन्तरमेवोपलभ्यते । अत एव निरस्तसमस्तकल्मषेण पुण्यभाक्त्वेन भवितव्यम् । रावणमुपदिशन् अङ्गद.—

इन्द्रियाणि मतिमन्तमजय्य योजयन्ति विषयेषु विजित्य ।
तद्वशित्वमवधूय यशोभिर्यस्तनोति भुवनानि स वीर. ॥
यौवन चलमपायि शरीर गत्वर वसु विमृश्य विसृष्ट ।
अन्यजन्मगततिक्तविपाक दृष्टसौम्यमपि कर्म न धत्ते ॥[1]

× × ×

रूपवन्तमपि हन्ति जरार्ति· सङ्गमे महति चास्ति वियोगः ।
याति दार्धमपि विच्युतिमायु पुण्यमेव निरपायि भजध्वम् ॥

इत्ययमपरमपि सौन्दर्यपक्षमुपस्थापयति । पूर्ववर्णितसौन्दर्यस्य चास्य च तदेवान्तरं यन्मधुशर्करयोरिति । कुमारदासोऽपि बाह्यसौन्दर्येणान्तर्यमुद्भासयंस्तस्यान्तिमे पूर्णसौन्दर्यधाम्नि परब्रह्मणि प्राप्तावेव परिणतिं करोति । यतो हि बार्धक्ये—

मन्दशक्तीन्द्रियश्च्योतल्लालाविच्छुरिताधर. ।
अस्फुटस्मृतिचेष्टाभिर्बालव्रतमिवाचरन् ॥

× × ×

बार्धक्ये धर्मतो मूढ स्वदेहवहनेऽपि स ।
विधित्सन्नप्यशक्तिष्टस्तप कीदृग्विधास्यति ॥[2]

अत एव चरमसौन्दर्यो भगवानधोक्षज सकलसौन्दर्यकलानिधान. पूर्णधामा परमात्मैव सेवितव्यः । कुमारदासोऽपि भूयोभूयस्तमेव भजति—

तस्मै स्मरणमात्रेण तुभ्य सद्यस्तमोनुदे ।
नमः सत्त्वमधिश्रित्य त्रैलोक्यं परिरक्षते ॥[3]

---

१. तत्रैव १५।१८–२१ ।
२. तत्रैव १०।१२-१९ ।
३. २।१६ तत्रैव ।

•••

# संस्कृतं शिल्पशास्त्रम्

ति० गो० अनन्तसुब्रह्मण्यम्

व्याकरणशिरोमणि., विद्वान् सङ्गीतभूषणम्, डिप्-इन्-टीच्, उपानुसन्धायक,

केन्द्रीयसंस्कृतविद्यापीठे, तिरुपतिः, आन्ध्र ।

चतुर्णा वेदानामुपवेदा अपि चत्वार एव । "ते तु ऋग्वेदस्य आयुर्वेद उपवेद. । यजुर्वेदस्य धनुर्वेद उपवेद । सामवेदस्य उपवेदो गान्धर्ववेद । अथर्ववेदस्य चोपवेद स्थापत्य- [शिल्प] वेद इति प्राचीनपरम्परया उच्यते । स्थापत्यकर्मणोऽन्यानि नामानि प्राचीनै.— 'वास्तुशास्त्रम्, शिल्पशास्त्रम्'' इत्यादीनि उक्तानि । कालक्रमेण परिवर्तमान जगति सस्कृते कलाविषयकाणि त्रीण्येव शास्त्राणि प्राधान्येन प्राशस्त्य भजन्ते । वास्तुशास्त्रम्, शिल्पशास्त्रम्, चित्रलेख्यशास्त्रञ्च । एतानि त्रीण्यप्यावश्यकानि । केचन पण्डिता वास्तुशास्त्रं शिल्पशास्त्रान्तर्गतमिति मन्यन्ते । अयमभिप्राय प्राचीनतम इति वक्तु शक्यते 'विज्ञानप्रपञ्चे सर्वाणि शास्त्राणि प्रत्येकस्थान भजन्ते' किन्तु एतादृशरीत्या विभक्तु पार्यते—

१—वास्तुशास्त्रम्—भवनम् [जनभवनम्, राजभवनम्, देवभवनञ्च] ।

२— शिल्पशास्त्रम्—प्रतिमाविग्रहनिर्माणम् ।

३—चित्रशास्त्रम्—आलेख्यम्, लेपनम्, छायाचित्रमित्यादि ।

अत्राधुना शिल्पशास्त्र प्रत्यस्माभिरालोडनीयम् । शिल्पशास्त्रमित्युक्ते शिल्पकला इत्यपि ग्रहीतु शक्या । शिल्पकला तावत् प्रतिमाविग्रहनिर्माणकर्म । प्रतिमानिर्माण तु पूजार्थमेव कल्प्यते । पूजादिकर्म कर्तु प्रतिमा तु आवश्यकी भवति । प्रतिमा नानारूपा, अभिमत-देवतारूपा च ।

**गीतायाम्**—

यो यो या या तनु भक्त श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचला श्रद्धा तामेव विदधाम्यहम् ॥ इति ।

अनेन भगवद्वचनेन प्रतिमाविग्रहपूजन वेदकालादारभ्य स्थितमिति ज्ञायते ।

प्रतिमाविग्रहपूजनमज्ञानामेव—

शिवमात्मनि पश्यन्ति प्रतिमासु न योगिनः ।
अज्ञाना भावनार्थाय प्रतिमाः परिकल्पिता' ॥ इति वचनाज्ज्ञायते ।

प्रतिमाकल्पन तु पाषाण–लोह–मणि–मृन्मयरूपमेव । पाषाणे प्रतिमाकल्पनस्य शिल्पशास्त्रज्ञानमावश्यकं भवति । प्रतिमानिर्माणार्थं शिलासञ्चयनकाले शिलापरीक्षा कर्तव्या । तदा केचन मन्त्रा वक्तव्या सन्ति—

मन्त्रेणानेन चैतासामभिषेकं समाचरेत् ।
हिरण्यवर्णाः पावन्यः शुचयो दुरितच्छिदः ॥

इति समराङ्गणसूत्रधारवास्तुशास्त्रे शिलान्यासविधावुच्यते। अत. शिल्पिन सस्कृतस्य ज्ञानमनिर्वचनीयम्।

किञ्च—

अशास्त्रज्ञमकर्मज्ञं स्थपतिं य प्रयोजयेत्।
न तस्य वास्तु सिद्ध्येत सिद्धमप्यसुखावहम्॥
( समरा० शा० ८ )

वास्तुशास्त्रे यज्ञवेदीत्यादिनिर्माणकर्मणि कर्तव्ये वेदमन्त्राणामर्थज्ञानमपेक्ष्यते। तज्ज्ञातृभिरेव यज्ञवेदयो निर्मातु शक्या॰। अत एव च शिल्पिना सस्कृतभाषाज्ञानमनुपमम्। समराङ्गणशास्त्रे स्थपतिलक्षणावसरे—

शास्त्र कर्म तथा प्रज्ञा शीलञ्च क्रिययान्वितम्।
लक्ष्यलक्षणयुक्तार्थशास्त्रनिष्ठो नरो भवेत्॥
समुद्र गणितञ्चैव ज्यौतिषं छन्द एव च।
शिराज्ञान तथा शिल्पं यन्त्रकर्मविधिस्तथा॥

इत्युच्यते। ( २, ३ )

अत्र स्थपतीत्युक्ते दारु-पाषाण-लोह-मृन्मयप्रतिमाविग्रहकारिण एव स्वीकर्तव्या.। स्थपतीना शिल्पिनाञ्च सर्वेषु शास्त्रेषु प्रज्ञा अनिरुद्धा।

पुराणेषु च प्रतिमाया लक्षणध्यानादय उक्ता दृश्यन्ते। मत्स्य-अग्नि-स्कान्द-गरुड-लिङ्ग-भविष्यत्-विष्णु [विष्णुधर्मात्तर] आदिषु बहुत्र बहुशो वर्तन्ते।

१—लिङ्गपुराणे—लिङ्गलक्षणम्, अ० २६३।
२—कुण्डादिप्रमाणम्—अ० २६४।
३—अधिवासनविधि —अ० २६५।
४—प्रतिष्ठाप्रयोग —अ० २६६।
५—देवतामानम्—अ० २६७।

**एते विषया अग्निपुराणे**

विष्णोर्द्वादश रूपाणि, कूर्मादिदशावतारमूर्तिलक्षणानि निर्दिश्यते। अपि च शालग्रामाणा लक्षणानि च प्रतिपाद्यते।

आगमेषु—प्रतिमाया लक्षणमूर्तिस्वरूपादय. प्रतिपादिता। कालिकागमे ७५ तमे पटले वास्तुशास्त्र दृश्यते।

तन्त्रेष्वपि—शैव-वैष्णव-शाक्त-पाञ्चरात्रतन्त्रेष्वपि नानाप्रकारप्रतिमाप्रमाणनिर्माणमपि दरीदृश्यते।

**शिल्पशास्त्रम्**

शिल्पग्रन्था द्विविधा वर्तन्ते—दाक्षिणात्यशिल्पशास्त्रम्, औत्तराहवास्तुशास्त्रमिति, किन्तु सामान्यतो द्वयोरपि वास्तुशास्त्रमिति वक्तु शक्यते, तथापि कतिचिद्भेदेन भिन्न भवति।

द्राविडदेशेषु—

मानसार·, अगस्त्यस्य सकलाधिकार., काश्यपस्य अंशुमद्भेद, श्रीकुमारस्य शिल्पशास्त्रम्, मयासुरस्य मयमतमेते ग्रन्था प्रसिद्धा.।

उत्तरदेशेषु—

विश्वकर्मवास्तुशास्त्रम्, समराङ्गणसूत्रधार., मण्डनस्य वास्तुशास्त्रमेतानि विख्यातानि। वास्तुशास्त्रेषु भवननगरनिर्माणविषया प्रतिपादिता विलसन्ति। अत शिल्पिना स्थपतीनाञ्च वेदशास्त्रागमपुराणेतिहासादीना ज्ञानमावश्यक भवति। अत एव शिल्पवास्तुशास्त्रयो. संस्कृतभाषाज्ञानमनिर्वर्णनीयम्।

अपि च, ईशानशिवगुरुदेवपद्धति, हरिभक्तिविलास., अभिलषितार्थचिन्तामणि [मानसोल्लास], रघुनन्दनमठप्रतिष्ठापद्धति, हेमाद्रेश्चतुर्वर्गचिन्तामणि, कृष्णानन्दस्य तन्त्रसार इत्यादिग्रन्थेषु प्रतिमालक्षणम्, तदुपयोगसामग्र्यश्च विशेषतया दृश्यन्ते। एतेषु ग्रन्थेषु पौराणिकागमतान्त्रिकसम्बद्धान्यविषया अपि वर्णिता दृष्टिपथमवतरन्ति।

उपरि च चित्रकला, लेख्यलेपनसामग्री, प्रस्तरकला, वर्णनिर्लेपनमित्यादयोऽपि वर्णितास्सन्ति। शिल्पशास्त्रविदुषा संस्कृतभाषाज्ञानेन भौगोलिकप्रान्तीयशिल्पज्ञानमपि कर्तुं शक्यते। अपि च बौद्धजैनमतप्रतिमालक्षणमपि ज्ञातुमुपयुज्यते। अनेन ज्ञानेन गान्धार–नालन्दा–अमरावती–सारनाथ–मथुरेत्यादिदेशेषु विकसिता कलाविशेषनैपुण्यविषयानपि ज्ञातु समर्था भवन्ति। प्रतिमानिर्माणस्थापत्यशिल्पकर्मशास्त्रम् ईशवीयशताब्दीत. पूर्वमेवासीदिति ज्ञायते। वेदकालादारभ्य अस्तीति वक्तुञ्च पार्यते। गुप्तकालेऽपि च बहूनि शिल्प-वास्तुशास्त्राणि आसन्निति श्रूयते।

किञ्च, प्रतिमाविग्रहनिर्माणविषये कश्चिद्विषयोऽवगन्तव्योऽस्ति, शिला परीक्ष्यैव प्रतिमानिर्माणाय स्वीकर्तव्या। शिला तावद् द्विधा वर्तते—प्रशस्तशिला, अप्रशस्तशिला चेति।

प्रशस्तशिलाया लक्षण विष्णुधर्मोत्तरे उच्यते—

'एकवर्णा समा स्निग्धा निमग्ना च तथा क्षितौ।
घातातिमात्रस्फुरणा दृढा मृद्वी मनोहराम्॥
कोमला सिकताहीना प्रिया दृङ्मनसोरपि।
सरित्सलिलनिर्धूता पवित्रा तु जलोषिताम्॥
द्रुमच्छायोपगूढा च तीर्थाश्रयसमन्विताम्।
आयामपरिणाहाढ्या ग्राह्यां प्राहुर्मनीषिण'॥

(१०-३-५)

अप्रशस्तशिलाया लक्षणम्—

"अग्राह्या ज्वलनालीढा तथा भास्कररश्मिभि।
अन्यकर्मोपयुक्ता च तथा क्षाराम्बुसयुताम्॥

अत्यन्तोपहता　　रूक्षामपुण्यजनसेविताम् ।
तिलैः सम्भूषिता या तु विचित्रैर्बिन्दुभिश्चिता ॥
रेखामण्डलसङ्कीर्णां　विद्रा　विमलसयुताम् ॥"
( ३-९०-६-७½ )

किञ्च, शिलापरीक्षणविषयेषु केचन लेपनप्रकारा अपि सन्ति ।

विवेकविलासे—

निर्मलेनारनालेन　पिष्टया श्रीफलत्वचा ।
विलिप्तेऽश्मनि काष्ठे वा प्रकट मण्डलं भवेत् ॥

शुद्धपुरातनदध्ना, अथवा आमलमण्डेन, बिल्वफलरसेन च सकलस्य शिलोपरि लिप्यते चेत्, तदा शिलोपरिस्थधूलीपटल निष्कास्यते । एतादृशरीत्या नानोपाया सन्ति । अपि च दारु-परीक्षापि बृहत्सहिता-भविष्यत्-मत्स्य-विष्णुधर्मोत्तरादिपुराणेषु दृश्यन्ते । प्रतिमानिर्माणविषये दारुमत्रप्रयोगो विरल·, तथापि यत्र तत्र किञ्चिद् वर्तते । देवदारु-चन्दन-शमी-मधूकवृक्षादिभि. क्रियमाणाया प्रतिमाया ब्राह्मणै प्रतिष्ठ क्रियते चेत् प्राशस्त्य लभते । अश्वत्थ-खदिर-बिल्व-वृक्षादिभि क्रियमाणाया प्रतिमाया क्षत्रियै प्रतिष्ठा कर्तव्या । खदिर-सिन्धुक-स्यन्दनवृक्षै क्रियमाणाया. प्रतिमाया वैश्यै. प्रतिष्ठा कार्या । तिन्दुक-केसर-सर्ज-अर्जुन-आम्र-शालादिभि क्रियमाणाया· प्रतिमाया शूद्रै प्रतिष्ठा श्लाघ्या । दारुप्रतिमाप्रतिष्ठा प्राचीनतमा विरला च । अद्यापि जगन्नाथ-बलराम-सुभद्राप्रभृतिमूर्तयो दारुमयरूपा । एता दारुरूपा मूर्तयो द्वादश-वर्षात् पर पुनर्नवीकृत्य प्रतिष्ठापनीया । मद्रास्प्रान्तीयतिरुक्कोयिल्लूर्क्षेत्रस्थत्रिविक्रममूर्ति-र्दारुमयी ।

प्रासादनिर्माणे दारूणामुपकार उपयोगोऽनिवर्चनीय. । पाषाणयुगाद् दारुयुगमर्वाचीन मेव ।

**मृत्तिकाप्रतिमानिर्माणम्**

यथा दारु पाषाणाभ्या प्रतिमा निर्मीयते, तथैव मृत्तिकयापि प्रतिमानिर्माणं प्रसिद्धम् । दारुप्रतिमानिर्माणे तक्षकस्य कौशलं द्रष्टु शक्यम्, तथैव मृत्तिकाप्रतिमानिर्माणेऽपि शिल्पिन· कौशल द्रष्टु शक्यते । मृत्तिकाप्रतिमानिर्मातुर्नाम 'कुम्भकार' इति ।

अय कुम्भकारो घटादिनिर्माता न, पुराणेषु दृश्यते—विश्वकर्मण शूद्रभार्यायामुत्पन्ना नवकलाकारा इति । ते तावत्—१ मालाकार, २ कर्मकार, ३ शङ्खकार, ४ कुबिन्दक, ५. कुम्भकार, ६. कांस्यकार, ७ सूत्रधार, ८ चित्रकर, तथा ९. सुवर्णकार इति । एतेषु कर्मकारिषु 'कुम्भकार' इति मृन्मयशिल्पकारस्य नाम ।

सामान्यतो मृन्मयप्रतिमानिर्माणे द्वौ भागौ स्त·—स्थूलरूपप्रतिमानिर्माण सूक्ष्मरूपप्रतिमा-निर्माणञ्च । स्थूलरूपप्रतिमानिर्माणमपि द्विधा वर्तते–शुद्धमृन्मयीप्रतिमा, मिश्रा मृन्मयीप्रतिमा इति च मिश्रा इत्युक्ते मृदा सह अन्यानि सिकतादिवस्तूनि सम्मिश्रयन्ते ।

शुद्धा मृन्मयी त्वत्यन्तप्राचीनस्थानम् आवहति । अद्याप्युत्तरे देशे दीपावलीमहोत्सव-समये गणपति-लक्ष्म्योर्मृन्मयी प्रतिमा कृत्वा पूजयन्ति जनपदस्था जना, बगलादेशेऽपि महाकाली-

प्रतिमा मृन्मयी कृत्वा पूजयन्ति । मृन्मयप्रतिमानिर्माणपद्धतयो हयशीर्षपाञ्चरात्रे समराङ्गणवास्तु-शास्त्रे च दृश्यन्ते । हरिभक्तिविलासे १८ तमे विलासे—

"मृत्तिकावर्णपूर्वेण गृह्णीयुस्सर्ववर्णित· ।
नदीतीरेऽथवा क्षेत्रे पुण्यस्थानेऽथवा पुन· ॥
पाषाणशर्करालोहचूर्णानि समभागत ।
मृत्तिकाया प्रयोज्याथ कषायेण प्रपीडयेत् ॥
खदिरेणार्जुनेनाथ सर्ज्जश्रीवेण्टकुङ्कुमै ।
कौटजैरायसै स्नेहे दधि-क्षीर-घृतादिभि ॥
आलेख्य मृत्तिका तैस्तै स्थाने स्थाप्य पुन पुन· ।
मास पर्युषित कृत्वा प्रतिमा परिकल्पयेत्" ॥

नदीतीरात्, शस्यक्षेत्रात्, अथवा पावनस्थानात् [ वल्मीकात् ] वा मृद स्वीकृत्य सम-भागेन पाषाणचूर्णेन, अथवा सिकतया च तथा लोहचूर्णेन वा सम्मिश्र्य, पुन खदिर-अर्जुन-सर्ज-श्रीवेण्ट [ वेतस ]-कुङ्कुम-कौटज-आयसादिवृक्षाणा रसेन सह दधि-दुग्ध-घृते-त्यादिस्नेहद्रवेण च सम्यङ् मिश्रीकृत्य, सम्पिष्य च पिण्डरूप कृत्वा एकमासपर्यन्त स्थापयित्वा तदनन्तर प्रतिमा कर्त्तव्या इति प्रतिपाद्यते ।

प्रतिमानिर्माणार्थं पञ्चद्रव्याणि प्रसिद्धानि—दारु-मृत्तिका-शिला [ पाषाण ]-धातु-रत्नादीनि । इतोऽपि मिश्रद्रव्यमपि उपयुज्यते । मृत्तिका-लोह-सुधादिभिर्द्रव्यैस्सम्मिश्र्य प्रतिमानिर्माणकार्यमद्यापि भारते शिल्पिभि क्रियते ।

प्रतिमानिर्माणप्रतिपादका ग्रन्था बहव सस्कृतभाषायामेव सन्ति अत शिल्पशास्त्र-ज्ञानार्थं सस्कृतज्ञानमावश्यकम् । किञ्च, प्राचीनभाषासु सस्कृतमेव प्रथमस्थानम्, मातृस्थानञ्चा-वहति ।

अपि च गृह-भवन-देवालय-यज्ञवेदिकादिनिर्माणविषयान् प्रतिपादयन्ति हयशीर्ष-समराङ्गण-मत्स्यपुराणादिग्रन्था । सर्वेषु ग्रन्थेषु शिल्प-स्थापत्य-लेख्य-लेखनादिविषयो दृश्यन्ते ।

किञ्च, प्रतिमानिर्माणे मुख्यतया वेदाना ज्ञानमावश्यकम् । देवतानिर्माणविषये वेदप्रति-पाद्यानि स्वरूप-ध्यान-मुद्रा-आयुध-वस्त्रादिलक्षणानि आवश्यकानि ।

समराङ्गणसूत्रे—

"पारम्पर्य कौशल सोपदेश शास्त्राभ्यासो वास्तुकर्मोद्यमो धी· ।
सामग्रीय निर्मला यस्य सोऽस्मिश्चित्राण्येवं वेत्ति यन्त्राणि कर्तुम् ।

इति यन्त्रनिर्माणविषय उच्यते ।

हयशीर्षे चित्रकला प्रति—

"चित्र हि सर्वशिल्पाना मुखं लोकस्य च प्रियम्" इति । सर्वशिल्पस्थापत्यवास्तु-शास्त्राणा मूलभूत चित्ररेखाज्ञानम् । प्रथमत चित्रम्, रेखाञ्च विलिख्यानन्तरमेव प्रतिमानिर्माणे प्रयत्नः कार्य· ।

उपरि च शिल्पशास्त्रेपु बहूनि सङ्केतनामानि सस्कृतभाषायामेव सन्ति । अत· सस्कृत-ज्ञान शिल्पशास्त्रस्य मूलभूत भवति ।

प्रतिमानिर्माणविषये ज्ञातव्याशा बहव प्रतिमाया निर्माणे, तस्यास्स्वरूपम्, आसनम्, मुद्रा, आयुधानि, भूषणानि इत्यादीनि ज्ञात्वैव कर्तव्या प्रतिमा ।

तत्प्रतिपादकग्रन्था बहव सस्कृतभाषायामेव सन्ति । अत एवोच्यते सस्कृतज्ञानं विना एतेषा ज्ञान न सम्भवति ।

आसनविषये पातञ्जलयोगसूत्रे—दण्डासनम्, सोपाश्रयासनम्, पर्यङ्कासनम्, समसस्थानादीनि । ज्ञानासनम्, वज्रासनम्, आलीढासनम्, अथ सुखासनादीनि बहूनि आसनानि दृश्यन्ते । पद्मासनस्य लक्षण तु—

"ऊरुमूले वामपाद पुनस्तद्दक्षिण पदम् ।
वामोरौ स्थापयित्वा तु पद्मासनमिद स्मृतम्" ॥

एतादृशरीत्या सर्वेषामासनाना लक्षणमुच्यते । तत्तत्प्रतिमानिर्माणे तत्तद्देवतासनादिज्ञान-मावश्यक भवति । तज्ज्ञानसम्पादनार्थं सस्कृतग्रन्थानाम्, योग–गणित–ज्योतिष–नाटचशास्त्राणा ज्ञानमनिवार्यम् ।

तथैव आयुधविषयेष्वपि देवताना नानाविधायुधानि दृश्यन्ते । यस्या देवताया यदा-युधमिति सम्यग् ज्ञात्वैव प्रतिमा कर्तव्या । गदायुधे नानाप्रकारास्सन्ति । यथा—विष्णोर्गदाया नाम 'कौमोदकी' इति, तथैव शङ्खस्यापि वर्तते—

"पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः" इति ।

एतेन निघण्टोर्ज्ञानमपि शिल्पिनो मुख्य भवति ।

अपि च खड्गविषयेऽपि तथैव ।

विष्णो खड्गस्य नाम 'नन्दक' इति, रावणस्य खड्गस्य नाम 'चन्द्रहास.' इति ।

धनुर्विषयेऽपि च—

शिवधनुषो नाम 'पिनाक' इति, विष्णोर्धनुर्नाम'शार्ङ्गम्' इति। मन्मथस्य धनुष. स्वरूपम् इक्षुरिति· । अत एतासा देवतानामायुधनामादिविशेषज्ञान प्रत्येकतया ज्ञातव्यमेव ।

हलविषये नानारूपाणि सन्ति—

हली, सीरी, लाङ्गलीति, एतद्विना बलरामस्यायुध हलम् इति श्रूयते ।

उपरिनिर्दिष्टायुधेभ्य परमन्ये बहवो नानारूपा आयुधविशेषा. सन्ति ।

तथैव भूषणान्यपि। मुख्यतया हिन्दुदेवताना भूषणादिविषयेषु समीचीननिष्कृष्टज्ञान-मावश्यकम् । वराहमिहिरस्य बृहत्सहितायाम्—

"देशानुरूपभूषणवेषालङ्कारमूर्तिभि· कार्या"

इति दृश्यते ।

नाटचशास्त्रे—

"भूषणाना विकल्पश्च पुरुषस्त्रीसमाश्रयम् ।
नानाविध प्रवक्ष्यामि देशजातिसमुद्भवम्" ॥ इति ।

अतो नाटचशास्त्रस्य ज्ञानमपि आवश्यकम् । स्त्रीपुरुषदेवताना भेदेन भूषणादीनामपि भेदो भवति । भूषणादिज्ञानार्थं नाटचशास्त्रज्ञानमनुपमम् । यथा मानवाना वर्णाश्रमधर्मा विधीयन्ते, तथैव देवतानामपि सन्ति । ब्रह्मचारिरूपेण ब्रह्मा, यतिरूपेण शिव, राजस्वरूपेण विष्णु, सेनानीरूपेण स्कन्दो निर्मातव्य ।

किञ्च, स्त्रीदेवताविषये अधिकश्रद्धा आवश्यकी । परिधानानि, अलङ्कारभूषणानि एतेषा प्रत्येकविशेषज्ञान प्रतिमानिर्माणे मुख्यम् ।

कर्णभूषणम्, नासाभूषणम्, गलभूषणम्, शिरोभूषणम्, वक्षस्स्थलभूषणम्, कटिभूषणम्, पादभूषणम्, बाहुभुजभूषणाना ज्ञान कर्तव्यम् । तत्रैव केशविन्यासेऽपि केशबन्धादिविषयेष्वपि ज्ञानमावश्यकम् । एतेषा ज्ञानार्थमागमशास्त्राणि अध्येतव्यानि । आगमास्तु शैव-वैष्णवभेदेन बहवस्सन्ति । आगमास्सर्वेऽपि सस्कृतभाषायामेव सन्ति ।

अथ च एकोनविशतिमुद्रा विष्णोरुच्यन्ते ।

तन्त्रसारे—

एकोनविंशतिर्मुद्रा विष्णोरुक्ता मनीषिभि ।
शङ्खचक्रगदापद्मवेणुश्रीवत्सकौस्तुभा ॥
... ... शिवस्य दशमुद्रिका ।
लिङ्गयोनित्रिशूलाख्या मालेष्टामी मृगाह्वया ॥
सूर्यस्यैकैव पद्माख्या सप्तमुद्रा गणेशितु ।
लक्ष्मीमुद्रार्चने लक्ष्म्या वाग्वादिन्याश्च पूजने ॥
अक्षमाला तथा वीणा व्याख्या पुस्तकमुद्रिका ।
सप्तजिह्वाह्वया मुद्रा विज्ञेया वह्निपूजने ॥ इति

अपि च ब्रह्ममूर्तिलक्षणानि, वैष्णवमूर्तिलक्षणानि शैवमूर्तिलक्षणानि च ज्ञातव्यानि । तेषा परस्परभेदा बहवस्सन्ति । शिल्पशास्त्रेषु देवतासम्बन्धिनो बहवो विषया उक्तास्सन्ति । शिल्पशास्त्रम्, वास्तुशास्त्रम्, स्थापत्यशास्त्रम्, आलेख्यशास्त्रम्, लेपनशास्त्राणा ग्रन्था सस्कृतभाषायामेव सन्ति, संस्कृतभाषा विना न कयापि भाषया उपनिर्दिष्टशास्त्रज्ञानं लब्धुम्, ज्ञातु वा शक्यम् । एतेषु शिल्पशास्त्रस्य सस्कृतज्ञानमत्युपयोगि, अनिर्वचनीयञ्चानिर्वर्णनीयमपि, प्रशंसनीयञ्च । शिल्पकला दैवीकला । अतः दैवानुग्रहोऽपि आवश्यको भवति । दैवानुग्रहार्थम् आचारानुष्ठानादिकं मुख्यम् । तदर्थं च सर्वशास्त्रपुराणेतिहासाना ज्ञानञ्च आवश्यकम् । एतेषां शास्त्राणा ज्ञानसम्पादनार्थं सस्कृतभाषाज्ञानमपरिहार्यम् । शिल्पशास्त्रस्य संस्कृतस्य च सम्बन्धोऽन्योऽन्याश्रित इति शम् ।

# वैष्णवदर्शनेषु भक्तिस्वरूपविमर्शः

श्रीराजेन्द्रचन्द्र., वैष्णवदर्शनतीर्थः,

संस्कृतकालेज, नवद्वीपम् ( नदिया ) पश्चिमवङ्गप्रदेशः ।

परमकारुणिकेन श्रीभगवता नृणा परमनि श्रेयससाधनीभूतास्त्रयो योगा निरूपिता· । उक्तं हि भगवता श्रीमद्भागवत एकादशस्कन्धे—

योगास्त्रयो मया प्रोक्ता नृणा श्रेयो विधित्सया ।
ज्ञान कर्म च भक्तिश्च नोपायो नास्ति कश्चन ॥ इति ।

अनेन त्रयाणामेव नि.श्रेयससाधनत्व प्रतिपादितम् । अष्टाङ्गयोगस्त्वेतत्त्रयान्तर्गत एव, अतो नोपायाना त्रिविधत्वे हानि । तन्मध्ये कर्मयोगो न साक्षान्निश्रेयसहेतु, "नास्त्वकृत. कृतेनैक·, "प्लवा ह्येते दृढा यज्ञरूपा.,"

यथा दृढै कर्ममयै क्रतुभिर्नाम नो निभै. ।
विद्यामान्वीक्षिकी हित्वा तितीर्षन्ति भवार्णवम् ॥

इत्यादिश्रुतिस्मृतिभि. कर्मणो मोक्ष प्रत्यसाधनत्वप्रतिपादनात् । किन्तु "तमेतमात्मान वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इत्यादिश्रुत्या चित्तशुद्धिद्वारा ज्ञानभक्त्योरुप-कारकतया परम्परयैव मोक्षसाधनत्व कर्मण । 'निर्भेदब्रह्मानुसन्धानरूपं ज्ञान स्वतो मोक्षसाधनम्' इत्यत्र नास्ति कोऽपि विवाद । तथा भक्तियोगोऽपि मोक्षसाधनतयाऽङ्गीकृत –"भक्तिरेवैन नयति, भक्तिरेवैन दर्शयति, भक्तिवश पुरुषो भक्तिरेव भूयसीति", "विज्ञानघनानन्दघन-सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति" ।

"भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वत ।
ततो मा तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥
भक्त्याहमेकया ग्राह्य· श्रद्धयात्मा प्रिय सताम् ।
भक्ति. पुनाति मन्निष्ठा स्वपाकानपि सम्भवात् ॥"

इत्यादिश्रुतिस्मृतिभि ।

अद्वयवादिमते "एकमेवाद्वितीयम्, तत्त्वमसि" इत्यादि तत्र धर्मादिकमुद्भावयति रज्जु-रूपाधिष्ठानज्ञानेन च यथाऽज्ञाननिवृत्त्या तत् कार्यमपीहापि निवर्तते । तथा तत्रैवाद्वयब्रह्मणि अविद्यारोपितो द्वैतप्रपञ्च. पुनर्ब्रह्मज्ञानेन निवर्तते । अधिष्ठानतत्त्वसाक्षात्कारनिवर्तितत्त्वादकार्य-प्राप्तिज्ञानानाम् । एवमुताद्वयवादिमतेऽविद्यानिवृत्त्या जीवब्रह्मणोर्भेदापगमेन तयोरैक्यसिद्धौ भक्तिरपि स्वतो निरस्ता भवति, न हि कश्चित् स्वयमेव स्वं भजते ।

**भेदवादिनां मते—**

नित्यो नित्याना चेतनश्चेतनाना-
मेको बहूना यो विदधाति कामान् ।

तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषा सुखं शाश्वती नेतरेषाम् ॥
अजामेका लोहितशुक्लकृष्णा
बह्वी प्रजा.''''भुक्तभोगामजोऽन्य ॥
''द्वा सुपर्णा सयुजा सखाया
समानं '' ''परिषष्वजाते,
तयोरन्य ' ॥

इत्यादिश्रुतिभिर्जीवेशयोर्भेदावगमात् तेषा मते भगवत्प्राप्तौ परमोपायभूता भक्तिरपि सुस्थिरैव भवेत् । केवलाद्वयमते च ब्रह्म नि शक्तिकमेव, किन्तु द्वैतिभि— ''परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'' इत्यादिश्रुत्या ब्रह्मणि स्वाभाविकी नित्या शक्तिरेवाङ्गीक्रियते अतस्तन्मते शक्तिमदेव परतत्त्व भवति, किन्तु वैष्णवाचार्याणा मते शक्तिस्वीकारेऽपि शक्तिमदाश्रितैव शक्ति स्वतन्त्रा, शक्तिशक्तिमतोश्चाभेदात् स्वरूपान्तरभूतैव शक्ति । एव च न ''एकमेवाद्वितीयम्'' इत्यादिश्रुतिप्रतिपादिताद्वयत्वहानि ।

एतदभिप्रेत्यैवोक्त श्रीमता जीवगोस्वामिपादेन ''अद्वयत्वमूलास्य स्वयसिद्धतादृशातादृशतत्त्वान्तराभावात् सुशक्त्यैकसहायत्वात् परमाश्रय त विना तासामसिद्धत्वाच्च''इति । जीवलक्षण तत्त्वाद्धव तादृश चिद्रूपमपि न स्वय सिद्धम्, मायालक्षण तत्त्वान्तरस्थ तादृशमचिद्रपमपि न स्वयसिद्धम्, अतस्तादृशातादृशतत्त्वान्तराभावादद्वयत्व सिद्धम् । एव च एतन्मते जीवेशयोश्चिल्लक्षणया जात्यैवाभेद , स्वरूपतस्तु भेदो वर्तते, अत एवाभेदेन चिन्तयितुमशक्यत्वाद् भेद । भेदेन च चिन्तयितुमशक्यत्वादभेद , तौ चाचिन्त्याविन्त्यचिन्त्यभेदाभेदवाद एव श्रीजीवगोस्वामिपादेन स्वीकृत । एवं च न भेदपराणामभेदपराणा वा श्रुतीना व्याहृति ।

किञ्च, जीवेशयोर्भेदस्य नित्यत्वे स्थिते तन्मते भक्तिरपि नित्यैव भवति, अतस्तन्मते मोक्षदशायामपि भक्तिरनुवर्तत एव, उद्धृतमुन श्रीधरस्वामिपादेन ' ' भाष्ये उक्त श्रीशङ्कराचार्यपादाना वचनम्—''मुक्ता अपि लीलया विग्रहं कृत्वा भगवन्त भजन्ते ।'' इति ।

सा च भक्तिर्नित्यापि सत्सङ्गद्वारेणाधिकाना हृदये आविर्भवति, अत' सत्सङ्ग एव भक्ते पर निदानम्—

''भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागम ।
तत्सङ्गमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः ॥
नैषा मतिस्तावदुरुक्रमाङ्घ्रि स्पृशत्यनर्थापगमो यदर्थः ।
महीयसा पादरजोभिषेकं ''' न वृणीत यावद् ॥

इत्यादिश्रीमद्भागवतचरणजातैरवगम्यते ।

अत्र च यदा सत्सङ्गमो भवेत्, तदा भवापवर्गो भवेदिति वक्तव्ये वैपरीत्येन निर्देशस्तत्र सत्सङ्गमस्यात्यावश्यकहेतुत्वे विवक्षयेति मन्तव्यम् ।

अत्रेदं विवेचनीयम्—यत्र च नोपलभ्यते सत्सङ्गस्तत्राप्याधुनिकः प्राक्तनो वा पारस्परिको वा अनुमेय एव सः । यद्यपराधो वर्तते, तदा तद्दोषेण सत्सु निरादराणा

तादृशपुरुषाणा तद्दोषेण शान्त्यर्थं सत्सङ्गस्य भक्तिशरणताया सता कृपा साहाय्यमपेक्षते। निरपराधत्वे सति तु सत्सङ्गेनैव जातपरमोत्तमदृष्टीना तेषा मनसोऽवधानाभावेऽपि तत्सङ्गमात्रमेव कारणम्। एवञ्च सत्सङ्गमन्तरेणानादिसिद्धभगवद्भजनमयतद्वैमुख्यवता जीवाना भगवदुन्मुखता नैव सम्भवेत्।

न च भगवत्कृपैव भक्त्याविर्भावे प्राथमिक कारणमिति वाच्यम्। कृपारूपश्चेतोविकारो हि परदु खस्य स्वचेतसि बोधाज्जायते। भगवतस्तु परमानन्दरूपत्वेनापहतकल्मषत्वेन च श्रुतौ जीवविलक्षणत्वसाधनात् तेजश्शालिनि सूर्ये तिमिरायोगवत् तस्मिन्नपि तमोमयदु खस्पर्शासम्भवेन तत्र कृपाया जन्मासम्भव। भगवत्कृपा त्वेवात्र मम शरणमिति दैन्यान्तिकार्भक्तसम्बन्धेनैव जायते, न तु सासारिकदु खदर्शनेन, अत सत्कृपैवाश्रयते। अन्तोऽपि तदानी यद्यपि ससारे दु खैर्न स्पृश्यत एव, अथापि कदाचिदपि स्मरेयुरतस्तेषा सासारिकेऽपि कृपा भवति, यथा श्रीनारदस्य नलकूबरमणिग्रीवयो।

एवञ्च सत्सङ्गवाहना सत्कृपावाहना वा भक्ति साधकाना हृदये विकास प्राप्नोति। तद्विकासे च क्रमभेदो वर्तते। तत्र श्रीमद्भागवते प्रथमस्कन्धे श्रीनारदोपवर्णित स्वचरित-मवलम्ब्य श्रीधरस्वामिपादप्रदर्शितोऽय क्रमो यथावन्निरूप्यते—

'प्रथम महता सेवा, ततस्तत्कृपा, ततस्तद्धर्मश्रद्धा, ततो भगवत्कथाश्रवणम्, ततो भगवति रति., तया च वेदाद्वयविवेकात्मज्ञानम्, ततो दृढा भक्ति, ततो भगवत्तत्त्वज्ञानम्, ततस्तत्कृपया सर्वज्ञत्वादिभगवद्गुणाविर्भाव' इति।

तत्र मधुसूदनसरस्वतीपादेन श्रीधरस्वामिपादाना क्रम एव प्रायो गृहीत। तथाहि उक्त तेन तदीये भक्तिरसायनग्रन्थे—

> प्रथम महता सेवा तद्दयापात्रता तत।
> तेषा धर्मेषु रतिस्ततो भक्तिगुणस्तुति॥
> ततो रत्यङ्कुरोत्पत्ति स्वरूपाधिगतिस्तत।
> प्रेमवृद्धिपरानन्दे तस्यामाक्रीडन तत॥
> भगवद्धर्मनिष्ठात स्वस्मिन् तद्गुणशालिता।
> प्रेम्णोऽथ परमाकाष्ठेत्युदिता भक्ति. भूमिका॥

एष नवक्रम. श्रीमद्रूपगोस्वामिचरणमनुसारिणा श्रीमद्विश्वनाथचक्रवर्तिपादेन किञ्चिद् विलक्षणतयोपवर्णित। तथाहि—

> सता कृपा महत्सेवा श्रद्धागुरुपदाश्रय.।
> भजनेषु स्पृहा भक्तिरनर्थापगमस्तत.॥
> निष्ठारुचिरा या सा ''रतिप्रेमानुदर्शनम्।
> हरेर्माधुर्यानुभव इत्यर्था ''' ' ' ' '' ॥ इति।

भजधातोर्भावे क्तिन् प्रत्ययेन भक्तिरिति पद सिद्धम्। तस्यार्थस्तु लक्षण '' स्वरूप-लक्षणञ्च गरुडपुराणे—

विष्णुभक्ति प्रवक्ष्यामि यया सर्वमवाप्यते ।
यथा भक्त्या हरि'''''''''''' 'केनचित् ॥
भज इत्येष वै धातु.सेवाया परिकीर्तित. ।
तस्मात् सेवा बुधै. प्रोक्ता भक्तिसाधनभूयसी ॥ इति ।

अत्र यया सर्वमवाप्यते इति तटस्थलक्षणम् । द्वितीयश्लोके च सेवाशब्देन स्वरूपलक्षणम् । पितृभक्ति. मातृभक्ति., पतिभक्तिरित्यादि काचिद् भक्तिरेव, किन्तु न पारमार्थिकी, तासामुतापारमार्थिक नश्वर फलम्—

"देवान् देवयजो यान्ति पितृन् यान्ति पितृव्रता ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥" इति ।

श्रीभगवद्भक्तेर्न तत् फलम्, पर चरम वा, अतस्ता पित्रादिभक्तयो न मुख्यतो भक्तिपदेनाभिहिता । तर्हि किं नाम भक्तिरित्याकाङ्क्षाया श्रीगोपालतापिनीस्तुति –भक्तिरस्य भजन तदीहा तत्रोपाधिनैराश्येनातस्मिन्, अत कल्पनमेतदेव नैष्कर्म्यमिति । अस्य भगवतो भजन भक्तिरिति । यथाकथञ्चित् सम्पदादिलाभेच्छया भगवद्भजनमपि भक्तिरेव, किन्तु सा सकामा एव, न निष्कामा । सकामा भक्तिश्च अग्रजैव, सा च एकाशीतिप्रकारा श्रीमद्भागवते तृतीयस्कन्धे श्रीकपिलदेवहूतिसंवादादवगम्यते । तत्र च मोक्षकामनयापि या भक्ति सा हि सात्त्विकी, श्रेष्ठा अग्रजेव स्यात्, न निर्गुणा । उक्त च श्रीधरस्वामिभि "धर्म प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणा सताम्" इत्यादिश्रीमद्भागवतीयद्वितीयपद्यव्याख्याने—"प्रशब्देन मोक्षाभिसन्धिरपि निरस्त" इति । एवं च 'भक्तिरस्य भजनम्' इत्यत्र लक्षणे उक्तम् । श्रीकृष्णस्यानुकूल्येन श्रवणादिका भक्तिर्भजनम् । तथामुष्मिन् भगवति चित्तान्तरज्ञानमुत, अत कल्प्यते अनुरज्यते अर्प्यतेऽनेनेति निरुक्ते, तादृशश्रवणादिहेतुकभाव इत्यर्थ ।

निर्गुणत्वसिद्धये आह—तदीहा सूत्रोपाधिनैराश्येनेति, कृष्णस्य फलाभिलाषराहित्येन तन्मात्रमपहाय जायमानमित्यर्थ । एषा एव भक्तिरनन्याभ्ययाभिहिता भवति, अकामेषु भक्तियोगेषु फल एवानुराग , न तु विष्णो, फलालाभेन भक्त्यागात् । शतपथश्रुतावपि—

"स होवाच याज्ञवल्क्यस्तत् "
द्वितीय प्रेम्णा हरिं भजेत्" ।

प्रेम्णा प्रीतिमात्रकामनया यदान्तर्हित तस्मै इत्यर्थ. । शाण्डिल्यभक्तिसूत्रे च "सा परानुरक्तिरीश्वरे" इति लक्षणम् । अत्रापि निष्ठामेव भक्तिरभिधीयते । देवहूतिमात्रा भगवता श्रीकपिलदेवेन चोक्तं भक्तिलक्षणम्—

सद्गुणस्तुतिमात्रेण मयि सर्वगुणाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्ति. पुरुषोत्तमे ॥
.... .... ... .... सामीप्यैकत्वमप्युत ।
दीयमान .... . . विना मत्सेवन जनाः ॥ इति ।

अन्यत्र च तेनैवोक्तम्—

देवाना　गुणलिप्सानामानुश्रविककर्मणाम् ।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ।।
अनिमित्ता भगवती भक्तिः सिध्यैर्गरीयसी ।
जरयत्याशु या कोशं निगीर्णमनलो यथा ।। इति ।

सर्वत्रैवानन्यभक्तेरेव लक्षणमभिहितम् ।

श्रीकपिलदेवप्रोक्तलक्षणमनुसृत्य श्रीमधुसूदनसरस्वतीपादेनोक्तं भक्तिलक्षणम्—

''' तस्य भगवद्धर्मं धारावाहिकता गता ।
सर्वेशे　मनसोवृत्तिर्भक्तिरित्यभिधीयते ।। इति ।

तन्मते तु प्रातिकूल्यस्यापि भक्तित्वमङ्गीकृतम् । तदुक्तिश्च "जगद्धर्मश्च भगवद्गुण-श्रवणं ननु धर्मबुद्ध्या तदनुष्ठानपर्यन्तमपेक्षितम्" ।

"तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्" इत्यत्रापि "केनाप्युपायेनेति" धर्म-बुध्यानुष्ठितेनायत्तसिद्धेन वा भगवद्गुणश्रवणेनेत्यर्थः । तेन शिशुपालादौ । नाव्याप्तिरिति । अत्र न सम्मतिः श्रीमद्रूपगोस्वामिचरणानाम् । निरुक्तं श्रीगोपालतापिन्याद्युक्तलक्षणमनुयायि च । तदुक्तलक्षणम्—

अन्याभिलाषिता शून्यं　ज्ञानधर्माद्यनावृतम् ।
आनुकूल्येन　कृष्णानुशीलनं　भक्तिरुत्तमम् ।। इति ।

अत्र च 'आनुकूल्येन कृष्णानुशीलनम्' इत्यनेन प्रातिकूल्ये भक्तित्वाप्रसिद्धेः । भजनप्रतिकूले मम भावे भक्तित्वमत्यन्तमसङ्गतमेवेति मन्तव्यम् ।

भक्तिश्चैषा ।
क्लेशघ्नी शुभदा मोक्षयुक्ताकृत् सुदुर्लभा ।
सान्द्रानन्दविशेषान्ता श्रीकृष्णाकर्षिणी च सा ।।

इति गुणषट्कयुता परमानन्दमयमपि भगवन्तमत्यर्थं प्रीणयति ।

ननु निरतिशयनित्यानन्दस्य भगवतः कथं तया सुखमुत्पद्यते, निरतिशयत्वनित्यत्वयो-र्विरोधादिति चेन्न, शास्त्रे खलु निरतिशयानन्दः नित्यत्वमुत भगवतः श्रूयते भक्तेरपि तत्प्रीति-हेतुत्वं श्रूयते, तत एव गम्यते तस्य परमानन्दैकरूपस्य स्वपरानन्दिनी स्वरूपभक्तिर्या ह्लादिनी नाम्नी वर्तते, प्रकाशवस्तुनः स्वपरप्रकाशनशक्तिवत् तत्परमवृत्तिरूपैषा भक्तिः, भगवान् स्ववृन्दे निक्षिपन्नेव नित्यत्वं वर्तते । तत् समुद्रेण च स्वयमतितरां प्रीणातीति । भगवत्प्रीणनहेतुत्वादेव न सा भक्तिः प्राकृतसत्त्वमयज्ञानानन्दरूपा, भगवतो मायावश्यत्वाश्रयणात्, स्वतः पूर्णत्वाच्च । अपूर्णो हि जीवः प्राकृतं ज्ञानानन्दम् इच्छति तदर्थमुद्यतते च । नापि भगवद्दत्तानन्दरूपया तया आनन्दस्वरूपस्य भगवतेऽतिशयासिद्धेः । नापि चैव ज्ञानानन्दरूपा, जैवयोर्ज्ञानानन्दयोः क्षोदिष्ठत्वाद् अतः स्वरूपशक्तिवृत्तिरूपैवैषा भक्तिरिति मन्तव्यम् । अत एवास्य प्रीतिरूपस्यापि भगवतो भक्त्या प्रीणनीयत्वमाह श्रीमद्भागवतम्—

यत् प्रीणनाद् बर्हिषि ''  '
.... ... ..

प्रीणेत सद्य' स हि विश्वबीज
प्रीति स्वय प्रीतिमगात् ''' ॥

परमतत्त्वसाक्षात्कारान्तकस्य मोक्षस्य परमपुरुषार्थत्व श्रीशङ्कराचार्यपादादीनामभिमतम् । अतस्तन्मते कैवल्यादिलक्षणमोक्ष एव परमप्रयोजनम् । वैष्णवाचार्याणा मतेऽपि भगवत्साक्षात्कारमात्रस्यापि यद्यपि पुरुषप्रयोजनत्वम्, तथापि तस्मिन्नपि साक्षात्कारे निरुपाधिप्रीत्यास्पदत्वस्वभावस्य प्रियत्वधर्मानुभव विना साक्षात्कारोऽप्यसाक्षात्कार एव ।

माधुर्यं विना दुष्टम् '' ' ।

अतस्तन्मते प्रीतिमयो सेवा एव परमपुरुषार्थत्वेनाभिमता । सेवासुखानुभवविना मोक्षानादरश्रवणात् । तथाहि श्रीमद्भागवते तृतीयस्कन्धे श्रीमदुद्धववचनम्—

'को न्वीशते पादसरोजभाजा
सुपूर्ण ' ' ' चतुर्ष्वपीह ।
तथापि नाह प्रवृणोमि भूमन्
भवत्पदाम्बुजनिषेवणोत्सुका." ॥ इति ।

हयशीर्षपाञ्चरात्रे च—

न धर्मं काममर्थं वा मोक्ष वा वरदेश्वर ।
प्रार्थये तव पादाब्जे दास्यमेवाभिकामये ॥

किन्तु दु खहानि. सुखावाप्तिश्च पुरुषार्थं इत्येके । तद्दास्य यथा श्रीमद्भागवते—

अशेषमक्लेशसम विधत्ते '
गुणानुवाद श्रवण मुरारे ॥ इति ।

द्वितीय तु यथा तत्रैव—

एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्ना ।
अत्यद्भुत तच्चरित सुमङ्गल गायन्त आनन्दसमुद्रमग्ना. ॥ इति ।

अतस्तत्रोक्त पञ्चमस्कन्धे—"मधुद्विट्सेवानुरक्ते मनसामभावोऽपि फल्गु" इति । "धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणा सताम्" , इत्यादिपद्यव्याख्याने 'प्रशब्देन मोक्षाभिसन्धिरपि निरस्त' इत्युक्तवता श्रीधरस्वामिपादेन तदेव च व्यक्तम् । अत्र भगवद्धर्मे मोक्षाभिसन्धिरपि कैतवम्, तात्पर्यान्तरादित्यर्थं च भगवत्स्वरूपशक्तिवृत्तिरूपा चेयं प्रीतिर्नित्या भगवदेकशरणस्य परमार्तस्य हृदये स्वत एवाविर्भूय असत्त्वातिशयेन नितरां पुष्टा भवति । साधकस्य हृदये तस्या आविर्भाव एव जन्म । तल्लक्षणं तूक्तं श्रीमता रूपगोस्वामिचरणेन—

अस्य मसृणित स्वान्तो ममत्वातिशयाश्रित. ।
भाव. स एव सान्द्रान्तो बुधैः प्रेमा निगद्यते ॥ इति ।

तथाहि उक्तम्—

अनन्यममताविष्टो''''ममता प्रेमसङ्गता ।
भक्तिरित्युच्यते भीष्म प्रह्लादोद्धवनारदैः ॥ इति ।

निरुक्तो भाव एव "सान्द्रान्तो निबिडस्वरूपप्रथमदशापेक्षाया परमानन्दात् ···· ···· ···· प्रेमा भवतीत्यर्थः" । भावश्चैवम्—

"शुद्धसत्त्वविशेषान्ता प्रेम सूर्य्यांशुसाम्यभावम् ।
रुचिभिश्चित्तमालम्ब्य कृदर्थो भाव उच्यते" ॥ इति ।

अत्र शुद्धसत्त्वं नाम भगवत.''' स्वरूपशक्तेः सस्विदाख्यावृत्तिः' । एवञ्चार्थ. कृष्णस्य स्वरूपशक्तिरूपशुद्धसत्त्वविशेषो यः स एवान्ता तन्नित्यप्रियजनाधिष्ठानकतया नित्यसिद्धस्वरूपं यस्य सः ।

प्रेमलक्षणे उक्तम्—"भाव स एव सान्द्रान्तो बुधैः प्रेमा निगद्यते ।" इति प्रेमामरतयोर्भावरूपे जाते एव—

क्षान्तिरव्यर्थकालत्व विरक्तिर्मानशून्यता ।
आशाबद्ध ससूत्कृष्टा नामगाने सदा रुचिः ॥
आसक्तिस्तद्गुणाख्याने प्रीतिस्तद्वसतिस्थले ।

इत्यादयोऽनुभवा· स्युरित्यनेनैव भावस्य परिचयो लक्ष्यते । अयमेव भावः प्रेमा स्यात्, स एव गौडीयवैष्णवाना परमपुरुषार्थ इत्यलं विस्तरेण ।



लघुग्रन्थमाला–२२

अज्ञातकर्तृकः

# जातकसारः




सम्पादकः

डॉ० मुरलीधरचतुर्वेदः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वै० सं० २०३१

# भूमिका

अथेदानीमुमामहेश्वरसंवादरूपोऽद्यावध्यमुद्रितश्च **जातकसारनामको** ग्रन्थः सम्पाद्यते। ग्रन्थस्यास्य तिस्रो मातृकाः पूर्णा विराजन्तेऽस्मिन् सरस्वतीभवनग्रन्थागारे। सम्पादनावसरे तासाम् [सं० ३६४८२, ३५२०१, ३६०३१] उपयोगः क्रमेण क० ख० ग० संज्ञया कृतोऽस्ति। अस्य ग्रन्थस्य रचनाकालविषये किमपि निर्णेतुं न शक्यते।

ग्रन्थेऽस्मिन् भावाना दशादीनाञ्च शुभाशुभफलकथनानन्तरं बालारिष्टवर्णनमस्ति। अत्र चतुर्थ-दशम-पञ्चम-नवमभावाना शुभदत्वम्, तृतीय-षष्ठ-अष्टम-लाभ-व्ययभावानामशुभप्रदत्व च वर्णितमस्ति। तथा केचन सिद्धान्ता ग्रन्थकारस्य स्वबुद्धिप्रसूता एवोपलभ्यन्ते। ये नान्यत्र कुत्रापि दरीदृश्यन्ते। यथा—'राहुकेत्वोश्च सर्वेऽपि राशय स्वगृहा. स्मृता.' इति।

अत्र मध्यपाराशरी-जातकपारिजातादिग्रन्थानामुद्धरणानि समुपलभ्यन्ते, तेषा निर्देशो मया टिप्पण्या कृतोऽस्ति। आशासे च यल्लघुग्रन्थमालाया प्रकाशनेन जन्माङ्गफलादेशे ग्रन्थोऽयं सहायको भविष्यतीति।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालय.,
वाराणसी
श्रावणपूर्णिमा
सं० २०३३

विदुषामनुचर.
**मुरलीधरचतुर्वेदः**
सरस्वतीभवनम्

# विषयानुक्रमणी

• • •

॥ श्रीगणेशाय नमः ॥

# जातकसारः

[1][ अथोमामहेश्वरसवाद ( रूपं ) जातकसारो लिख्यते ]

**श्रीदेव्युवाच**

देव देव महादेव सर्वज्ञ शशिभूषण ।
ज्योतिषार्णवपीयूष सक्षेपेण वदस्व मे ॥ १ ॥
अनुग्रहार्थं लोकस्य मयि कारुण्यवत्सल ।
दैवज्ञशास्त्रसारञ्च फलभाग वदस्व मे ॥ २ ॥

**ईश्वर उवाच**

शृणु देवि प्रवक्ष्यामि सावधानेन तच्छृणु ।
सप्तविंशतिऋक्षाणा राशयो द्वादश स्मृता ॥ ३ ॥
सूर्यादीना ग्रहाणा च नीचोच्चस्थानता स्मृता ।
राहुकेत्वोश्च [2]सर्वेऽपि राशय स्वगृहा स्मृता ॥ ४ ॥

---

१ कोष्ठान्तरगतोऽश क० ख० पु० नोपलभ्यते ।

२. ग्रन्थान्तरेषु विपरीत दृश्यते, यथा–बृहत्पाराशरहोराशास्त्रे ( ४७ अ०, ३५–३६ )
राहोस्तु वृषभ केतोर्वृश्चिक तुङ्गसज्ञकम् ।
मूलत्रिकोणक ज्ञेय युग्म चाप क्रमेण च ॥ ३५ ॥
कुम्भाली च गृहौ प्रोक्तौ कन्यामीनौ च केनचित् ।
जातकपारिजाते ( १ अ०, २८ )—
कुम्भस्त्रिकोण फणिनायकस्य तुङ्ग नृयुग्म रमणीगृहं स्यात् ।
प्रश्नभैरवे च ( जा० पा० टी० १।२८ )—
अङ्गीकृत सौम्यगृह सुहृत्त्वात् कन्याह्वय तच्च विधुन्तुदेन ।
तत्सप्तमं यत् शिखिना गृहीत मीनाह्वयञ्चेति बुधा वदन्ति ॥
स्यात् सिंहिकायास्तनयस्य तुङ्ग नृयुग्मसंज्ञं बुधदैवतञ्च ।
पुच्छस्य केतोर्गदितञ्च तुङ्ग तत्कार्मुकाख्यं गुरुदैवतञ्च ॥
ज्योतिषसारे च ( ९।१ )—
कन्याराहोर्गृह तथा । राहुर्युग्मे तु चापे च तमोवत्केतुजं फलम् ।
भावकुतूहले च ( १।९ )—
'मिथुने तमस' शिखिनो धनुषि प्रथमे बुधभे गुरुभे भवनम् ।' इत्यादिः ।

जन्मकाले तु सम्प्राप्ते लग्नं निश्चित्य पण्डित ।
तस्मिन् काले खेचराणा चारं निश्चित्य योजयेत् ॥ ५ ॥
[1]पूर्वमायु परीक्ष्यैव[2] पश्चाल्लक्षणमारभेत ।
नो चेत् तल्लक्षणज्ञाने आयासो व्यर्थमाप्नुयात् ॥ ६ ॥
[3]भावप्रवृत्तौ हि फलप्रवृत्तिः पूर्णं फल भावसमाशकेषु ।
ह्रासक्रमाद् भावविरामकाले भावस्य नाश कथयन्ति तज्ज्ञा ॥ ७ ॥
प्रथम लग्नभाव स्याद् द्वितीय धनमेव च ।
तृतीय भ्रातृभाव स्याच्चतुर्थं मातर तथा ॥ ८ ॥
पञ्चमञ्च त्रिकोण स्यात् षष्ठम शत्रुसज्ञकम् ।
जायास्थान सप्तम स्यादष्टम निधनं तथा ॥ ९ ॥
नवमञ्च त्रिकोणं स्यात् तदेव पितृसज्ञकम् ।
दशम कर्मसज्ञ स्याल्लाभमेकादश तथा ॥ १० ॥
द्वादशञ्च व्ययस्थानमिति भावा. प्रकीर्त्तिताः ।
तेषा मध्ये भावपञ्च दु खदायीति कथ्यते ॥ ११ ॥
[4]लाभ तृतीय रन्ध्रञ्च शत्रुस्थान व्यय तथा ।
**एतद्योगेन** यो भावस्तन्नाश प्राप्नुयाद् ध्रुवम् ॥ १२ ॥
[5]चत्वारो राशयो भद्रा केन्द्रकोणशुभावहा ।
तेषा सयोगमात्रेण अशुभोऽपि शुभो भवेत् ॥ १३ ॥
[6]केन्द्राश्चतस्रो विख्याता ऋषिभि. परिकीर्त्तिता ।
तेषा मध्ये तु शुभदौ **कर्मबन्धुभसंज्ञकौ** ॥ १४ ॥
तावेव योगकर्तारौ शेषौ तु फलभागिनौ ।
[7]लक्ष्मीस्थान त्रिकोण स्याद् विष्णुस्थान तु केन्द्रकम् ॥
तेषा सयोगमात्रेण चक्रवर्ती नृपो भवेत् ॥ १५ ॥
लग्नाधिपोऽपि बलवानशुभैरदृष्ट केन्द्रस्थितै शुभखगैरवलोक्यमान' ।
[8]दोषानपोह्य सकलानपि भाग्यतश्च दीर्घायुराशिर (सु ?) भवेच्च नवेशयोगात् ॥१६॥

---

१. द्रष्टव्यं मध्यपाराशर्याम् ( १।१० ) ।
२. परीक्षेत इति ग० पु० पाठ ।
३. द्र० मानसागरी ( श्रीपतिपद्धत्यनुसारेण भावचक्रानयने ५ श्लो० ) ।
४ द्र० मध्यपाराशरी ( १।११ ) **'येषां योगेन'** इति पाठ ।
५. ,, ,, ( १।१२ ) ।
६. ,, ,, ( १।१३ ) । **'कर्मबन्धू विशेषतः'** इति पाठः ।
७. ,, ,, ( १।१६ ) ।
८. "मृत्यु विधूय विदधाति स दीर्घमायु सार्धं गुणैर्बहुभिरूर्जितराजलक्ष्म्या ।"
इति पाठान्तरं जातकपरिजाते ( ४।८३ ) ।

लग्नाधिप कोणपसयुतश्चेद् ददाति सौभाग्यमतीव कीर्तिम् ।
साम्राज्यलाभञ्च सुधर्मलाभ दीर्घायुराप्तिश्च सदा नराणाम् ॥१७॥
लग्नाधिपो रन्ध्रपसयुतश्चेदल्पायु रैश्वर्यविनाशनञ्च ।
शुभैरदृष्टो यदि पापदृष्ट. करोति जात न चिरायुषञ्च ॥१८॥
[1]सुतमदननवान्त्यरन्ध्रलग्नेष्वशुभयुतो मरणाय शीतरश्मि ।
भृगुसुतगुरुसौम्यचन्द्रदृष्टो यदि न भवेच्च चिर प्रशान्तचित्त ॥१९॥

लग्ने राहु स्थितो यस्य लग्नपेन युतोऽपि वा ।
चन्द्रेण सयुतश्चापि भूतग्रहवश नयेत् ॥२०॥
तत्तद्भावार्थकामेशो रन्ध्रलाभैर्युतो यदि ।
ईक्षितो वापि तत्पाके मरण प्राप्नुयाद् ध्रुवम् ॥२१॥

धनाधिप कोणपसयुतश्चेन्महाधनी भूपतिभाग्ययोग ।
दयानुकम्पी[2] बहुपोषकश्च विद्याधिको मन्दिरसौख्यवाश्च ॥२२॥
त्रिकोणपौ यदान्योन्य सयुतौ वीक्षितो [तावपि] पि वा ।
तत्काले श्रियमाप्नोति [3]केन्द्रपेण विशेषत ॥२३॥

दुष्टभावपसयागे एतेषा मिश्रमाप्नुयात् ।
[4][त्रिकोणपाभ्या योगेन एतेषा मिश्रमाप्नुयात्] ॥२४॥
त्रिकोणपाभ्या योगेन कर्मप उच्चसंस्थित ।
यदि स्याद् राजराजेन्द्रो भवत्येव न सशय ॥२५॥

त्रिकोणपाभ्या यदि बन्धुनाथो युतोऽपि वा दृष्टियुतोऽपि वा स्यात् ।
साम्राज्यलक्ष्मी लभते मनुष्यो विद्याधिको [5]मन्दिरसौख्यवाँश्च ॥२६॥

मातृसौख्यप्रदश्चैव बन्धुपोषणतत्पर ।
गृहसौख्यप्रदश्चैव भोगवाँश्च[6] जितेन्द्रिय. ॥२७॥
केन्द्राधिप कोणपेन सयुतो वीक्षितोऽपि वा ।
अमात्ययोगो[7] विख्यातस्तत्काले[8] श्रियमाप्नुयात् ॥२८॥

योगकाले उच्चभागे खेचरो यदि सस्थित ।
तद्योग पूर्णयोग. स्यान्न्यूने न्यूनत्वमाप्नुयात् ॥२९॥

---

१. द्र० जा० पा० ( ४।३८ ) ।
२. नुकम्पा क० पु० पाठ ।
३. पेन क० ख० पु० पाठ ।
४ कोष्ठान्तरगतोऽश ख० ग० पु० नास्ति ।
५. 'वाहनभाग्यवाँश्च' इति ख० ग० पु० पाठ ।
६. 'भोग्यवान् स जितेन्द्रिय ' इति ख० पु० पाठ ।
७. 'अमात्ययोगे' इति क० पु० पाठ ।
८ तत्पाके ख० ग० पु० पाठः ।

कोणपाभ्या केन्द्रपाभ्या योगोऽयं सार्वभौमिक. ।
तस्मिन् जातो दासपुत्र' सार्वभौमो भविष्यति ॥३०॥
यस्मिन् भावे तु योग स्यात् तदधोशस्तु योगतः ।
तत्पाके श्रियमापन्नो भवत्येव न संशय ॥३१॥
रन्ध्राधिपस्तु यं भावमीक्षितो [क्षते] सँस्थितोऽपि वा ।
[1]तद्भावपस्य दाये तु [2]शत्रुवृद्धिर्नृपाद् भवेत् ॥३२॥
लाभाधीशयुतो वापि ईक्षितो वापि कामप ।
तत्पाके मृत्युमाप्नोति [3]रन्ध्रपेण युतोऽपि वा ॥३३॥
धनाधिपो नीचगतो रन्ध्रलाभौ न ईक्षित [क्षते] ।
कामपस्तु तथैव स्यान्मृत्युमाप्नोति निश्चितम् ॥३४॥
पितृभावो मातृभाव पुत्रभावस्तथैव च ।
य सर्वेषा भावपानामेनन्मात्रेण [4]निश्चयेत् ॥३५॥
आदित्यादिग्रहा सप्त एते योगाधिपा स्मृता. ।
राहुकेत्वोस्तथा नास्ति सयोगेन फलन्ति हि ॥३६॥
छायाग्रहौ राहुकेतू शुभयोगे श्रिय भवेत् ।
पापयोगे तु पाप.[5] स्यादिति शास्त्रार्थनिर्णय ॥३७॥
[6]विहगो राजयोगस्थो [7]राहुदृष्ट्या स्थितो यदि ।
अत्यन्तं श्रियमाप्नोति राहुपाके न सशय ॥३८॥
[8][विहगा पापयोगस्था राहुदृष्ट्या स्थिता यदि । ]
राहुपाके दु खवन्तो भवन्त्येव न सशय ॥३९॥
[9]राहुकेत्वोश्च सयोगे [10]दृष्टियोगो न जायते ।
[11]धनाधिपो बलेनापि फलं [12]प्राप्नोत्यसशय ॥४०॥

---

१. तद्भाव यस्य दा '' इति क० पु० पाठ. ।
२. नृपो इति ख० ग० पु० पाठ ।
३. पेन इति क० पु० पाठ. ।
४. निश्चियेदिति ख० पु० पाठ. ।
५. पापा इति ख० पु० पाठ' ।
६. विहगो इति ख० पु० पाठ. ।
७. राहु दृष्ट्वा ख० पु० पाठ' ।
८. कोष्ठान्तरगतोऽश ख० पु० नास्ति ।
९. पद्यमिदं ख० पु० नास्ति ।
१०. दृष्टियोगेनेति ग० पु० पाठ. ।
११. धनाधिपे इति ग० पु० पाठः ।
१२. प्नोति न संशयः इति ग० पु० पाठ ।

राहुप्रतिमया प्रोक्त [क्त] केतोरपि तथैव च ।
उभयो ग्रहसयोगे फल निश्चिनुयाद् बुधः ॥४१॥
त्रिकोणपेन संयोग विना श्रेयो न विद्यते ।
एकेन वा कोणपेन द्वाभ्या वा यस्तु भावप. ॥
तद्भावपस्य दाये तु शत्रुवृद्धि. [1]प्रजायते ॥४२॥
यद्भावस्था रन्ध्ररि.फारिनाथा यद्भावेशा रन्ध्ररि.फारियाता ।
तेषामीशा [2]सयुताश्चाथ [3]दृष्टास्तत्तद्भाव नाशतामेति नित्यम् ॥४३॥
धनस्थानगते राहौ तदीशे शत्रुभे स्थिते ।
तस्मिन् दाये तु [4]हानि स्यात् पशुधान्यधनानि च ॥४४॥
यस्मिन् भावाधिपे उच्चे तद्भावो वृद्धिमाप्नुयात् ।
यस्मिन् भावाधिपे नीचे तद्भाव नाशमाप्नुयात् ॥४५॥
नीचस्थितो जन्मनि यो ग्रह [5]स्यात् तद्राशिनाथस्य च [6]दायकाले ।
तद्भावनाश कथयन्ति तज्ज्ञा पापेक्षित पापसमन्वितो वा ॥४६॥
भावयोगाश्च कथिता· मया देवि सुनिश्चिता ।
[7]तत पर पृच्छसि किं तद् वस्व शुभानने ॥४७॥

**श्रीदेव्युवाच**

नमस्ते देवदेवेश [8]सर्वलोकैकपूजित ।
एतेषा [9]भावयोगाना दशा या [का] फ·दा स्मृता ॥४८॥

**ईश्वर[10] उवाच**

शृणु देवि प्रवक्ष्यामि सर्वलोकोपकारिणि ।
दशाश्च बहव सन्ति केन्द्रकोणक्षपादय ॥४९॥
तेषा[11] मध्ये ऋक्षदशा शुभदा फलदा स्मृता ।
य खगो योगकर्त्ता स्याद् दशा तस्य शुभप्रदा ॥५०॥

---

१. न जायते इति ख० पु० पाठ ।
२. सयुतो चाथ क० पु० पाठ ।
३. भावो इति ख० पु० पाठ ।
४. धनादिनामिति ख० पु० पाठ. ।
५. भावनाथस्येति ख० पु० पाठ. ।
६. दाहकाले इति ख० पु० पाठ ।
७. इतः इति ख० पु० पाठ· ।
८. पूजितमिति क० पु० पाठ ।
९. योगार्को क० पु० पाठ. ।
१०. महादेव इ० खपु० भगवानिति ग० पु० पाठः ।
११. पद्यमिद कपु० नास्ति ।

तस्माद् बल ग्रहाणाञ्च सम्यक् संशोध्य बुद्धिमान् !
कृत्तिकादीनि ऋक्षाणि सूर्यादीना दशाः स्मृता ॥५१॥
तेषा योगविशेषेण फल प्राप्नोत्यसंशयम् ।
[1]राहुकेत्वोश्च सयोगे दृष्टियोगेन जायते ॥५२॥
स्थानाधिपबलेनापि फल प्राप्नोत्यसंशयम् ।
राजग्रहौ सूर्यचन्द्रावमात्यो भौम एव च ॥५३॥
लिपिलेख्यादिभि सौम्यो गुरुर्मन्त्री विचारतः ।
भार्गवोऽत्यन्तभोगी स्याच्छनि सेव्याधिपो भवेत् ॥५४॥
यस्य[2] राज्ञ राजयोगो [गे] न्यूनत्व तु [न] प्रजायते ।
तद्योगः पूर्णफलदो ह्यन्येषा दुर्बलो[3] भवेत् ॥५५॥
राश्यादौ योगपति नरेन्द्र[4] प्रतिपद्यते ।
मध्ये मण्डलनाथ ग्रामपतिं चैव भवनान्ते ॥५६॥
अस्तगो यो खगो वापि राहुग्रस्तो यदा भवेत् ।
तत्पाके भावनाश स्यादिति शास्त्रार्थनिश्चयम् ॥५७॥
भावेशाक्रान्तराशीश उच्चस्थ शुभवीक्षित. ।
तद्भावपस्य दाये तु राज्य भवति निश्चितम् ॥५८॥
भावेशाक्रान्तराशीशो नीचगोऽस्तङ्गतोऽपि वा ।
पापैर्निरीक्षितो वापि तद्भाव नाशमाप्नुयात् ॥५९॥
भावेशाक्रान्तराशीशो राहुग्रस्तो यदा भवेत् ।
तत्पाके मृत्युमाप्नोति भावहानिश्च[5] जायते ॥६०॥
यद्भावे[6] रन्ध्रपे दुष्टे[7] तत्पतिर्नीचसंस्थित ।
तत्पाके भावनाशश्च भवत्येव न सशय ॥६१॥

नीचस्थितो जन्मनि यो ग्रह. स्यात् तद्राशिनाथो यदि स्वोच्चसंस्थ. ।
तन्नीचपाके सुखमेति नित्य[8] तेनेक्षितो वापि समन्वितो वा ॥६२॥
उच्चस्थितो जन्मनि यो ग्रह स्यात् तद्राशिनाथो यदि नीचसंस्थ ।
तदुच्चपाकेष्वशुभ प्रयाति भावेक्षितो वापि विशेषत. स्यात् ॥६३॥

---

१. पद्यमिदं गपु० नास्ति ।
२. 'यस्य राजामचलतो न्यूनयोगेन जायते' इति कपु० पाठ. । राजा तत्तोन्याश्च खपु० पाठ. ।
३. स्वल्पदो इति कपु० पाठ. ।
४. नरेन्द्रदडयदिद्यते कपु०, दण्डपतिद्यममिति खपु० पाठ. ।
५. भावनाशश्च इति खपु० पाठः ।
६. तद्भावे इति कपु० पाठः ।
७. दृष्टे इति खपु० पाठ ।
८. सत्यमिति ख० ग० पु० पाठः ।

सप्तमाधिपतौ नीचे रन्ध्रपेण च वीक्षिते ।
तत्पाके मृत्युमाप्नोति भवत्येव न संशय: ॥६४॥
य. खगो दुष्टभावेशो योगदश्च समाश्रित. ।
तत्पाके श्रियमाप्नोति[१] सर्वारिष्टविनाशिनीम् ॥६५॥
य. खग. शुभभावेश पापयुक्तेक्षितोऽपि वा ।
तत्पाके राज्यनाश. स्याद् देहनाशश्च जायते ॥६६॥
संयोगो द्विविध: प्रोक्तो [क्त] ईक्षित. सयुतोऽपि वा ।
तयोर्मध्ये तु फलद पापानामीक्षणं परम् ॥६७॥
शुभाना संयुतं श्रेष्ठम् इति शास्त्रविदो विदु. ।
बालारिष्टाश्च बहव. सन्ति लोके मनीषिणाम् ॥
तेषा योगानह[२] वक्ष्ये सावधानेन तच्छृणु ॥६८॥
लग्नाधिपो रन्ध्रपसयुतश्चेन् तृतीयरन्ध्राधिप [ज ?] भावपानाम् ।
द्विसप्तमैकादशभावपाना पाके मृति सिद्धिमुपैति जन्तुम्[३] ॥६९॥
तत्तत्स्थानगतानाञ्च[४] पाके च मरणं भवेत् ।
तेषाञ्च शुभसयोगे आयुर्वृद्धि. प्रजायते ॥७०॥
शैशवावस्थकाले[५] तु स्वप्नदोषश्च हानिकृत्[६] ।
इतरावस्थकाले तु रोगरूपेण बध्यते[७] ॥७१॥

॥ इति श्रीउमामहेश्वरसंवादे जातकसार. सम्पूर्ण. ॥

---

१. मृत्युमा''''इति खपु० पाठ. ।
२. योगानि वक्षेऽहमिति ख० ग० पु० पाठ ।
३. जन्तून् खपु० पाठ. । जन्तु: गपु० पाठ: ।
४. तज्ज्ञानगता ''इति कपु० पाठ ।
५. वस्तकाले कपु० पाठ ।
६. नाशकृत् गपु० पाठ ।
७. बाध्यते इति क० ख० पु० पाठ. ।

• • •

पञ्जीकरणसंख्या—६६८१।५७

# सारस्वती सुषमा

## सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका ।

२. अस्याः प्रकाशनं प्रतिवर्ष ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति ।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति ।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते ।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति ।

६. अस्यां पत्रिकायां विशिष्टाना हिन्दीसस्कृताङ्ग्लग्रन्थानां समालोचना प्रकाश्यन्ते । तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये ।

७. 'कुलसचिव, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, वाराणसी-२२१००२ (उ०प्र०) इति सङ्केतेन ('बैंकड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम् ।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-सस्कृत-विश्वविद्यालय, वाराणसी—२२१००२ (उ० प्र०) इति सङ्केतेन विधेय. ।



प्रकाशकः—सञ्चालकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय,
वाराणसी-२२१००२ (उ० प्र०)
मुद्रकः—तारा प्रिंटिंगवर्क्स, कमच्छा, वाराणसी ।

# सुसंग्राह्याः केचन वेद-वेदाङ्गग्रन्थाः




प्रकाशकः—निदेशक., अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय., वाराणसी–२२१००२

मुद्रक —मुद्रणालय-व्यवस्थापक., सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी–२२१००२